सूत्रार्थे व्याघातो[१] दोषः। यदि पूर्वं ज्ञानं नेन्द्रियार्थसन्निकर्षस्तस्य कारणमिति। यदुक्तम्

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम्**

इति, तद् व्याहन्यते ॥९॥

**पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ॥२।१।१०॥**

**पश्चात्सिद्धाविति** सूत्रम्। न प्रमाणनिमित्ता प्रमेयसंज्ञेति व्याहतम्[२]। [३]प्रमाणमन्तरेण प्रमेयमात्मानं लभत इति न प्रमाणायत्ता प्रमेयसिद्धिः॥१०॥

**युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् ॥२।१।११॥**

**युगपत्सिद्धाविति** सूत्रम्। इन्द्रियार्थानां बुद्धीनां च सन्निपाते सति युगपद्भावे सति[४] क्रमवृत्तित्वं दृष्टं न स्यादिति व्याघातो दोषः। अयुगपज्ज्ञानोत्पत्तिरिति चोक्तम्[५]। तद् व्याहन्यत इति। अत्र समाधिः। उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमादिति वाक्यस्यासिद्धतोद्भावनमर्थः। प्रत्यक्षादीनामप्रामाण्यमिति च प्रतिज्ञापदयोर्व्याघातः। प्रत्यक्षादीनि नार्थं साधयन्तीत्ययमर्थः। अयं च व्याहतः। कथमिति? प्रत्यक्षादीनि च नार्थं साधयन्तीति च यथेदं वस्तु नोपलभ्यत इति। इदं च नोपलभ्यते चेति व्याघातः। एवं प्रत्यक्षादीनि च नार्थं साधयन्तीति च। कथं चान्यथा प्रत्यक्षादीनि? न ह्येते प्रत्यक्षादिशब्दा अर्थसाधकभावमन्तरेण[६] कृतार्था भवन्तीति।

---

१. सूत्रार्थव्याघातो J २. व्याघातः C ३. न प्रमाण० C ४. ०द्भाव इति C
५. युगपज्ज्ञानानुत्पत्तिरिति C ६. अर्थासाधकत्वेन C

धर्मप्रतिषेधाच्च प्रत्यक्षाद्यभ्युपगमः। प्रत्यक्षादीनामप्रामाण्यमित्येवं ब्रुवता न प्रत्यक्षादीनि प्रतिषिद्धानि, अपि तु प्रमाणत्वं धर्म इति। अथ भावस्यास्वतन्त्रत्वात् तान्यपि प्रतिषिद्धानि, प्रत्यक्षादीनामप्रामाण्यमिति भावाभिधानमेतत्। अस्वतन्त्रश्च भाव इति भावप्रतिषेधात् तद्वतां प्रतिषेध इति? एवमप्यनिवृत्तो व्याघातः। प्रत्यक्षादीनामभावः प्रतिपाद्यः। प्रत्यक्षादीनि च न सन्तीति केनाभावं प्रतिपादयसि? न हि प्रत्यक्षाद्यभावे अन्यः प्रतिपादनोपायः कश्चिदस्तीति।

विशेषप्रतिषेधाच्च प्रमाणान्तराभ्यनुज्ञा। प्रत्यक्षादीनामप्रामाण्यमित्येवं ब्रुवता प्रत्यक्षादिव्यतिरेकि प्रमाणमभ्यनुज्ञातं भवति, व्यर्थं वा विशेषणं प्रत्यक्षादीनामप्रामाण्यमिति। अथ न प्रमाणान्तरमभ्यनुज्ञायते, किमस्य विशेषणस्य सामर्थ्यं प्रत्यक्षादीनि न प्रमाणानीति? नैव प्रमाणानि सन्तीत्येवं वक्तव्यमिति। एतदपि व्याहतम्। प्रमाणानि नैव सन्ति, प्रतिपादयसि चेति। यदपि तत्प्रमाणान्तरमभ्यनुज्ञेयम्[१], तत्रापि त्रैकाल्यासिद्धेरित्ययमनुषक्तो हेतुः। यच्च त्रिष्वपि कालेषु न प्रतिपादयति कथं तस्य प्रमाणत्वमित्यनिवृत्तो व्याघातः। अथ धर्मप्रतिषेध एवायम्? तथापि यानि तानि प्रामाण्यव्यतिरिक्तानि प्रत्यक्षादीन्यभ्यनुज्ञायन्ते राजपुरुषप्रतिषेधन्यायेन, तेषां कः स्वभाव इत्यनिवृत्तोऽनुयोगो व्याघातश्च । अर्थान्तरानभ्युपगमे च षष्ठ्यास्तद्धितस्य चार्थो वक्तव्यः। यदि प्रत्यक्षादिव्यतिरिक्तं न प्रामाण्यमस्ति प्रत्यक्षादीनामिति कः षष्ठ्यर्थः? अतोऽवश्यं विधीयमानः प्रतिषिद्धमानो वा धर्मोऽभ्युपेयः। तदभ्युपगमे च प्रत्यक्षादीनां पृथक् स्वरूपं वक्तव्यमित्यनिवृत्तो व्याघातः। एतेन तद्धितार्थो व्याख्यातः।

यश्चायं हेतुः त्रैकाल्यासिद्धेरिति, अयमपि व्यधिकरणस्त्रिकालविषयत्वादिति[२]। त्रिकालस्य भावस्त्रैकाल्यम्। तस्यासिद्धिरिति न प्रमाणधर्मः। अथायमर्थः, त्रिष्वपि कालेषु प्रमाणानि नार्थं साधयन्तीति, तथापि हेत्वर्थो नास्ति

---

१. °भ्यनुज्ञायते C　　२. त्रैकाल्य° C

प्रतिज्ञार्थेनाक्षिप्तत्वात्। य एव प्रतिज्ञार्थो न प्रमाणान्यर्थं साधयन्तीति, स एव हेत्वर्थः त्रिष्वपि कालेषु नार्थं साधयन्तीति।

यत् पुनरेतत् प्रमाणेन प्रमीयमाणोऽर्थः प्रमेयमित्येवं[१] भवतीति समाख्याहेतोः त्रैकाल्ययोगादप्रतिषेधः। प्रमाणमिति प्रमेयमिति चास्याः समाख्याया निमित्तं त्रैकाल्ययोगि, प्रमास्यते प्रमीयते प्रामायि वा[२] अनेनेति प्रमाणम्। प्रमास्यते प्रमीयते प्रामायि वेति प्रमेयम्। एवं च सति प्रमास्यते अयमर्थो भविष्यत्यस्मिन् हेतुत उपलब्धेरिति प्रमेयमित्येतत् सिध्यति। अनभ्यनुज्ञाने च व्यवहारानुपपत्तिरिति विरोधो दोषः। यश्च त्रैकालिकं प्रमाणप्रमेयव्यवहारं न प्रतिपद्यते तस्य पाचकमानय इत्येवमादिलोकव्यवहारो विरुध्यते।

**प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः**

इत्येवमादि वाक्यं प्रमाणप्रतिषेधः। अथानेन प्रत्यक्षादीनां किं क्रियते? किं संभवो निवर्त्यते, अथासंभवो ज्ञाप्यत इति? किं चातः? यदि तावत् संभवो निवर्त्यते तत्र युक्तं व्याघातात् प्रतिषेधार्थापरिज्ञानाच्च। संभवो निवर्त्यत इत्येवं ब्रुवाणेन प्रमाणान्यभ्युपगतानि भवन्ति। न ह्यसतो निवृत्तिः[३]। न च प्रतिषेधस्यैतत् सामर्थ्यं यद् विद्यमानं पदार्थमन्यथा कुर्यात्। ज्ञापकत्वाच्च न संभवनिवृत्तिः। ज्ञापकोऽयं प्रतिषेधो न संभवनिवर्तक इति। [४]अथासंभवो ज्ञाप्यत इति चेत्[५]? प्रमाणलक्षणप्राप्तस्तर्हि प्रतिषेधः। अतो व्याघात इति प्रमाणानि नार्थं साधयन्तीति प्रतिषेधस्य प्रमाणलक्षणाभ्यनुज्ञानादिति[६] ॥११॥

## त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः॥२।१।१२॥

एवं च-**त्रैका....पत्तिः**। इति। अयमपि प्रतिषेधः त्रिष्वपि कालेषु नोपपन्न

१. °मिदमिति C   २. प्रमितः प्रतीयते J   ३. °त्तिर्भवतीति C   ४. अथ om J
५. चेत् om C   ६. अतो...ज्ञानादिति forms a portion of N. Var. II 1.12 in J.

इत्ययं सूत्रार्थः[१]। त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिरित्येवमभिदधानेन अभ्युपगतं भवति प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरिति। नैष दोषः, तस्य स्ववचनव्याघात-चोदनात्। स्ववचनव्याघातो मया चोद्यते, नाभ्युपगम्यते। कथमिति यत् खलु त्रिष्वपि कालेष्वसाधकं तदसाधनमिति ब्रुवता प्रतिषेधस्यासाधकत्वं स्ववा-चैवाभ्युपगतं भवति। यथा नाम कश्चित् स्वाङ्गुलिज्वालया परं दिधक्षुः स च परं दहेन्मा वा स्वाङ्गुलिदाहं तावदनुभवतीति।

यश्चायं प्रतिषेधः प्रत्यक्षादीनि नार्थं साधयन्तीति, किमयं प्रत्यक्षादीनां सामर्थ्यप्रतिषेधः, उत सत्ताप्रतिषेधः? यदि सामर्थ्यप्रतिषेधः, न प्रत्यक्षादीनि प्रतिषिद्धानि। तेषां च सामर्थ्यप्रतिषेधात् अन्यत् प्रत्यक्षादीनां स्वरूपं वक्तव्यमिति पूर्ववत् प्रसङ्गः। अथ सत्ताप्रतिषेधः, तत्रापि कथं न सन्तीति किं सामान्यतोऽथ विशेषत इति? यदि सामान्यतः प्रत्यक्षादिग्रहणं व्यर्थम्। एवं वक्तव्यं न प्रमाणानि सन्तीति। न च धर्मिणां प्रतिषेधे कश्चित् न्याय इति। अथ विशेषप्रतिषेधः, तथापि प्रमाणान्तराभ्युपगमः। न ह्यनभ्युपगतसामान्यस्य विशेषप्रतिषेधोऽवकाशं लभते।

प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः प्रत्यक्षादीनां प्रामाण्यं त्रैकाल्यसिद्धे-रिति च वाक्ययोरेकार्थता वा स्यात्, भिन्नार्थता वा? यद्येकार्थता, प्रत्यक्षादीनां प्रामाण्यं त्रैकाल्यसिद्धेरित्येवमेव वक्तव्यम्, अभिन्नार्थे एते वाक्ये इति च कुतः प्रतिपत्तिः? यदि प्रमाणतः, अनिवृत्तो व्याघातः। अथान्यतः, तत् प्रमाणमिति संज्ञाभेदमात्रम्। अथ भिन्नार्थे तत् केन ज्ञातं त्रैकाल्यासिद्धेः त्रैकाल्यसिद्धेरिति चानयोर्वाक्ययोर्भिन्नोऽर्थ इति। प्रत्यक्षादीनि न सन्तीति च नास्तिना समानाधिकरणः प्रत्यक्षादिशब्दो न प्रत्यक्षादीनामभावं शक्नोति प्रतिपादयितुम्[२]। न ह्ययं नास्तिना घटशब्द समानाधिकरणो घटाभावं प्रतिपादयति, अपि तु गेहघटसंयोगं वा सामर्थ्यं वा कालविशेषं वा घटस्य प्रतिषेधति। एवमनेनापि प्रमाणसमानाधिकरणेन नास्तिना प्रमाणानां नाभावः शक्यः प्रतिपादयितुम्। अपि त्वनेनापि, तन्त्रान्तरा-

---

१. अतो.....ज्ञानादिति inserted here in J. २. वक्तुम् C

भ्युपगतानां वा प्रतिषेधः, सामर्थ्यप्रतिषेधो वा, कालविशेषे वा प्रतिषेध इति सर्वथा प्रमाणान्यभ्युपगतानि भवन्ति। तानि चाभ्युपगतान्यनेन प्रतिषेधेन प्रतिषिध्यन्त इति व्याघातः। प्रमाणानां चासत्त्वं प्रतिपाद्यमानं कथं प्रतिपाद्यते? कस्य प्रतिपाद्यते? कश्च प्रतिपादयिता? अप्रतिपन्नः प्रतिपाद्यते[1]। प्रतिपन्नश्च प्रतिपादयति। केन प्रतिपन्नः? यदि प्रमाणेन, व्याघातः, प्रमाणानभ्युपगमात्[2]। अथान्यथा, न दृष्टान्तोऽस्ति। प्रतिपाद्यप्रतिपादकयोश्च भेदाभ्युपगमे व्याघातः। यदि प्रतिपाद्यं प्रतिपादयितारं च भेदेन प्रतिपद्यते[3], भेदप्रतिपादकप्रमाणाभ्युपगमात् व्याघातः। अथ भेदं न प्रतिपद्यसे, क्व किं प्रतिपाद्यत इत्यनिवृत्तो व्याघातः। प्रमाणानि न सन्तीति प्रतिजानानः पर्यनुयोज्यः, कथं न सन्तीति? यदि प्रमाणं ब्रवीति, व्याघातः। अथ न ब्रवीति, अर्थोऽस्य न सिध्यति। तदेवमेतद् वाक्यं यावद् यावद् विचार्यते, तावत् तावत् प्रविलीयत इति ॥१२॥

## सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥२।१।१३॥

त्रैकाल्यासिद्धेरित्यस्य हेतोरुदाहरणमुपादीयते न वा? यद्युपादीयते, तदा व्याघातो भवति। प्रत्यक्षादीनां चाप्रामाण्याभ्युपगमादुपादीयमानमपि नार्थं साधयतीति व्यर्थम्[4]। अथ साधयति, व्याघातः। अथ नोपादीयते, अप्रदर्शितं हेत्वर्थस्य साधकत्वमिति। अनुपसंहृतश्च हेतुर्दृष्टान्ते[5] न साधक इति। सोऽयं हेतुः सर्वैः प्रमाणैर्विप्रतिषिद्धो विरुद्धो भवति

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः**

इति। वाक्यार्थो ह्यस्य सिद्धान्तः। स च वाक्यार्थः प्रमाणानि नार्थं साधयन्तीति। इदं च प्रमाणानामुपादानमर्थसाधनाय

१. इति व्याघातः। प्रमाणानभ्युपगमात् J adds  २. प्रमाणानभ्युपगमात् om J
३. ॰पद्यसे C  ४. व्यर्थम् om C  ५. दृष्टान्ते om C

**प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः**

इति। बुद्धिविवक्षाप्रयत्नवायूदीरणताल्वभिघातौष्ठप्रस्पन्दादीनवर्जयन् बुद्ध्या वाक्यमुच्चारयसि, स्थाणुकण्टकसर्पादींश्च परिहरन् पादविहरणादि करोषि। ते एते वाक्यप्रवृत्ती प्रमाणप्रतिषेधान्न संभवत इति॥१३॥

**तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः॥२।१।१४॥**

अथ स्ववाक्याश्रितप्रमाणव्यतिरेकेण प्रमाणानि प्रतिषिध्यन्ते, एवं च सति न सर्वं प्रमाणं प्रतिषिद्धं भवति। यश्च न्यायः स्ववाक्याश्रितप्रमाणाभ्युपगमे स एवान्यवाक्याश्रितप्रमाणाभ्युपमेऽपीति। वीत्ययमुपसर्गो विशेषप्रतिषेधे न व्याघाते। किमुक्तं भवति? कानिचित् प्रमाणानि प्रतिषिध्यन्ते, कानिचिदभ्यनुज्ञायन्त इति। यानि स्ववाक्याश्रितानि तान्यभ्यनुज्ञायन्ते। यानि परवाक्याश्रितानि तानि प्रतिषिध्यन्त इति। यच्चेदं वाक्यम्

**प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः**

इति, किमिदं प्रमाणस्वरूपमथ न[१]? यदि प्रमाणस्वरूपम्, तदा व्याघातः। अथ न, तथापि नानेन कश्चिदर्थः प्रतिपाद्यत इति व्यर्थम्॥१४॥

**त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत् तत्सिद्धेः॥२।१।१५॥**

**त्रैका...वत्** इति सूत्रम्। यत्तत् पूर्वमुक्तमुपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद् यथादर्शनं विभागवचनमिति तदुत्थानज्ञापनार्थमिति। इतः सूत्रान्तस्योत्थानमिति[२]। कस्मात् पुनस्तत्रैवेदं सूत्रं नोक्तमिति?

---

१. °स्वरूपमथ नेति C २. न्तरस्योत्था° C var.

अविशेषात्। तत्र वाभिधीयत इह वा न कश्चिद् विशेष इति, सर्वथा तावदयमर्थः प्रकाशयितव्य इति। एकां च विधामुदाहरति— शब्दादातोद्यसिद्धिवदिति। शेषयोस्तु विधयोर्यथोक्ते उदाहरणे वेदितव्ये। यथा पूर्वसिद्धमातोद्यं पश्चात्सिद्धेन शब्देनानुमीयते, वीणा वाद्यते वेणुः पूर्यत इति। योऽसौ वीणावेणुशब्दयोरसाधारणो धर्मो वीणादिनिमित्तकत्वम्, तदुपलभमानः शब्दस्य वीणाशब्दो वेणुशब्द इति प्रतिपद्यते पूर्वसिद्धमातोद्यं पश्चात्सिद्धः शब्द इति। सहभावे उदाहरणम्— धूमदर्शनादग्निं धूमविशेषणं प्रतिपद्यते। पूर्वसिद्ध उपलब्धिहेतुरादित्यः पश्चात्सिद्धानां[१] घटादीनां प्रकाशक इति॥१५॥

**प्रमेया च तुलाप्रामाण्यवत्॥२।१।१६॥**

प्रमाणं प्रमेयमिति चेयं समाख्या समावेशेन वर्तते समाख्यानिमित्तवशात्। समावेशोऽनियमः। समाख्यानिमित्तवशात् समाख्यानिमित्ततन्त्रत्वादिति। प्रमाणप्रमेयसंज्ञयोर्निमित्तमुपलब्धिसाधनत्वमुपलब्धिविषयत्वं च। यदा पुनरेकं वस्त्वनेकनिमित्तसंबन्धि भवति, तदा कथम्? तदा निमित्ततन्त्रत्वात् समाख्यायास्तद्वस्तु अनेकेन निमित्तेन संबन्धे सत्यनेकशब्दाभिलाप्यम्। अस्य चार्थस्य ज्ञापनार्थं सूत्रम्—

**प्रमेया...वत्** इति। किमुक्तं भवति? यथा गुरुत्वपरिमाणज्ञानसाधनं तुलाद्रव्यं समाहारगुरुत्वस्येयत्तापरिच्छेदनिमित्तत्वात् प्रमाणम्, सुवर्णादिना च परिच्छिद्यमानेयत्तैषा तुलेति परिच्छेदविषयत्वेन व्यवतिष्ठमाना प्रमेयम्। उदाहरणमात्रं चैतत्। एवमनवयवेन तन्त्रार्थो वेदितव्यः। यथा च प्रमाणप्रमेयसमाख्ये तथा सर्वे कारकशब्दाः निमित्तसमावेशनियमेन[२] वर्तन्ते। तथा च लौकिकमुदा-

---

१. °सिद्धादीनां J  २. निमित्तनियमान्नियमेन J

हरणम्। एकमनेकेन कारकशब्देनाभिधीयते। वृक्षस्तिष्ठतीति स्वस्थितौ स्वातन्त्र्यात् कर्ता। किं पुनर्वृक्षस्य स्वस्थितौ स्वातन्त्र्यम्? कारकान्तरानपेक्षित्वम्। न हि वृक्षस्तिष्ठन् स्वस्थितौ कारकान्तरं प्रयुङ्क्ते। यदायं स्थितिशब्दो गतिप्रतिषेधवचनो भवति तदैवम्। यदाप्यस्तेरभिधायकः, तदाप्यस्तेर्व्यक्तिनिमित्तत्वेनावतिष्ठमानोऽस्ति व्यनक्तीति कर्तेत्युच्यते। यदापि गेहसंबन्धाद्यभिधायको भवत्यस्तिशब्दः, यथा देवदत्तो गेहे तिष्ठतीति प्रतिनिर्दिष्टेऽस्तीति गम्यते तदा न सत्तामाह न गतिप्रतिषेधम्, अपि तु देवदत्तगेहसंबन्धम्, तदापि देवदत्तगेहसंबन्धानुभवक्रिया। तस्यामपि न कारकान्तराणि प्रयुङ्क्त इति स्वतन्त्रो भवति। यदाप्ययमभग्नवचनः स्थितिशब्दः, तिष्ठति वृक्षो न भग्न इति, तदापि स्वस्थितौ न कारकान्तरं[१] प्रयुङ्क्त इति स्वतन्त्रो भवति। समुदायैकदेशं वा स्वस्थितौ प्रयुङ्क्ते वृक्षो मूलैस्तिष्ठति, प्रासादः स्तम्भैर्ध्रियत इति। पूर्वापरप्रत्ययैकविषयता वा स्थितिः। यद्वस्तु प्राक् प्रसिद्धं पुनर्निमित्तान्तरसन्निपाते[२] सत्युपलभ्यते यत् तस्यानेकायुगपत्कालप्रत्ययविषयत्वं सा स्थितिः।

तस्यां स्थितावस्य यत् सहकारि साधनं चक्षुरादि तत् करणमिति। चक्रभ्रान्तिप्रदीपप्रत्ययवत् मिथ्याप्रत्ययः स इति चेत्-न, प्रमाणाभावात्[३]। अथ मन्यसे नैव किञ्चिद् वस्तु अयुगपत्कालानेकप्रत्ययविषयो भवति। यदि न भवति[४], कथं तर्हि स एवायं वृक्षस्तिष्ठतीति प्रत्ययः? न हि कदाचिदाद्येन दर्शनेन स एवायं वृक्षस्तिष्ठतीति प्रत्ययो भवति। दृष्टोऽन्यत्वेऽप्यवस्थितिप्रत्ययः, चक्रं भ्रमत्तिष्ठतीति प्रदीपो ज्वलंस्तिष्ठतीति। अनवस्थितेषु नानाभूतेषु चक्रभ्रान्तिप्रदीपादिषु य एते तद्भावप्रत्यया अतस्मिंस्तदिति मिथ्याप्रत्यया एते। यथा चैते मिथ्याप्रत्यया एवं वृक्षादिस्थितिष्वपीति। न, प्रमाणाभावात्। न हि भवता प्रमाणं किञ्चित् वृक्षादीनां नानात्वस्थापकमभिधीयत इति। मिथ्याप्रत्ययाश्च सम्यक्प्रत्यया-

१. °न्तराणि C　२. °सन्निधाने C　३. न प्रमाणाभावात् om J　४. यदि न भवति om J

नुकारेण भवन्तीति क्वामी सम्यक्प्रत्यया इति वक्तव्यम्। अथ भवतः कालान्तरावस्थाने किं प्रमाणम्? उक्तं प्रमाणम्, रूपरसगन्धस्पर्शप्रत्ययानामेकानेकनिमित्तत्वं प्रतिसन्धानादिति। कार्यस्याधारत्वेन वा कारणस्य कार्यकालानुभवनमिति। यद् यस्याधारो भवति, तत् तस्य सद्भावकालमनुभवति, यथा क्षीरस्य कुण्डम्। कारणं च कार्याधिकरणम्, अतस्तेनापि कार्यकालोऽनुभवनीय इति। अनाधारमेवेति चेत्, अथ मन्यसे प्रतीत्यकारणं कार्यमुत्पद्यत इति क्व किं वर्तत इति? तन्न, दृष्टान्ताभावात्। न हि कश्चिदुभयपक्षसम्प्रतिपन्नो दृष्टान्तोऽस्ति कार्यमनाधारमस्तीति। समानम्[१], कार्यमाधारवदित्यत्रापि न दृष्टान्तोऽस्ति[२]। समानमित्यनुत्तरमभ्युपगमात्। अभ्युपगतं तावद् भवता नास्मत्पक्षे दृष्टान्तोऽस्ति, किं तु भवत्पक्षेऽपि नास्तीति विरोध इति चेत् ? अथ मन्यसे, न मयाभ्युपगम्यते दृष्टान्ताभावः किं तु भवत्पक्षे विरोधः। चोद्यते कथमिति? योऽनुपपद्यमानदृष्टान्तः पक्षः, सोऽसाधीयानिति ब्रुवाणः स्वसिद्धान्तं बाधत इति। तन्न, अपरिज्ञानात्। न भवता अस्मत्पक्षो व्यज्ञायि न स्वपक्षः। अस्मत्पक्षे तावत् कार्यमाधारवदित्येतत् प्रसिद्धम्, भवत्पक्षेऽपि रूपादयः कार्याश्चाधारवन्तश्चेति अभ्युपगमविरोधो वा भूतभौतिकसमुदायो द्रव्यमिति, यदि रूपादीन्, आश्रितान् न प्रतिपद्यसे[३], कोऽस्य तद्धितस्यार्थो भौतिका रूपादय इति। यच्चोक्तम्,

मणिः प्रभाया आश्रयः, तद्गतिस्थितिविकारानुविधानात्। कुण्डं बदराणामाश्रयः, तद्वशेनापतनात्। तैलस्य तिल आश्रयः, तद्वशेनास्पन्दनाद्

इत्येवमादि तद् व्याहन्यते। अनाश्रिताश्च रूपादयः स्वतन्त्रा एकमुपनिबन्धनं वस्त्वन्तरमन्तरेण तिलमुद्गमाषादिवद् विभज्येरन्, न तु विभज्यन्ते, तस्मात् परतन्त्रा इति। तस्माद् व्यवस्थितमेतत् स्मृत्या सह पूर्वापरप्रत्ययैकविषयता वा स्थितिरिति।

१. समानं om C २. इति समानम् added C ३. अनाश्रितान् मन्यसे C

दर्शनेनाप्तुमिष्यमाणत्वाद् वृक्षः कर्म, कर्मणि कः कारकार्थः? क्रियाविषयत्वम्। यत् खलु क्रियाया विषयभावेन व्यवतिष्ठते तत् कर्म। अनेन कर्मलक्षणेन

तथायुक्तं चानीप्सितम् [पा. सू. २.४.५०]

इति संगृहीतम्।

आनन्तर्यप्रतिपत्तिः करणस्य साधकतमत्वार्थः। वृक्षेण चन्द्रमसं ज्ञापयतीति वृक्षं गृहीत्वा अथानन्तरं चन्द्रमसं प्रतिपद्यत इति वृक्षः करणकारकशब्दवाच्यः।

कर्मणा आप्तुमभीष्टं संप्रदानम्। यद् वस्तु कर्मणाभिप्रेप्सितं[१] भवति तत् संप्रदानसंज्ञकम्। वृक्षायोदकमासिञ्चतीत्यासिच्यमानमुदकं कर्म। तेन कर्मणोदकेन वृक्षं प्राप्नोतीति वृक्षः संप्रदानं भवति।

अपगच्छत्यवतिष्ठते यत् तदपादानम्। यथा वृक्षात् पतति। वृक्षोऽपादानसंज्ञकः। यत् पतति तदपगच्छति, तस्मिन्नपगच्छति अवतिष्ठते वृक्ष इति।

धृतिहेतुरधिकरणम्। यस्मिन् यदाधेयं तस्याधेयस्य यद् धृतिहेतुः तदधिकरणम्। यथा वृक्षे वयांसीति वृक्षसंबन्धो वयसां गुरुत्वप्रतिबन्धे कारणमिति वृक्षोऽधिकरणशब्दवाच्यः।

एवं च सति न द्रव्यमात्रं कारकं न क्रियामात्रम्। किमुक्तं भवति? नायं कारकशब्दः क्रियामात्रे प्रवर्तते, न द्रव्यमात्रे। न हि द्रव्यं शुद्धमुपलभमानः कारकशब्दं प्रयुङ्क्ते, नापि क्रियां केवलाम्, अपि तु यदा क्रिया द्रव्यसंबन्धमुपलभते तदा सामान्येन कारकशब्देनाभिधत्ते कारकमिति। सामान्यं च कारकाणां क्रियानिमित्तत्वम्। अविवक्षिते विशेषे क्रियानिमित्तत्वे केवले विवक्षिते कारकमिति शब्दः प्रवर्तते। यदा तु विशेषो विवक्ष्यते तदा त्वसाधारणेन कारकधर्मेणेतरव्यावृत्तेन स्वातन्त्र्यादिना विशेषेण विशिष्यमाणं वस्तु कर्ता कर्म करणमिति

१. प्राप्तुमभिप्रेतं C

च व्यपदिश्यते। सर्वस्य च कारकस्य स्वक्रियानिमित्तः कर्तृव्यपदेशः प्रधान-क्रियासव्यपेक्षस्तु कारकशब्दप्रयोगः। एवं च शास्त्रम्

कारके [पा. सू. १.४.२३]

जनके निवर्तके। कस्याः? क्रियाया इति तथा व्यपदेशः। तस्मात् नेदं स्वक्रिया-मात्रमपेक्ष्योक्तं किं तु प्रधानक्रियाम्। तस्यामेव प्रधानक्रियायां किंचिदा-रादुपकारकं किंचिदासन्नोपकारकमिति किंचित् कथंचिदुपकरोति, तदपेक्षाश्च कर्त्रादिशब्दा इति तदुक्तं पुरस्तात्।

यदि क्रियासंबन्धनिमित्तकः कारकशब्दप्रयोगः पचत्येव पाचकशब्दः प्रवर्तेत, नापाक्षीत् पाचकः, पक्ष्यतीति वा पाचक इति। न, शक्तेस्त्रैकाल्यावस्थानात्। शक्तिः त्रिष्वपि कालेषु अवतिष्ठते। शक्त्यपेक्षश्चातीतानागतयोः कारकशब्द-व्यपदेशः[१] पचत्यपाक्षीत् पक्ष्यतीति। शक्तेस्त्रैकाल्यावस्थानात्[२] त्रैकाल्यव्यक्तिर-युक्ता। यथैव हि द्रव्यं त्रिकालयोगि तथा शक्तिरपीति। यथा द्रव्ये त्रैकाल्यं न व्यज्यते, [३]एवं शक्तावपीति अपचत्यपि पचतीति स्यात्। पक्ष्यति पाचकोऽपाक्षीत् पाचक इत्येतन्न[४] स्यात्। नैष दोषः, क्रियासंबन्धस्य शक्तिव्यक्तिहेतुत्वात्। क्रिये-त्यनेन शब्देन धात्वर्थोऽभिधीयते, तस्य यत् प्रधानं साधनं स कर्ता। सोऽयं कर्ता यदा अनया क्रियया संबध्यते तदा शक्तिं व्यनक्ति। का पुनरियं शक्तिः? क्रियाकर्तृव्यतिरिक्तः कर्तृधर्मः। सामर्थ्यमुपायपरिज्ञानं च क्रियासंबन्धेन व्यज्यते[५]। यदोपायपरिज्ञानं सामर्थ्यं क्रियासंबन्धः, तदा मुख्यः शब्दः[६] प्रवर्तते पचति पाचक इति। यदा तु क्रियासंबन्धमन्तरेण उपायपरिज्ञानसामर्थ्यमात्रोपादाने अन्यत-मवैकल्यात् पाचकशब्दः प्रवर्तते तदा उपचारतः अपाक्षीत् पाचकः पक्ष्यति पाचक इति। कारकशब्दश्चायं प्रमाणं प्रमेयमिति। कुतः? क्रियाविशेषयोगात्।

१. ०नागतव्यपदेशः J २. C suggests त्रिकालानवस्थानात् ३. तथा C ४. इति च न C ५. व्यवतिष्ठते C ६. मुख्यतः कारकशब्दः C

यथैवामी पाचकादिशब्दाः क्रियाविशेषयोगे सति प्रवर्तन्ते, तथा प्रमाणप्रमेयशब्दावपीति ॥१६॥

**प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ॥२।१।१७॥**

अस्ति भोः कारकशब्दानां निमित्तसमावेशात् नियमः प्रत्यक्षादीनि प्रमाणानि संवेद्यमानानि च प्रमेयमुपलब्धिविषयत्वात्। तत्रेदं चिन्त्यते, किमेतानि प्रत्यक्षादीनि स्वोपलब्धौ प्रत्यक्षादिव्यतिरिक्तं प्रमाणान्तरं[1] प्रयोजयन्ति, अथ निःसाधनैव प्रमाणोपलब्धिरिति। किं चातः?

**प्रमा...प्रसङ्गः**। प्रमाणविषयायाः सिद्धेर्यदि प्रमाणं साधनम्, प्रमाणान्तरं प्राप्नोति। प्रत्यक्षादीनां साध्यत्वात् न साध्यं साधनं भवतीति॥१७॥

**तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् प्रमेयसिद्धिः॥२।१।१८॥**

अथ प्रमाणमन्तरेण निःसाधनैव प्रमाणेषूपलब्धिः?

**तद्वि....सिद्धिः**। यथा प्रमाणानि स्वोपलब्धौ निवर्तन्ते, एवं प्रमेयसिद्धावपीति॥१८॥

**न, प्रदीपप्रकाशसिद्धिवत् तत्सिद्धेः॥२।१।१९॥**

अस्योत्तरम्–

**न, ....तत्सिद्धेः** इति। प्रदीपप्रकाशो घटाद्युपलब्धिसाधनस्याङ्गत्वात् प्रमाणम्।

१. प्रमाणं J

स च प्रत्यक्षादिभिरेवोपलभ्यते। नासावात्मोपलब्धौ प्रत्यक्षादिव्यतिरेकि प्रमाणं प्रयोजयति। तैरेवोपलभ्यते। तथा प्रमाणान्यपि प्रत्यक्षादिभिरेवोपलप्स्यन्त इति दृष्टान्तमात्रमेतत्। कोऽत्र न्याय इति? अयं न्याय उच्यते, प्रत्यक्षादीनि स्वोपलब्धौ प्रमाणान्तराप्रयोजकानि परिच्छेदसाधनत्वात् प्रदीपवत्। यथा प्रदीपः परिच्छेदसाधनं स्वोपलब्धौ न प्रमाणान्तरं प्रयोजयति, तथा प्रमाणानि। तस्मात् तान्यपि प्रमाणान्तराप्रयोजकानीति सिद्धम्। सामान्यविशेषवत्त्वाच्च। यत् सामान्यविशेषवत् तत् स्वोपलब्धौ न प्रत्यक्षादिव्यतिरेकि प्रमाणं प्रयोजयति। यथा प्रदीप इति। संवेद्यत्वाच्च। यत् संवेद्यं तत् [१]प्रत्यक्षाद्यतिरिक्तप्रमाणाप्रयोजकं यथा प्रदीप इति। आश्रितत्वात् कारणत्वाच्चेत्येवमादि[२] प्रदीपवदिन्द्रियादयोऽपि प्रत्यक्षाङ्गत्वात् प्रत्यक्षादिव्यतिरिक्तप्रमाणान्तराप्रयोजका इति समानम्।

तेनैव तस्याग्रहणमिति चेत्? अथ मनुषे प्रत्यक्षादिभिः प्रत्यक्षादीनामुपलब्धौ तेनैव तदेव गृह्यत इति प्राप्तम्। न चैतदस्ति, न हि साध्यं साधनं भवतीति। नैष दोषः अर्थभेदस्य लक्षणसामान्यात् प्रमाणलक्षणेनानेकोऽर्थः संगृहीतः। तत्र केनचित् कस्यचिद् ग्रहणमित्यदोषः। यथोद्धृतेनोदकेनाशयस्थस्य। यथोद्धृतमुदकं गृहीत्वा आशयस्थमप्येवंभूतमिति प्रतिपद्यत इति, न पुनरेवमभिधीयते तेनैव तस्य ग्रहणम्। अपि तु तथाभूतेन तथाभूतस्य। न चायमेकान्तः न तेनैव तस्य ग्रहणं भवतीति। भवत्यपि कदाचित्[३] स एव ज्ञाता ज्ञेयो भवति, यदा आत्मानं जानीत इति।

निमित्तभेदोऽत्रेति चेत्? अथ मन्यसे यदायमात्मा ज्ञाता तदान्यन्निमित्तम्? यदा ज्ञेयः, तदान्यदिति? समानम्। यथैव ज्ञाता सुखादिसंबन्धापेक्षः तद्विशेषणमात्मानं प्रतिपद्यते अहं सुखी अहं दुःखी चेति, तथा प्रमाणमपि प्रमाणविषयत्वेनावतिष्ठमानं प्रमेयमिति।

प्रत्यक्षादीनां चाविषयस्यानुपपत्तेः। यदि च कश्चिद् विषयः प्रत्यक्षाद्यविषयः स्यात् प्रतिपद्येमहि प्रत्यक्षादिव्यतिरिक्तं प्रमाणम्। स च न शक्यः केनचित्

---

१. °क्षादिव्यतिरेकिप्र° C २. करणाद्वेत्येक° C ३. °चिद्यथात्मनि C

प्रतिपादयितुम्। सर्वमिदं सच्चासच्च प्रत्यक्षादीनामेव विषयः। तस्मात् प्रत्यक्षादिभिरेवोपलभ्यत इति॥१९॥

## क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनेकान्तः ॥२।१।२०॥

**अपरे** तु हेतुविशेषपरिग्रहमन्तरेण दृष्टान्तमात्रं प्रदीपप्रकाशसूत्रेणोपाददते। यथा किल प्रदीपप्रकाशः प्रदीपान्तरप्रकाशमन्तरेण गृह्यते, तथा प्रमाणान्यपि प्रमाणान्तरमन्तरेण ग्रहीष्यन्त इति तान् प्रतीदमुच्यते—

**क्वचि...कान्तः।** यथा प्रदीपप्रकाशस्तथा प्रमाणानि, न पुनर्यथा स्थाल्यादिरूपं तथा प्रमाणानीति कोऽत्र नियमहेतुः? स्थाल्यादिरूपप्रकाशने च प्रदीपप्रकाशो न निवर्तते। कस्मादेवं न प्रमाणानि? अयं च प्रदीपप्रकाशो दृष्टान्तः प्रमाणपक्षे भवतु मा भूत् प्रमेयपक्ष इति। तत्रापि नियमहेतुर्वक्तव्यः। प्रदीपप्रकाशो दृष्टान्तो भवतु मा भूत् स्थाल्यादिरूपं दृष्टान्त[१] इत्यत्रापि नियमहेतुर्वक्तव्य इति। सोऽयमुभयथानेकान्तो विशेषहेतुपरिग्रहमन्तरेण[२] दृष्टान्तः प्रसक्तः।

विशेषहेतुपरिग्रहे सत्युपसंहाराभ्यनुज्ञानादप्रतिषेधः। यदि पुनरयं प्रदीपप्रकाशदृष्टान्तो विशेषहेतुना प्रकाशकत्वादिना संगृहीतः, तत एकस्मिन् पक्षेऽभ्यनुज्ञायमानो न शक्यः प्रतिषेद्धुमित्यनेकान्त इत्ययं दोषो न भवतीति।

प्रत्यक्षादीनां प्रत्यक्षादिभिरुपलब्धावनवस्थेति[३] चेत्? यदि प्रत्यक्षादिभिः प्रत्यक्षादीन्युपलभ्यन्ते, तान्यप्यन्यैस्तान्यप्यन्यैरित्यनवस्था, अनवस्थायां चाद्यप्रमाणाधिगमो न स्यात्। अथ व्यवस्थास्ति, आद्यप्रमाणाधिगतिरप्रमाणा प्रसज्यते। नैष दोषः, संवित्तिविषयसंवित्तिनिमित्तानामुपलब्ध्या व्यवहारसिद्धेः। संवित्तिविषयं संवित्तिनिमित्तं चोपलभमानस्य संवित्तिविषयः प्रमेयम्। संवित्तिनिमित्तं

१. °ल्यादिदृष्टा° C  २. °परिग्रह° om C  ३. °स्था स्यादिति C

प्रमाणम्। प्रमाणप्रमेययोरुपलब्धौ सर्वो व्यवहारः सिध्यति धर्मार्थसुखापवर्गप्रयोजनः तत्प्रत्यनीकपरिवर्जनप्रयोजनश्च। न त्वनवस्थासाधनीयं किञ्चित् प्रयोजनमस्ति, येनायं प्रयुक्तोऽनवस्थामुपाददीत। तस्मात् प्रत्यक्षादिभिः प्रत्यक्षादीनामुपलब्धिः, न चानवस्थेति। एवं तावत् सामान्यतः समधिगतमेतत् सन्ति प्रमाणानि प्रमेयसाधनानीति ॥२०॥

॥सामान्येन प्रमाणपरीक्षाप्रकरणम्॥

## [ प्रत्यक्षलक्षणपरीक्षाप्रकरणम् ]

### प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात्॥२।१।२१॥

अथेदानीं सामान्यतोऽधिगतानां विशेषपरीक्षा। तत्र प्रत्यक्षमादावुक्तम्। तत् परीक्ष्यत इति।

**प्रत्यक्ष...नात्**। यदिदं भवता प्रत्यक्षलक्षणमुच्यते

**इन्द्रियार्थसन्निकर्षोत्पन्नम्**

इति, तदसमग्रम्, कस्मात्? अन्यान्यपि प्रत्यक्षस्य कारणानि सन्ति। तानि नोक्तानि यथा आत्ममनःसंयोग इत्येवमादीनि। अथेन्द्रियार्थसन्निकर्षोत्पन्नमित्येतल्लक्षणमिति? लक्षणमप्येतन्न भवति। कस्मात्? उत्पत्तिकारणापदेशात्। इन्द्रियार्थसन्निकर्षोत्पन्नमित्येतत् कारणमपदिश्यते। न च कारणापदेशो वस्तुनो लक्षणम्। न हि घटादेः कार्यस्य मृत्पिण्डादिक्रमोत्पत्तिस्तल्लक्षणमिति। न, उभयथाप्यदोषात्[१]। यदि कारणम्, तथापि न दोषः। अथ लक्षणं तथापि न दोषः। कथम्? कारणपक्षे तावदुक्तं भवति[२] नेदं कारणावधारणार्थं सूत्रमिति, अपि तु प्रत्यक्षस्य प्रमाणस्य यदसाधारणमनुमानादिव्यवच्छेदकं तदुक्तमिति[३] नात्ममनःसंयोगादिषु प्रसङ्गः। इन्द्रियमनः-

१. °दोषः C २. भवति om J ३. तद्वक्तव्यमिति J

संयोगस्तर्हि उपसंख्येयः। यद्यसाधारणकारणत्वादिन्द्रियार्थसन्निकर्षस्य ग्रहणम्, नन्वेतस्मादेवेन्द्रियमनःसन्निकर्षोऽप्युपसंख्येय इति। न, उक्तत्वात्[१]। उक्तमत्रापि, न यावदसाधारणं कारणं तत्सर्वं वक्तव्यमिति। अपि त्वन्यतरग्रहणेनापि विशेषितमेतत्। लक्षणपक्षेऽपि न दोषः। असाधारणत्वादिन्द्रियार्थसन्निकर्षस्य इति। इन्द्रियार्थसन्निकर्षः प्रत्यक्षोत्पादकत्वात् कारणं च, समानासमानजातीयेभ्यो विशेषकत्वात् लक्षणं चेति॥२१॥

**नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः ॥२।१।२२॥**

अर्थतो वाभिधानमात्ममनःसंयोगस्य इन्द्रियमनःसंयोगस्य च। कथमिति? ज्ञानोत्पत्तिदर्शनात्। नासंयुक्ते द्रव्ये संयोगजस्य गुणस्योत्पत्तिरिति। मनःसंयोगानपेक्षं चेदिन्द्रियं प्रवर्तत इति युगपदनेकोपलब्धिः स्यात्। न तु[२] भवति। अतो मनःसन्निकर्षोऽपि कारणमिति। तदिदं सूत्रमुक्तभाष्यम्।

**नात्म...त्पत्तिः** इति। आत्ममनसोः सन्निकर्षाभावे नोत्पद्यते बुद्धिः, इन्द्रियार्थसन्निकर्षाभाववदिति। न, उक्तोत्तरत्वात्। उक्तोत्तरमेतत्। नेदं कारणावधारणार्थं सूत्रम् अपि तु विशिष्टकारणवचनमिति॥२२॥

**दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः॥२।१।२३॥**

ये तु सति भावात् कारणभावं वर्णयन्ति, यस्मात् किलेन्द्रियार्थसन्निकर्षे सति ज्ञानं भवति असति च न भवति[३] तस्माद् इन्द्रियार्थसन्निकर्षः कारणमिति, तेषाम्

**दिग्देश...प्रसङ्गः**। दिग्देशकालाकाशेषु सत्स्वपि ज्ञानं भवति, सति भावात् तान्यपि कारणमिति प्राप्तम्। कतमेन पुनर्न्यायेन दिगाद्यकारणम्? सामर्थ्यानुप-

---

१. न उक्तत्वात् om C २. न च C ३. असति च न भवति om C

लब्धेः। न हि ज्ञानोत्पत्तौ दिगादेः सामर्थ्यमुपलभ्यते। तस्मादकारणम्। सन्निधिमात्रादिति चेत्? अथ मन्यसे दिगादिः सन्निधिमात्रेण ज्ञानोत्पत्तौ कारणं भवति[१]? तदयुक्तम्, सन्निधेरवर्जनीयत्वात्। नित्यं दिगादि व्यापकं चेति नित्यत्वाद् व्यापकत्वाच्च न शक्यः सन्निधिः परिवर्जयितुमिति तत्र कारणभावे हेतुर्वक्तव्यः। न हि सन्निधिमात्रं हेतुत्वे कारणम् । कथम्? रूपोपलब्धेस्तेजःस्पर्शसद्भाववदिति। यथा रूपोपलब्धौ तेजसो रूपविशेषो हेतुः, न पुनस्तेजसः स्पर्शः सन्निधिमात्रेण[२] सामर्थ्यादर्शनात्। रूपस्य पुनर्दृष्टं सामर्थ्यं तद्भावाभावानुविधानादुपलब्धेः। यस्माद् यत्र रूपं भवति तत्रोपलब्धिः, यत्र न भवति न तत्रोपलभ्यते। तस्माद् रूपमेवोपलब्धेः कारणं न स्पर्श इति। यथा चान्द्रमसं रूपं विना तेजःस्पर्शेनौष्ण्येन प्रकाशयति, अपवरकादिस्थितं चौष्ण्यं विना रूपेण न प्रकाशयति, एवमात्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो ज्ञानं भवन्न दिगादिभ्यो भवति सन्निधिमात्रत्वात्, इतरेषां च सामर्थ्यदर्शनादिति ॥२३॥

## ज्ञानलिङ्गत्वादात्मनो नानवरोधः॥२।१।२४॥

यद्येवम् आत्ममनःसंयोगस्तर्हि उपसंख्येयः। नोपसंख्येयः, गम्यमानत्वात्। केन गम्यमानत्वात्?

**ज्ञान...रोधः**। ज्ञानमात्मलिङ्गमित्युक्तम्। तेन आत्ममनःसंयोगोऽनुक्तोऽप्यनुमेयः। कथं पुनर्ज्ञानमात्मनो लिङ्गम्? तद्गुणत्वात्। गुणभावासिद्धिरिति चेत्? अथ मनुषे गुणाभाव एव तस्यासिद्धः, कुत आत्मगुणत्वं सेत्स्यतीति? न, आत्मसमवायात् सुखादिवदिति। न हि द्रव्यं कर्म वा आत्मनि समवैति। तस्मात् न द्रव्यं न कर्म। आत्मनि च समवायो ज्ञानस्य सुखादिवत्। तस्माद् आत्मगुणः। न पृथिव्यादिगुणः स्वसंवेद्यत्वात्। यत्[३] प्रत्यक्षं स्वसंवेद्यं न तत् पृथिव्यादिगुणो

१. ज्ञानोत्पत्तेः कारणमिति C  २. सन्निधिमात्रेण om J  ३. यच्च Pañjikā

भवति[१]। यच्च प्रत्यक्षं स्वपरसंवेद्यं तत् पृथिव्यादिगुणः, यथा रूपादि। न चैवं ज्ञानम्, तस्मादात्मगुण इति। उक्तं चात्र। किमुक्तम्? न यावत् प्रत्यक्षस्य कारणं सर्वं तद् वक्तव्यमिति[२]।।२४॥

**तदयौगपद्यलिङ्गत्वाच्च न मनसः॥२।१।२५।।**

अथेन्द्रियमनःसन्निकर्षः[३] कस्मात् नाभिधीयत इति।

**तद...मनसः**। युगपज् ज्ञानानुत्पत्तिर्मनसो लिङ्गम् इत्युक्तम्। तेन मनसोऽप्यवरोध इति। न, युगपदनुत्पत्तिसूत्रस्यान्यार्थत्वात्। यदिदमुच्यते युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् इत्यत्र[४] ज्ञानकारणं मन इति, तदयुक्तम्, अन्यार्थत्वात्। अन्यार्थं [५]तत् सूत्रम्। न पुनस्तेन ज्ञानकारणत्वं मनसोऽभिधीयते[६]। अन्यार्थस्यापि तदर्थप्रकाशकत्वमुपपत्तिसामर्थ्यात्। यद्यपि तस्मिन् सूत्रे न मनसो ज्ञानकारणत्वं साक्षादुक्तम्, तथाप्युपपत्तिसामर्थ्यात् ज्ञानकारणता मनस[७] इति गम्यते। न हि ज्ञानं स्वतन्त्रं न च[८] चक्षुरादि स्वतन्त्रमिति॥२५॥

**प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम् ॥२।१।२६॥**

अथ कस्माद् इन्द्रियार्थसन्निकर्षोऽभिधीयते, कथं च[९] नात्ममनःसन्निकर्ष[१०] इन्द्रियमनःसन्निकर्षो वेति?

१. यथा सुखादि for भवति। C २. तावत् सर्वं वक्त° C ३. मनःसंयोगः J ४. इत्यनेन C ५. तत् om C ६. C adds गम्यते। न हि ज्ञानं स्वतन्त्रम् ७. °कारणं मनः C ८. च om C ९. कथं च om J १०. °र्षोऽभिधीयते C

**प्रत्यक्ष...चनम्**। इन्द्रियार्थसन्निकर्षः प्रत्यक्षस्यैव निमित्तम्, आत्ममनःसन्निकर्षः[१] प्रत्यक्षस्यान्यस्य चेति। इन्द्रियार्थसन्निकर्षेण समानत्वाद् इन्द्रियमनःसंयोगो वक्तव्यः। यदि साधारणत्वाद् आत्ममनःसंयोगस्य नाभिधानम्[२], इन्द्रियमनःसंयोगोऽसाधारणत्वात् इन्द्रियार्थसन्निकर्षवद् वक्तव्यः नेदं कारणावधारणार्थमित्युक्तम्। न च यावदसाधारणं सर्वं तद् वक्तव्यम्। अपि तु साधारणं न वक्तव्यमित्ययं सूत्रार्थः॥२६॥

**सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात्॥२।१।२७॥**

इन्द्रियार्थसन्निकर्षस्य प्राधान्यप्रदर्शनपरमिदं सूत्रम्। शेषं **भाष्ये**॥२७॥

**तैश्चापदेशो ज्ञानविशेषाणाम्॥२।१।२८॥**

प्राधान्ये च हेत्वन्तरम्—

**तैश्चा...णाम्**। यस्मादिदं प्रत्यक्षज्ञानमुत्पद्यमानं विषयेण वा कारणेन वेन्द्रियेण[३] व्यपदिश्यत इति। यच्चासाधारणं तेन व्यपदेशो दृष्टः, यथा यवाङ्कुर[४] इति॥२८॥

**व्याहतत्वादहेतुः॥२।१।२९॥**

व्याहतत्वादित्यनेन त्रिसूत्रीं प्रत्याचष्टे

**प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य॥**

१. ०मनःसंयोगः J  २. सन्निकर्षो नाभिधीयते C  ३. इन्द्रियेण om C  ४. शाल्यङ्कुरः C

**सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात्॥**
**तैश्चापदेशो ज्ञानविशेषाणाम्॥**

इति। इयं किल त्रिसूत्री आत्ममनःसन्निकर्षस्य ज्ञानकारणत्वं प्रतिषेधतीति व्याहतमिदं[१] भवति

**ज्ञानलिङ्गत्वादात्मनो नानवरोधः॥**
**तदयौगपद्यलिङ्गत्वाच्च न मनसः॥**

इति। **मनःसंयोगानपेक्षायां च**[२] युगपज्ज्ञानोत्पत्तिप्रसङ्ग इति[३] दृष्टव्याघातः। **अथ मा भूद् व्याघात** इति। सर्वं ज्ञानमात्ममनःसंयोगादुत्पद्यते। चोद्यावस्थमेवैतत्। कस्मादात्ममनःसंयोगो नाभिधीयत इति? अत्रोक्तम्। किमुक्तम्? नेदं कारणावधारणार्थं सूत्रमिति। अपि तु विशिष्टकारणवचनमिति[४] ॥२९॥

**नार्थविशेषप्राबल्यात्॥२।१।३०॥**

यापीयं[५] त्रिसूत्री प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्येत्येवमादिः, इयमपि

**नार्थ...ल्यात्।** नानया त्रिसूत्र्या आत्ममनःसंयोगस्य कारणभावः प्रतिषिध्यते, अपि तु प्राधान्यमिन्द्रियार्थसन्निकर्षस्योपपाद्यते। प्राधान्यं चोपपादयन्त्या नात्ममनःसंयोगः प्रतिषिद्धो भवति। मनसि क्रियाकारणाभिधानं सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वादित्यभिदधानेनात्ममनःसंयोगोऽपि कारणमित्युक्तम्। तत्र मनसि क्रियाकारणं वाच्यमिति। अथ[६] सुखदुःखोपभोगस्यादृष्टनिमित्तत्वाददृष्टं कारणम्, यथैवात्मनि गुणान्तरमिच्छाजनितं प्रयत्नलक्षणं क्रियाहेतुः तथा आत्मनि संस्कारो धर्माधर्मसमाख्यातो वर्तते। तेन प्रेरितं मनः संयुज्यते विभज्यते

१. इदं om J  २. च om C  ३. प्रसङ्गे. J  ४. द्र: न्यायभाष्यम् १.१.४
५. इयं om J  ६. अथ om J

वा। तेन ह्यप्रेर्यमाणे मनसि ततोऽन्यस्य क्रियाहेतोरभावात् सर्वार्थता तस्य गुणस्य[१] निवर्तेत। न हि धर्माधर्मावन्तरेणाणौ मनसि च[२] कश्चिदन्यः क्रियाहेतुरादौ संभवतीत्यतोऽदृष्टं कारणमिति। एवं तावत् समधिगतं[३] प्रत्यक्षलक्षणम्॥३०॥

॥प्रत्यक्षलक्षणपरीक्षाप्रकरणम्॥

## [ प्रत्यक्षस्यानुमानत्वपरीक्षाप्रकरणम् ]

**प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः॥२।१।३१॥**

अतः परमिदानीं प्रत्यक्षस्यानुमानेऽन्तर्भावं कुर्वाण इदमाह—

**प्रत्यक्ष.....लब्धेः।**

यदिदमिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानम् अयं वृक्ष इति एतत् किल प्रत्यक्षं तत्त्वनुमानमेव[४]। कस्मात्? एकदेशग्रहणाद् वृक्षोपलब्धेः। एकदेशमयं गृहीत्वा वृक्षमुपलभते। न चैकदेशो वृक्षः। तत्र यथा अन्यस्य दर्शनादन्यस्मिन् प्रतिपत्तिरनुमानम्, एवमेकदेशग्रहणाद् वृक्षप्रतिपत्तिरनुमानमिति। तद् यथा धूमं गृहीत्वा अग्निप्रतिपत्तिः, एवमेकदेशं गृहीत्वा वृक्षप्रतिपत्तिरिति।

न यथासंभवं[५] विकल्पानुपपत्तेः। एकदेशग्रहणादर्थान्तरं प्रतिपद्यत इति, किं तदर्थान्तरं यदेकदेशग्रहणात् प्रतिपद्यते[६]? अवयवसमूहपक्षे तावदवयवान्तराणि, द्रव्यान्तरोत्पत्तिपक्षे तानि चावयवी चेति[७]। यदि तावदवयवसमूहमात्रं वृक्षमधिकृत्योच्यते, एतस्मिन् पक्षे गृह्यमाणावयवव्यतिरेकेण यान्यगृह्यमाणान्यवयवान्तराणि स वृक्षः। अथ द्रव्यान्तरोत्पत्तिपक्ष आश्रीयते, तथाप्यर्वाग्भागः व्यवहितान्यवयवान्तराणि, अर्थान्तरं च स[८] वृक्ष इति। किं पुनरत्रैकदेशग्रहणादयं प्रतिपद्यते?

१. गुणस्य om C २. अणौ and च om C ३. समाहितं C ४. तु om C
५. यथासंभवं om J ६. ०पद्यत इति C ७. अवयवीति चेत् न C ८. स om J

किं तावदवयवान्तराणि, अथ[१] द्रव्यान्तरमिति। अवयवसमूहपक्षे तावद् वृक्षबुद्धेरभावः, परभागस्यावृक्षत्वाद् अर्वाग्भागवत्। यथैवायमर्वाग्भागो न वृक्षः, एवं मध्यपरभागावपि न वृक्षः। सेयमवयवसमूहपक्षेऽवृक्षे वृक्षबुद्धिरुत्पद्यमाना निर्विषया। अर्वाग्भागः परभागो मध्यभाग इत्येतच्च नास्ति। कथम्? भाग इत्यवयवस्यैतन्नाम। यः पुनरर्थान्तरमवयविनं न प्रतिपद्यते, तस्यावयव इति निरभिधेयं वाक्यम्। अवयवश्च परभागो मध्यमागोऽर्वाग्भागश्च[२]। स चावयविप्रत्याख्यानात्[३] न युक्त इति। अथैकदेशो भाग इत्युच्यते, कोऽयमेकदेशः? एकदेशो ह्यवयविन आधारः। अवयविनं च प्रत्याचक्षाणेन एकदेशोऽपि प्रत्याख्यातः।

अथाकार्यकारणभूतानां परस्परप्रत्यासत्त्युपग्रहेणैकदेशावस्थानमवयवार्थः? अहो शब्दार्थकौशलम्। अकार्यकारणभूताश्च परस्परप्रत्यासत्त्युपग्रहेण च वर्तन्त इति। न च परस्परोपकारं कुर्वन्ति, अवयवाश्चाभिधीयन्त इति चित्रम्।

**अपरे** त्वर्वाग्भागदर्शनेन परभागानुमानं कृत्वा प्रतिसन्धानप्रत्ययजामवृक्षे वृक्षबुद्धिमध्यवस्यन्ति। एतस्मिन्नपि[४] पक्षे वृक्षबुद्धेरभाव एव। कथम्? अर्वाग्भागस्य परभागस्य चावृक्षत्वात्। न चावृक्षप्रतिसन्धानजा वृक्षबुद्धिरुत्पत्तुमर्हतीति। न चैतस्मिन् पक्षेऽनुमानं भवतीति। अर्वाग्भागमयं गृहीत्वा परभागमनुमिमीत इति नानुमानस्य विषयः परिज्ञातः। कथमपरिज्ञातः? यदि तावदेवमनुमिमीते वृक्षोऽयमर्वाग्भागवत्त्वात्, कतमोऽसौ वृक्षः, यस्यार्वाग्भागवत्त्वं धर्मः? अनभ्युपगतार्थान्तरावयविनोऽर्वाग्भागमात्रं प्रत्यक्षम्। न च धर्मिण्यनुपलब्धेऽनुमानं प्रवर्तते। न चायं जात्वपि धर्मिणमुपलभते, अविद्यमानत्वेनाभ्युपगमात्। न चानुमानम् अनुमाने एवंविधस्य प्रतिसन्धानस्याभावात्। न ह्यनुमाने एवंविधं प्रतिसन्धानमस्ति। नायमनुमाता पूर्वमनुपलभ्याग्निं धूमविशेषणं प्रतिपद्य प्रतिसन्धत्ते अयं धूमोऽयं

१. उत C   २. मध्यभागः and च om C   ३. ०ख्याने C   ४. अपि om C

चाग्निरिति। न च प्रतिसन्धायानुमिमीते अग्निनात्र भवितव्यमिति। किं कारणम्? वैयर्थ्यात्। व्यर्थमनुमानमेतस्यामवस्थायामग्नेर्विशेषणभूतस्य प्रतीतत्वात्। तस्मान्नानुमाने प्रतिसन्धानमस्ति। प्रतिसन्धायापि च न समुदाये प्रतिसन्धानं न वृक्षे। न ह्ययमेकदेशदर्शनात् समुदायं प्रतिपद्यते, न वृक्षम्। किं तु शेषं समुदायिनमेव। किं कारणम्? समुदायिव्यतिरेकेण समुदायस्यासत्ताभ्युपगमात्। न हि भवन्तः समुदायिव्यतिरिक्तं समुदायं प्रतिपद्यन्ते। न चासन् समुदायोऽनुमातुं शक्यः।

किं च अर्वाग्भागमयं गृहीत्वा किमन्यदनुमिमीते[1]? अयमर्वाग्भागः परभागवानिति न युक्तमनुमातुम्, अर्वाग्भागस्य परभागवत्त्वासंभवात्। न ह्यर्वाग्भागः परभागवान्, भागस्य [2]भागासंभवात्। न हि भागस्यापरो भागो विद्यत इति। अथ भागं भागवन्तं प्रतिपद्यसे, नासौ भागो भागवान्, भाग्येवासौ। भागिविषयं चानुमानमिति न युक्तम्, उभयोः प्रत्यक्षत्वात्। उभयं ह्यस्य[3] प्रत्यक्षम्, अर्वाग्भागश्च भागी च। तत्रार्वाग्भागवत्त्वेन भागिनः परभागानुमानमस्मत्पक्षे युक्तम्, भवत्पक्षे तु भागमात्रदर्शनान्न युक्तमिति। यच्च तदर्वाग्भागदर्शनं न तस्य लिङ्गलिङ्गिसंबन्धस्मृत्यनुग्रहोऽस्ति। संबद्धयोरर्वाग्भागपरभागयोरदृष्टत्वात्। न ह्ययं द्रष्टा अर्वाग्भागपरभागयोः संबन्धं पश्यति। न[4] चार्वाग्भागपरभागौ संबद्धौ। न चानुभवमन्तरेण स्मृतिः। न च स्मृतिमन्तरेण लिङ्गदर्शनं केवलमनुमानम्। कथं पुनरयमर्वाग्भागपरभागौ संबद्धौ न पश्यति। नित्यमर्वाग्भागेन परभागस्य व्यवधानात्, नित्यमर्वाग्भागमेव केवलमुपलभते परभागं तु न कथञ्चन, अर्वाग्भागव्यवहितत्वात्। सत्यम्, नोभयोरुपलब्धिरस्ति। उभौ तु[5] संबद्धौ। सत्यं संबद्धौ, अनुमानं च न शक्यमुभयोरदर्शनात्। अर्वाग्भागपरभागयोश्च धर्मधर्मिभावानुपपत्तेर्नानुमानम्। यत्र खल्वनुमानं भवति तत्र धर्मिणो धर्मप्रसिद्धौ धर्मान्तरविषयमनुमानम्। न पुनरर्वाग्भागस्य परभागो धर्मः, परभागस्य चार्वाग्भागः। अतश्च नानुमानम्।

१. अन्यत् om J   २. भागवत्त्वासं॰ C   ३. ह्यत्र C   ४. च om C   ५. च C

यच्चेदमुच्यते, प्रतिसन्धानप्रत्ययजा वृक्षबुद्धिरिति, तदयुक्तम्। वृक्षस्यासिद्धत्वेनाभ्युपगमात्[1] न प्रतिसन्धानम्। प्रतिसन्धानं हि नाम पूर्ववस्त्वनुरञ्जितः[2] प्रत्ययः पिण्डान्तरे भवति। यथा रूपं च मयोपलब्धं रसश्चेति। भवत्पक्षे पुनरर्वाग्भागं गृहीत्वा परभागमनुमायार्वाग्भागपरभागावेतावित्येतावान्[3] प्रतिसन्धानप्रत्ययो युक्तः। वृक्षबुद्धिस्तु कुतः? न [4]तावदर्वाग्भागो वृक्षो न परभाग इति। अर्वाग्भागपरभागयोश्चावृक्षभूतयोर्या वृक्षबुद्धिः सा [5]अतस्मिंस्तदिति प्रत्ययः। अतस्मिंस्तदिति प्रत्ययो नानुमानाद् भवितुमर्हतीति, प्रमाणस्य यथाभूतार्थपरिच्छेदकत्वात्। यश्चायमतस्मिंस्तदिति प्रत्ययः स प्रधानानुकारेण भवतीति वृक्षबुद्धेः[6] प्रधानं वक्तव्यम्। न ह्यगृहीतसामान्यस्यानध्यारोपिततद्विपरीतधर्मणो वा अतस्मिंस्तदिति प्रत्ययो भवति। प्रधानं च नास्ति, वृक्षस्यानभ्युपगमात्। तस्मान्नानुमानप्रतिसन्धानाद् वृक्षबुद्धिः।

एतेनार्वाग्भागपरभागप्रत्यया अपि प्रत्युक्ताः। [7]अनभ्युपगतान्त्यावयविनश्चार्वाग्भागः परभाग इत्येतदपि नास्ति। कस्मात्? महतो द्रव्यस्योपलब्धिलक्षणप्राप्तस्य परभागव्यवधायकस्यैतन्नामार्वाग्भाग इति। तथाभूतस्यैव[8] व्यवहितस्य परभाग इति। न च भवता किञ्चिद् द्रव्यमवयविभूतं प्रतिपद्यते यदर्वाग्भागपरभागशब्दवाच्यं स्यादिति। परमाणुषु तथासन्निविष्टेषु अर्वाग्भागपरभागवृक्षादिप्रत्यया इति चेत्? अथ मनुषे नास्माभिरवयविद्रव्याणि कानिचित् प्रतिपद्यन्ते। किं तु तेष्वेव परमाणुषु परस्परप्रत्यासत्त्युपसंग्रहेण संस्थानविशेषावस्थितेषु एते शब्दाः प्रवर्तन्त अर्वाग्भाग इति परभाग इति च वृक्ष इति चेति। न, तथाशब्दस्यार्थानभिधानात्। [9]तथासन्निविष्टेष्वित्येतदभिधानं प्रवर्तते पूर्वप्रसिद्धौ सत्याम्। न च परमाणुषु पूर्वापरभागादिशब्दप्रवृत्तेर्बीजमस्ति। यथाप्रसिद्धे गवि गवयः तथारूप इति। एवं तावदवयवसमूहपक्षे वृक्षबुद्धेरभाव इत्युक्तम्।

१. स्यासत्त्वेन J २. पूर्वप्रत्ययानु॰ C ३. एतौ om C ४. च for तावत् J
५. अतस्मिंस्तदिति प्रत्ययः om C ६. ॰बुद्धिः C ७. ॰गतार्थान्तरावयविन॰ J
८. ॰भूतस्य च C ९. ॰विष्टेषु तथाभि॰ C

द्रव्यान्तरोत्पत्तिपक्षे तु नावयव्यनुमेयः प्रत्यक्षत्वादर्वाग्भागवत्। यथैवायमर्वाग्भागमिन्द्रियसंबद्धं प्रत्यक्षत उपलभते, तथा वृक्षमपीति नानुमेयो वृक्षः। अथेन्द्रियसंबद्धमपि वृक्षमनुमेयमेव प्रतिपद्यसे, वृक्षवदर्वाग्भागोऽप्यनुमेयः प्रसज्यते[१]। तथा च व्याहतं भवति। अर्वाग्भागमयं गृहीत्वा वृक्षं प्रतिपद्यत इति। सर्वमेवानुमानमित्येतस्मिन्नपि च पक्षेऽनुमानाभावः प्रत्यक्षतोऽनधिगतत्वाद् धर्मिणः। न हि धर्मिणि प्रत्यक्षतोऽनधिगतेऽनुमानं प्रवर्तते। यदप्यतीन्द्रियेष्वर्थेष्वनुमानमुक्तम्[२], तदपि नास्तीत्युक्तम्[३]। न हि अतीन्द्रियोऽर्थोऽनुमातुं शक्यः। कथमिति? धर्मिणोऽनधिगतत्वादित्युक्तम्। कः पुनः सामान्यतोदृष्टस्य प्रत्यक्षपूर्वकादनुमानाद् विशेषः, यदि, सर्वं प्रत्यक्षपूर्वकमेवानुमानमिति। अयं विशेषः। प्रत्यक्षपूर्वकं त्रिकप्रसिद्धौ प्रवर्तते साध्यसाधनधर्म्युपलब्धौ। यत्रायं साध्यं साधनं च धर्मिणं च पूर्वं गृहीत्वा पुनर्धर्मधर्मिदर्शनेन धर्मान्तरमनुमिमीते, तत्प्रत्यक्षपूर्वकम्। यत् पुनः साधनधर्मं धर्मिणं चोपलभ्यात्यन्तपरोक्षं धर्मान्तरमनुमिमीते तत् सामान्यतोदृष्टमिति। भवत्पक्षे तु न सामान्यतोदृष्टादनुमानाद् वृक्षबुद्धिर्न प्रत्यक्षपूर्वकात्, धर्मिणोऽनभ्युपगमात्, प्रत्यक्षप्रतिषेधाच्चेति ॥३१ ॥

## न, प्रत्यक्षेण यावत् तावदप्युपलम्भात् ॥२ ।१ ।३२ ॥

विरुद्धश्चायं हेतुरेकदेशग्रहणाद् वृक्षोपलब्धेरिति। कथमिति?

**न, ........ लम्भात्।**

प्रत्यक्षमनुमानमित्येवं ब्रुवता प्रत्यक्षमपह्नूयते। प्रत्यक्षापह्नवाच्च यदेकदेशग्रहणं प्रत्यक्षं तद् व्याहतं भवति। कथमिति? यत् तदेकदेशग्रहणं भवता आश्रीयते प्रत्यक्षं तत्[४]। तावतापि च प्रत्यक्षलक्षणं सिध्यतीति। न [५]चेदं प्रतिज्ञायते सर्वं

१. स्यात् C २. उक्तम् om J ३. अपि and इत्युक्तम् om C
४. तत् om J ५. चैवं C

प्रत्यक्षस्य विषयः। किं तु यावदिन्द्रियार्थसन्निकर्षादुपलभ्यते, तावत् प्रत्यक्षस्य विषय इति।

अथापि[१] न प्रत्यक्षमनुमानमप्रकारवत्त्वात्, प्रकारवदनुमानमप्रकारवत् प्रत्यक्षम्। तदुक्तमनुमानसूत्रं वर्णयद्भिरिति। त्रिकालविषयत्वाच्च नानुमानं प्रत्यक्षम्, त्रिकालविषयमनुमानम्, न चैवं प्रत्यक्षमिति। लिङ्गलिङ्गिसंबन्धस्मृत्यनपेक्षत्वाच्च[२] नानुमानं प्रत्यक्षम्। लिङ्गपरामर्शज्ञानस्य लिङ्गलिङ्गिसंबन्धस्मृत्यनुग्रहोऽस्ति। न चैवं प्रत्यक्षस्य। तस्मान्न प्रत्यक्षमनुमानम्। इतश्च न प्रत्यक्षस्यानुमानत्वप्रसङ्गः, तत्पूर्वकत्वात्। प्रत्यक्षपूर्वकमनुमानम्, न तु प्रत्यक्षम्। अयं चानयोर्विशेष इति। इन्द्रियसंबद्धाच्च, न चेन्द्रियस्यानुमेयेनार्थेन [३]सन्निकर्षादुत्पद्यते ज्ञानं यदनुमानमित्युच्यते। सोऽयं प्रमाणदृष्टः प्रत्यक्षानुमानयोरेकत्वमासञ्जयता भेदः प्रत्याख्यायत इति।

**न चैकदेशोपलब्धिरवयविसद्भावात्।** यदिदं भवताभिधीयत एकदेशग्रहणादयं वृक्षं प्रतिपद्यत इति तदनुपपन्नम्। यस्मादेकदेशोपलब्धिश्च तत्सहचरितावयव्युपलब्धिश्च। न हीन्द्रियेण सन्निकृष्यमाण एकदेशे तत्सहचरितोऽवयवी न सन्निकृष्टः। तेन यथैकदेशः स्वसन्निकर्षादुपलभ्यते, एवमवयव्यपि स्वसन्निकर्षादुपलभ्यते। कस्मात्? अवयविसद्भावात्। अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी, तस्यावयवस्थानस्योपलब्धिलक्षणप्राप्तस्यैकदेशोपलब्धावनुपलब्धिरनुपपन्ना। किं कारणम्? महदनेकद्रव्यरूपाण्युपलम्भकानि[४]। तान्येकदेशवदेकदेशिन्यपि वर्तन्ते[५]। तस्मादेकदेश उपलभ्यते नैकदेशीत्ययुक्तम्॥

नावयविन उपलब्धिर्युक्ता। कस्मात्? विकल्पानुपपत्तेः। अयं खल्ववयवी अवयवेषु वर्तमान एकस्मिन् कृत्स्नो वा वर्तते, एकदेशेन वा? किं चातः? यद्येकस्मिन् कृत्स्नो वर्तते शेषावयववैयर्थ्यम्। न हि शेषैरवयवैः किंचनावयविनः

१. अन्यथापि C  २. ०त्यनुग्रहापेक्ष० C  ३. संबन्धादु० C  ४. ०लब्धिकारणानि C द्रः वै. सू. (च)४.१.६  ५. विद्यन्ते C

क्रियत इति। एकद्रव्यश्चासावयवी भवन् नोपलभ्येत। किं कारणम्? महदनेकद्रव्यवत्त्वस्योपलम्भकत्वात्[१]। न चास्य विनाशः प्राप्नोति, कारणद्रव्य-विभागासंभवात्। न ह्येकस्य विभागः संभवति। न चैकेनारभ्यमाणस्य महत्त्वं युक्तम्, कारणबहुत्वमहत्त्वप्रचयासंभवात्। तस्मादेकस्मिन् न कृत्स्नो वर्तत इति। नाप्येकदेशेन वर्तते। न ह्यस्य कारणव्यतिरेकेणान्ये एकदेशाः सन्ति[२]। सोऽयमेक-देशोपलब्धाववयव्युपलभ्यमानो न कृत्स्न उपलभ्यते। सेयमेकदेशोपलब्धिर-निवृत्तेति[३]। अथोपलभ्यमानोऽवयवी कथमुपलभ्येत? यदि गृह्यमाणेष्ववयवेषु, कृत्स्नः परिसमाप्तः स्यात्। न चायं गृह्यमाणेषु परिसमाप्तः, शेषावयववैयर्थ्या-दित्युक्तम्[४]। अशेषावयवोपलब्धिरपि नास्ति, मध्यपरभागयोरर्वाग्भागेन व्यवधानात्। तेनावयविनो न ग्रहणविकल्पो नापि वृत्तिविकल्पः।

एकस्मिन् कृत्स्नैकदेशशब्दासंभवादप्रश्नः। किमवयव्येकदेशेन वर्तते, अथ कृत्स्नो वर्तत इति न युक्तः प्रश्नः। नावयवी कृत्स्नो नैकदेशः। कृत्स्नमिति खल्वनेकस्याशेषस्याभिधानम्। एकदेश इति चानेकत्वे सति कस्यचिदभिधानम्। ताविमौ कृत्स्नैकदेशशब्दावेकस्मिन्नवयविन्यनुपपन्नौ। कथं तर्हि अवयवेष्वव-यवी वर्तत इति? आश्रयाश्रयिभावेन। आश्रितोऽवयवी, आश्रया अवयवा इति। का पुनरियं वाचोयुक्तिः नैकदेशेन वर्तते। न च कात्स्न्र्येन वर्तते, अथ च वर्तत इति। यद् यथाभूतं वस्तु[५] तत् तथा निर्दिश्यत इत्येषा वाचोयुक्तिः। कृत्स्नैकदेश-शब्दौ चावयविनि[६] न स्तः, तस्यैकत्वादित्युक्तम्। तस्मादाश्रयाश्रितधर्मिनिर्देश-मात्रमवयव्यवयवेषु वर्तत इति। का पुनरियं वृत्तिः? एकस्यानेकत्राश्रयाश्रित-भावलक्षणा प्राप्तिः।

अपि चैकमनेकत्र वर्तत इति प्रतिजानानो नानुयोक्तव्यः। कस्मात्? उभयेन व्याघातात्। एकमनेकत्र वर्तत इति ब्रूवाणः किमेकदेशेन वर्तते उत सर्वात्मना

१. द्र:वै. सू. (च) ४.१.६; °लब्धिकारणत्वात् C २. संभवन्ति C ३. °वृत्तैवेति C
४. °वैयर्थ्यप्रसङ्गादि° C ५. वस्तु om C ६. नावयविनि स्तः C

इति नानुयोक्तव्यः। कस्मात्? उभयेन व्याघातात्, यदि एकमनेकत्र वर्तमानं प्रत्यवयवं सर्वात्मना वर्तते, नैकमनेकत्र वर्तते, अनेकमनेकत्र वर्तत[१] इत्यापन्नम्। एवं चानुयोगेऽधिकरणव्याघातः। अथैकमनेकत्र वर्तमानं प्रत्यवयवमेकदेशेन वर्तते तथापि नैकमनेकत्र वर्तत इति प्राप्तम्, अनेकमनेकत्र वर्तत इत्यापन्नम्। ये च ते[२] एकदेशाः प्रत्येकमवयवेषु वर्तन्ते तेऽवयविन इति प्राप्तम्। एतस्मिन्नपि[३] पक्षे नैकमनेकत्र वर्तते। किं तर्हि? अनेकमनेकत्रेति। अथ प्रत्येकं परिसमाप्त्या वर्तत इति अयमर्थः। [४]अनेकमनेकत्र वर्तत इति। तथाप्यनुयोगाधिकरणं निवर्तत इति। य एव खल्वयमर्थोऽनेकमनेकत्र वर्तते स एवायमर्थः प्रत्येकं परिसमाप्त्या वर्तत इति। सर्वथानुयोगाधिकरणं निवर्तत इति। अनुयोगस्याधिकरणबाधकत्वात्। अयं खल्वनुयोगः क्रियमाणोऽधिकरणं बाधते। अतो धर्मविकल्पभावेन[५] न वर्तते। नायं विकल्पः क्वचिदप्याश्रयवान् इत्यतो नानुयोक्तव्य इति। एवं सर्वेष्वनेकद्रव्यवृत्तिषु [६]संख्यापृथक्त्वसंयोगविभागसामान्यादिष्वनुयोगाधिकरण्व्यावृत्तिदोषो वक्तव्यः।

ग्रहणाग्रहणभेदाद् भेदोऽवयववदिति चेत्? यथा गृह्यमाणानामगृह्यमाणानां चावयवानां भेदः, तथावयविनोऽपि गृह्यमाणागृह्यमाणावयवाश्रितस्य भेदः प्राप्तः। ततश्च नैकोऽवयवी। न भेद एकस्मिन्नपि दर्शनात्। एकस्मिन्नपि गृह्यमाणे ग्रहणमग्रहणं च दृष्टं देवदत्तादिवत्। यथा देवदत्तादिः केनचित् सह गृह्यते, केनचित् सह न गृह्यते, न तावता तस्य भेदः, तथावयविनोऽपि इत्यदोषः। गृहीतत्वाच्च। यदिदं भवताभिधीयत एकदेशग्रहणादस्य ग्रहणम्, एकदेशाग्रहणाच्चाग्रहणमिति। अयमनास्पदो विकल्पः, अवयविनो गृहीतत्वात्। एकदेशसहचरितोऽवयवी गृहीत इति। किमस्यागृहीतं येन ग्रहणाग्रहणविकल्प आस्पदवान् स्यादिति? मध्यभागपरभागौ न गृहीताविति चेत्-न, तयोरवयविनोऽन्य-

१. वर्तते om J २. तत्र C ३. अपि om C ४. एकम् J ५. ०भावे J
६. ०विभाग० om J

त्वात्। अन्योऽवयवी, अन्यौ मध्यभागपरभागाविति, [१]अन्यत्वादवयविनो मध्यभागपरभागौ न गृह्येते इति। किं कारणम्? ग्रहणहेत्वभावात्। यथा अर्वाग्भागेन सहावयविन इन्द्रियप्राप्तिरुपलब्धिनिमित्तत्वमस्ति[२], नैवं मध्यभागपरभागाभ्यां सह। तस्मादर्वाग्भागेन सहोपलभ्यते न मध्यभागापरभागाभ्यामिति। अवयवसमूहपक्षे तु सर्वथा वृक्षबुद्धेरभावः। कथम्? मूलस्कन्धशाखापलाशानां समूहो वा वृक्षः स्यात्, प्राप्तिर्वा समुदायिनाम्। उभयथा च वृक्षबुद्धेरभावः। अवयवैरवयवान्तरव्यवधानादशेषग्रहणं नास्ति। प्राप्तिग्रहणमप्ययुक्तं प्राप्तिमतामग्रहणात्। न हि प्राप्तिमत्यगृह्यमाणे प्राप्तेर्ग्रहणमस्ति। भवति हि इदमनेन संयुक्तमिति। सेयमेकदेशग्रहणसहचरिता वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तिपक्षे कल्पते न समुदायमात्र इति॥३२॥

।।प्रत्यक्षस्यानुमानत्वपरीक्षाप्रकरणम्॥

## [ अवयविपरीक्षाप्रकरणम् ]

**साध्यत्वादवयविनि सन्देहः॥२।१।३३॥**

कारणेभ्यो द्रव्यान्तरमुत्पद्यत इति साध्यमेतत्। किं पुनरत्र साध्यम्? किमव्यतिरेकोऽथावयवीति। यद्यवयवी, न लिङ्गमस्ति धर्मिणि विप्रतिपत्तेः। न हि धर्मिणि विप्रतिपद्यमानः कुतश्चिदभ्यनुज्ञां लब्धुमर्हति। न च धर्मिणि विप्रतिपत्तेर्बीजमस्ति सादृश्याभावात्। न हि सादृश्यमन्तरेण विप्रतिपत्तिकारणं किञ्चिदस्ति[३]। किं कारणम्? विप्रतिपत्तिर्नाम विपरीता प्रतिपत्तिः। तस्याश्च कारणं समानधर्मोपलब्धावनवगतविशेषस्य तद्विपरीतधर्माध्यारोपः। न [४]चानभ्युपगतार्थान्तरावयविनोऽवयविनि [५]सामान्यं किञ्चिदस्ति। नापि तद्विपरीतधर्माध्या-

१. अवयविनोऽन्य° C २. °ब्धिहेतुरस्ति J ३. °पत्तेर्बीजमस्ति C ४. °र्थान्तरा° om C ५. सादृश्यं C

रोपः। तस्मान्न विप्रतिपत्तिः। अथाव्यतिरेकः साध्यः? तत्राव्यतिरेकप्रतिपादकं प्रमाणं वक्तव्यम्। न ह्यप्रामाणिकी काचित् प्रतिपत्तिरस्ति। इदं प्रमाणमर्थान्तरानवयवत्वम्। अर्थान्तरमर्थान्तरस्यावयवो न भवति। यथा न गौरश्वावयवः। अवयवाश्च तन्तवोऽवयवी च पटः। तस्मान्नासौ तेभ्योऽर्थान्तरमिति।

इदं तावद् यथाश्रुति वाक्यं हेतुहीनम्। न ह्यत्र हेतुरस्तीति। ननु चोपनयेन व्यज्यमानो हेतुरवयवत्वमस्ति। नार्थान्तरं पटात् तन्तवः तदवयवत्वादिति। न, व्याघातात्। अनर्थान्तरभावे नावयवत्वं तन्तूनां सिध्यति। किं कारणम्? अवयव्यपेक्षत्वात्। अवयव्यपेक्षो [१]ह्यवयवः। न चावयविप्रत्याख्यानेऽवयवत्वे किञ्चिद् बीजमस्ति। अर्थान्तरे [२]च दर्शनाद् विरुद्धः स्यात्[३]। दृष्टोऽवयवोऽर्थान्तरभावे नानर्थान्तर[४] इति। यथा तन्त्ववयवा[५] घटादर्थान्तरमिति। षष्ठीविशेषणादप्रसङ्ग इति चेत्? पटस्यावयवा इत्युक्ते घटादिषु कः प्रसङ्गः? नन्वत्रोक्तम्। किमुक्तम्? व्याघातादिति। न ह्यनर्थान्तरभावेऽवयवत्वं तन्तूनां सिध्यति[६]। न च षष्ठी। न तन्तुस्तन्तोरवयवः। नापि षष्ठ्यर्थो [७]न तन्तुस्तन्तोरवयव इति। [८]उपेत्यावयवत्वं तन्तूनां तस्य नान्वयो न व्यतिरेक इत्यसाधारणत्वादहेतुः। नार्थान्तरं पटात् तन्तव इति च तन्तून् पक्षीकृत्य तदवयवत्वादिति ब्रुवाणः तन्तूनां तन्त्ववयवत्वं ब्रवीति। एतच्च विरुद्धम्, न तन्तवस्तन्तूनामवयवा इति। अथ पटः पक्षीक्रियते, तथापि व्यधिकरणो हेतुः अवयवत्वस्य तन्तुधर्मत्वात्। तन्तुधर्मोऽवयवत्वं न पटधर्म इति। अवयवशब्दस्य च कारणविशेषवाचकत्वात् असत्यवयविनि व्याघातः। यद्यवयविनमर्थान्तरं न प्रतिपद्यसे कस्य तन्तवः कारणम्? न हि कारणमात्मानं निर्वर्त्तयतीति।

नैव हि नः किञ्चिन्निर्वर्त्यमस्ति। त एव हि तन्तवः संस्थानविशेषावस्थिताः पटाख्यां लभन्त इति। अपटास्तन्तवः पटशब्देनाभिधीयन्त इत्येतदुक्तं भवति। एतच्च विरुद्धं मुख्याभावात्। न हि तन्तूनामपटानां पटेन किञ्चित् सामान्यमस्ति,

१. हि om C २. च om J ३. स्यात् om J ४. ०न्तरभावे C ५. तन्तवोऽयवयवाः C ६. अवयवोऽस्ति for अवयवत्वं तन्तूनां सिध्यति C ७. न om C ८. उत्पत्त्याव० C

न चासति सामान्ये मिथ्याप्रत्ययस्य बीजमस्तीत्युक्तम्। यच्चेदमुच्यते संस्थानविशेषावस्थानमिति किं तदर्थान्तरमाहो नेति। यद्यर्थान्तरभूतं किं तदिति वक्तव्यम्। अथ [१]नार्थान्तरम्, शून्यं तर्हीदं वाक्यम्–संस्थानविशेषावस्थानमिति। अस्माकं तु संस्थानविशेषः संयोगः स चार्थान्तरम्।

न, अनभ्युपगमात्। न मयार्थान्तरं संयोगः [२]प्रतिपद्यते, अन्यासंयोगादिति। अन्यदन्यस्य संयोगो न भवति, यथा न गौरश्वस्य संयोगः, अङ्गुल्योस्तु संयोगः। तस्मात् नार्थान्तरमिति। न, उक्तोत्तरत्वात्। उक्तोत्तरमेतत्। किमिति? अर्थान्तरानर्थान्तरयोर्व्यावृत्तत्वात् संयोगोऽसाधारणः, प्रतिज्ञैकदेशश्च नार्थान्तरं संयोगः संयोगत्वादिति। विशेषणभावाच्चार्थान्तरं संयोगः। संयुक्ते द्रव्ये आहरेत्युक्ते ययोर्द्रव्ययोः संयोगं पश्यति, ते इतरेभ्यो विशिष्य संयुक्ते आहरति। न, विशेषणस्यान्यथासिद्धत्वात्। यदिदं भवताभिधीयते संयुक्ते द्रव्ये आहरेति विशेषणभावादर्थान्तरं संयोग इति, तदन्यथा संभवति। कथम् [३]अन्यथा? प्रत्यासत्तौ प्रतीघातावसानायां संयोगव्यवहारः। तावद् द्रव्याणि प्रत्यासीदन्ति यावत् प्रहतानि भवन्ति। तस्मिन् प्रतीघाते संयोगव्यवहारो नार्थान्तर इति। अनभ्युपगतार्थान्तरसंयोगेन प्रत्यासत्तिप्रतीघातौ वक्तव्यौ। तत्र संयुक्तसंयोगाल्पीयस्त्वं प्रत्यासत्तिः, मूर्तस्पर्शवद्द्रव्यसंयोगः प्रतीघातः। यः पुनः संयोगं न प्रतिपद्यते, तेन प्रत्यासत्तेः प्रतीघातस्य चार्थो वचनीय इति। यदि चार्थान्तरं संयोगो न स्यात्, क्षेत्रोदकबीजाग्नीन्धनानि सर्वत्रावस्थितानि सर्वदाङ्कुरपाकजादिकार्यं कुर्युः तान्येव तानीति। तस्माद् यस्तैरपेक्ष्यते सोऽर्थोऽन्यः। तस्मिन् संयोग इति संज्ञेति। क्षेत्रोदकबीजाग्नीन्धनादीन्यङ्कुरपाकजादिकार्योत्पत्तौ सापेक्षाणि सर्वदा तत्कार्यानारम्भकत्वात् दण्डादिवत्। यथा दण्डाद्यनेकं [४]कारकं संयोगादिनिमित्तान्तरापेक्षं न सदा [५]घटादिकार्यं करोति, तथा बीजाद्यपि। तस्मात् तदपि सापेक्षमिति।

---

१. नोच्यते C २. ॰पाद्यते C ३. अन्यथा om C ४. कारणं C ५. घटपटादि C

यत् त्वत्र **परेणोच्यते**

कार्योत्पत्तिर्विना तेन शब्दायस्कान्तकर्मवत्॥

इति। अस्यार्थः। यथा किल शब्दः शब्दान्तरमारभमाणो विना संयोगेनारभते, यथा चायस्कान्तोऽयः समाकर्षति विना संयोगेन, यथा च कर्म [1]संयोगं संयोगेन विना करोति, तथान्यापि कार्योत्पत्तिर्विना संयोगेन भविष्यतीति।

न, हेत्वर्थापरिज्ञानात्। न ब्रूमोऽस्ति संयोगः कार्योत्पत्तेः। अपि तु क्षेत्रोदक-बीजाग्नीन्धनानि सापेक्षाणीति। यदि च निरपेक्षं किञ्चित् कारणं[2] सर्वदारम्भकं स्यात्, भवेदनैकान्तिकत्वं हेतोः[3]। तत्तु न केनचित् शक्यं प्रतिपादयितुम्। शब्दः शब्दान्तरमारभमाणः [4]स्वपरिच्छिन्नाकाशदेशप्रत्यासत्त्यपेक्ष आरभते शब्दस्याकाशा-व्यापकत्वात्। अयस्कान्तोऽप्ययः समाकर्षति स्वाश्रयप्रत्यासत्त्यपेक्ष एव। यदि च निरपेक्ष आकर्षेत्, न क्वचिदयांस्यवतिष्ठेरन्। तस्मात् न निरपेक्षः। [5]कर्माप्याश्रयप्रत्या-सत्त्याभिमुख्यापेक्षं संयोगं करोति। न निरपेक्षं कर्म न प्रतिलोममिति। यद्यनपेक्षं कर्म संयोगं कुर्यात् पाण्ड्यमथुरासंबन्धिनि देवदत्ते उत्पन्नं कर्म तक्षशिलासंबन्धिनि यज्ञदत्ते संयोगं कुर्यात्। न त्विदमस्ति। न चैवं[6] प्रतिज्ञायते सर्वस्य कारणं संयोग इति, अपि तु सापेक्षमारभत इति।

सूत्रव्याघात इति चेत्? अथ मनुषे यदि कर्मापि सापेक्षं संयोगं करोति ननु पारमर्षं सूत्रं व्याहन्येत,

एकद्रव्यमगुणं संयोगविभागयोरनपेक्षकारणं [7]कर्म।

इति व्याघातः। न [8]व्याघातः सूत्रार्थापरिज्ञानात्। न भवता सूत्रार्थो व्यज्ञायि। नायं सूत्रार्थो निरपेक्षं कर्म [9]संयोगकारणमाश्रयाद्यपि नापेक्षत इति। अपि तु चरमभा-विनिमित्तान्तरं नापेक्षत इति सूत्रार्थः। यथा द्रव्यजातमुत्पन्नं चरमभाविनं संयोगम-

१. संयोगविभागौ C २. कारणं om C ३. ॰न्तिको हेतुः C ४. स्वकारण-परि॰ C ५. स्वाश्रय॰ C ६. चेदं C ७. कर्म om J ८. व्याघातः om J ९. संयोगविभागका॰ C

पेक्षमाणं पश्चादारभते, यथा वा संयोगो गुणकर्मस्वारब्धव्येषु पश्चाद्भाविसंस्कारप्रयत्नादृष्टाख्यं निमित्तमपेक्षते, यथा वा कारणेषु वर्तमाना रूपादयः कार्यरूपादिष्वारब्धव्येषु द्रव्योत्पत्तिमपेक्षन्ते, उत्पाद्यस्याधारभावात्। यदुत्पाद्यं द्रव्यं तत् तेषामाधार इति। न च[१] कर्म पश्चाद्भाविनिमित्तमपेक्षत इत्यनपेक्षत्वं कर्मणः शास्त्रे उक्तम्। न पुनः कर्माश्रयाद्यपि नापेक्षत इति। संयोगे सापेक्षत्वप्रसङ्ग इति चेत्? यदि पश्चाद्भाविनिमित्तान्तरानपेक्षत्वं कर्मणो निरपेक्षत्वार्थः, अपि तर्हि संयोगे कर्तव्ये कर्म सापेक्षं प्राप्नोति, विभागापेक्षित्वात्। न ह्यसति विभागे[२] कर्म संयोगं करोति, तस्माद् विभागापेक्षित्वं कर्मणः प्रसक्तम्। ततश्च तदवस्थः सूत्रव्याघातदोषः।

न, सन्देहात्। किं विभागापेक्षेण कर्मणा संयोगो जन्यते, उत प्रतिबन्धको विभागेन निवर्त्यत इति सन्दिह्यते।

वयं तु ब्रूमः। विभाग उत्पन्नः पूर्वसंयोगनिवृत्तिं करोति। निवृत्ते च संयोगे प्रतिबन्धापगमात् कर्म संयोगं करोति। यथा गुरुत्वं निरपेक्षं कर्मकारणमित्युद्दिष्टं शास्त्रे[३]। अथ च वृन्तफलविभागात् निवृत्ते वृन्तफलसंयोगे गुरुत्वं लब्धवृत्ति पतनकर्म करोति। तथा कर्मापीत्यदोषः। यथा वा संयोगः साधारणकार्यद्रव्यसंयोगविनाशोत्तरकालं द्रव्यान्तरारम्भे निरपेक्षः कारणमिति न विभागापेक्षो द्रव्यमारभते, तथा कर्म संयोगमारभमाणं न विभागमपेक्षिष्यत[४] इति। अतोऽपि[५] न सूत्रव्याघातः।

यदप्युक्तम्, कर्म विना संयोगेन संयोगं करोति, तदपि न, व्याघातात्, न च संयोगोऽस्ति कर्म च संयोगं करोतीति व्याहतम्। न ह्यसति संयोगे वाक्यमेतदर्थवत्तायां व्यवतिष्ठते। अथवा अनेन व्याघातः गतिविभागसंयोगसंयोगाश्च[६] प्रतिषिध्यन्ते, अथ च कर्म संयोगं करोतीति व्याहतम्[७]। अथ मनुषे परमत-

१. न तु C २. हि विभागमन्तरेण C ३. द्र: वै. सू. (च) ५.१.७. ४. ०मपेक्षते C
५. अपि om J ६. ०विभागसंयोगाश्च C ७. व्याहतम् om J

व्यपेक्षोऽयं[१] संयोगविभागकर्मणां प्रतिषेधः, नास्माभिः संयोगविभागकर्माण्यभ्युपगम्यन्त इति, एवमप्यनिवृत्तो व्याघातः। यानि तानि [२]परपक्षाभ्युपगतानि संयोगविभागकर्माणि, तानि भवता कथं प्रतिपद्यन्ते? यदि प्रमाणतः, कथं परपक्षाभ्युपगतानि? अथ प्रमाणमन्तरेण, कथं प्रतिपद्यसे? न हि प्रमाणमन्तरेण काचित् प्रतिपत्तिर्युक्तेति। अथ नैव प्रतिपद्यसे, व्याहतं तर्ह्येतद् भवति परपक्षप्रसिद्धानि संयोगविभागकर्माणीति। अथ ब्रूषे[३] यानि भवताभ्युपगम्यन्ते संयोगविभागकर्माणि, तानि न सन्ति, न पुनः संयोगविभागकर्मणां प्रतिषेधः। कथम्? देशान्तरे [४]अविरलद्रव्योत्पादे गतिव्यवहारः। यः सन्तानोऽविरलो[५] देशान्तरेषूत्पद्यते तत्र गतिव्यवहारः। निरन्तरोत्पादे संयोगव्यवहारः। ये वस्तुनी निरन्तरमुत्पद्येते तयोर्यो निरन्तरमुत्पादः स संयोगः। [६]विपर्ययाद् विभाग इति। अत्र तावदुक्तं वृक्षस्थितिं भावयद्भिः, न प्रमाणाभावादिति। न हि क्षणिकत्वे प्रमाणमस्तीति।

सान्तरनिरन्तरबुद्ध्योश्च निमित्तं वक्तव्यम् । यदि संयोगं विभागं वा नार्थान्तरं प्रतिपद्यसे, सान्तरमिति च बुद्धेर्निरन्तरमिति च बुद्धेर्भेदे निमित्तं वक्तव्यम्[७]। न हि निमित्तभेदमन्तरेण बुद्धीनां भेदो दृष्टो रूपादिवदिति। या चेयमचलति चलतीति बुद्धिः, या असंयुक्ते संयुक्तमिति, या अविभक्ते विभक्तमिति च, सा च प्रधानमन्तरेण न भवति[८]। सर्वा एता मिथ्याबुद्धयः। मिथ्याबुद्धयश्च प्रधानानुकारेण भवन्तीति प्रधानं वक्तव्यम्। न हि निष्प्रधानं भाक्तं दृष्टम्, स्थाणुपुरुषवत्। यथा स्थाणौ सति पुरुषे स्थाणुबुद्धिः, पुरुषे च सति स्थाणौ पुरुषबुद्धिरिति। यदि चार्थान्तरं संयोगो न स्यात् कुण्डलीत्येतस्या बुद्धेः [९]किं निमित्तम्? अवश्यं विधीयमानं प्रतिषिध्यमानं वा निमित्तमुपादेयम्। न तावदियं कुण्डलनिमित्ता बुद्धिः, न देवदत्तनिमित्ता। न च भवता निमित्तान्तरं प्रतिपद्यते। निमित्तान्तरं

---

१. क्षयोक्तम् C २. परमताभ्यु० C ३. मनुषे C ४. विरल० C ५. विरलो C ६. संयोगविप० C ७. ०र्भेदहेतुर्वक्तव्यः C ८. सा च.......न भवति om J ९. किंचिन्निमित्तम्। C

चान्तरेण यथाकथञ्चिद्व्यवस्थिताभ्यां देवदत्तकुण्डलाभ्यां कुण्डलीति बुद्ध्या भवितव्यम्। तस्मादवश्यं विधीयमानं प्रतिषिध्यमानं वा निमित्तान्तरमभ्युपगन्तव्यम्। यदि प्रतिषिध्यमानम्, यदन्यत्र भवति तदन्यत्र प्रतिषिध्यत इति प्रतिषिध्यमानस्य विषयो वक्तव्यः। तस्मात् न कथञ्चन संयोगः प्रतिषेद्धुं शक्यते। इहबुद्धिनिमित्तत्वाच्च। इयमिहबुद्धिः प्रवर्तमाना नर्ते संबन्धात् प्रवर्तते। यथेह कुण्डेवदराणीति। नेयं वदरमात्रनिमित्ता, न कुण्डमात्रनिमित्तेति यदस्या निमित्तं स संयोग इति। इहेति बुद्धिर्यदि संयोगादनियमो न प्राप्नोति। यदि संयोगादिहबुद्धिर्भवति, असति संयोगे इहबुद्धिर्न स्यात्। यथा सन्तीह वने तिलकाः सन्तीह वने किंशुका इति। दूराच्चान्तरमपश्यतां किंकृतेहबुद्धिः? न हि तत्रास्ति संयोग इति। न, इहबुद्धेरुभयनिमित्तत्वात्। उभयमिहबुद्धेर्निमित्तं संयोगो विभागादर्शनं च। तत्रैका मुख्या, एका भाक्ता। या संयोगात् सा तत्त्वबुद्धिः। या विभागादर्शनात् सा भाक्तेति। या चेयं भाक्ता, सा प्रधानसामान्यदर्शनादुपजायते। न सा प्रधानं प्रत्याचष्टे। न हि प्रधानप्रत्याख्यानेन भाक्ता बुद्धिर्भवितुमर्हतीति। सर्वा एव भाक्ता भविष्यन्तीति न युक्तम्, प्रधानापेक्षितत्वादित्युक्तम्, यदपीदमुच्यते विना संयोगेनेहबुद्धिर्दृष्टा, यथा सन्तीह वने तिलकाः सन्ति किंशुका इति, तदत्र संधार्यं किं तत्र संबन्धो नास्ति उत संयोगो नास्तीति। वयं तु ब्रूमः, संयोगो नास्ति न संबन्धः। संबद्धं हि वनं तिलकादिभिरपीति।

किं पुनरिदं वनं नाम? नेदं दुर्वचम्। उक्तमेतद् बहुत्वसंख्या सविशेषणेति, ऊर्ध्वावस्थयोर्द्रव्ययोः[१] संयुक्तबुद्धौ सत्यामिहबुद्धिः कस्मात् न भवति? तयोरेव द्रव्ययोस्तस्मिन्नेव संयोगे सति न भवतीति। [२]किंकृतोऽनियमः? न, अपरिज्ञानात् संबन्धमन्तरेण[३] निर्निमित्तेहबुद्धिर्न भवतीति ब्रूमः। न पुनर्भवत्येवेहबुद्धिः सति संयोग इति। न चोत्तराधरतानपेक्षेण संयोगेनेहबुद्धिर्न क्रियत इति तत्पूर्विका न

---

१. °वस्थिते च द्रव्ये C २. किम्भूतो° C ३. संयोगम° C

भवति। यत् पुनरेतदसति संबन्धे अस्य द्रव्यस्येह समवाय इतीहबुद्धिर्न प्राप्नोति, यथेह तन्तुषु पट इति बुद्धेः समवायो निमित्तम् । न पुनः समवायस्य समवायोऽस्तीति इह समवाय इति न स्यात्। अत्रोक्तम्। किमुक्तम् ? मिथ्याप्रत्यय एवैष इति। किं पुनः समवायवद्भिर्द्रव्यैः समवायस्य सामान्यम्, यदपेक्षया स मिथ्याप्रत्ययः प्रवर्तते? भेदादर्शनम्, यानि समवायवन्ति,न तेषां भेदो दृश्यते। समवाये चैतदस्तीति युक्तो मिथ्याप्रत्ययः। वाक्यधर्मभेदाच्चानियमः। न च य एकस्मिन् वाक्ये धर्मः स वाक्यान्तरेऽपि भवति। यथा राज्ञः पुरुषो गच्छतीति त्रीणि पदानि, त्रीण्यपि स्वेन स्वेनार्थेनार्थवन्ति भवन्तीति उदकस्य भावो भवतीति नैतद्वाक्यसामान्याद् एतस्मिन्नपि वाक्ये त्रीण्यपि पदानि पृथगर्थानि भवितुमर्हन्ति। कः पुनरस्य वाक्यस्यार्थः उदकस्य भावो भवतीति? यावदुक्तं भवति उदकं भवतीति, तावदुक्तं भवति उदकस्य भावो भवतीति। एवमन्यान्यपि वाक्यानि यथा कुण्डे वदराणां वृत्तिरिति वृत्तौ चोदितायां[१] वृत्तिमत्सु वदरेषु संप्रत्ययः। एतदुक्तं भवति कुण्डे वदराणि वर्तन्त इति, तथेह द्रव्ये द्रव्यस्य समवाय इति ब्रुवाणेनोक्तं भवति द्रव्यं द्रव्ये वर्तत इति। तस्माद् अज्ञात्वा वाक्यार्थविभागमिदमुच्यते, अस्य द्रव्यस्येह समवायोऽसति निमित्त इति। तस्माद् उपपन्नमर्थान्तरं संयोग इति। तदुपपत्तौ च न संस्थानविशेषेणावस्थितास्तन्तवः पटबुद्धेः कारणं भवन्तीति।

**अपरे** पुनरन्यथा अर्थान्तरानवयवत्वादित्येतद्वाक्यं वर्णयन्ति, अवयवावयविभावादिति। एतत् तु तैः कुतो लभ्यते? न ह्ययमर्थोऽर्थान्तरानवयवत्वादित्येतस्मिन् वाक्ये श्रूयते। उपनयेन लभ्यत इत्याह, यस्मादयमुपनयः अवयवाश्च तन्तवोऽवयवी च पट इत्युपनयेनावयवावयवित्वादिति हेतुर्लभ्यते। सत्यं लभ्यते, विरुद्धस्तु भवति। न हि तन्तवः स्वात्मनोऽवयवाश्चावयवी च। न पटः स्वात्मनोऽवयवोऽवयवी चेति। किं कारणम्? अवयवावयविशब्दयोः संबन्धिशब्दत्वात्। संबन्धिशब्दावेतौ

---

१. दर्शितायां C

अवयवोऽवयवी चेति। न चान्यतरप्रत्याख्याने संबन्धिशब्दप्रवृत्तिरस्ति। तस्माद् अयमपि न सूत्रार्थः।

दृष्टोऽनर्थान्तरेऽपि प्रदेशप्रदेशिव्यवहारः, यथा आकाशस्य प्रदेशा इति। न, उक्तोत्तरत्वात्। उक्तोत्तरमेतत्। अन्योऽवयवार्थोऽन्यश्च प्रदेशार्थ इति कोऽवयवार्थः? कारणविशेषाभिधानमवयव इति। आधाराभिधानं प्रदेशः प्रदिश्यतेऽस्मिन्निति। न चाकाशं क्वचित् प्रदिश्यते। न चाकाशस्य किञ्चित् कारणमस्ति। तस्मात् न कारणार्थो नाधारार्थ इति। सोऽयमाकाशे प्रदेशशब्दः प्रदेशवदद्रव्यसामान्याद् द्रष्टव्यः। किं पुनः प्रदेशवता द्रव्येण सामान्यम् ? संयोगस्याव्याप्यवृत्तित्वम्। एतं चार्थमुपरिष्टाद् वक्ष्याम इति[1]।

तत्प्रदेशात्मकत्वादिति चेत्? अथ मनुषे अयमन्यो हेतुरवयविनोऽनर्थान्तरत्वप्रसाधकः तत्प्रदेशात्मकत्वम्, कोऽस्यार्थः? अनर्थान्तरं पटात् तन्तवः तत्प्रदेशव्यपदेशविषयत्वात्। इह[2] ये यस्य प्रदेशत्वेन व्यपदिश्यन्ते, ते तस्यात्मानो भवन्ति। यथा आकाशस्य प्रदेशाः। पटस्य च प्रदेशत्वेन व्यपदिश्यन्ते तन्तवः, तस्मात् पटात्मान इति। इदं तावद् यथाश्रुति वाक्यं पूर्ववत् हेतुहीनम्। प्रदेशात्मकत्वस्यार्थान्तरानर्थान्तरयोरदर्शनादसाधारणः। प्रदेशशब्दस्य कारणपर्यायत्वाद् विरुद्धः। तत्प्रदेशव्यपदेशविषयत्वस्य तन्तुभिरसंबन्धादसिद्धः। योऽप्ययं दृष्टान्त आकाशस्य प्रदेश इति, सोऽप्यसिद्धः। कथमिति? आकाशस्य प्रदेश इति संयोगस्याव्याप्यवृत्तित्वमुच्यते। न च संयोगस्याव्याप्यवृत्तित्वमात्रमाकाशम्। तस्मादसिद्धो दृष्टान्तः।

द्रव्यान्तरेभ्यो द्रव्यान्तरानिष्पत्तेर्नान्योऽवयव्यवयवेभ्यः। न किल द्रव्यान्तरेभ्यो द्रव्यान्तरमुत्पद्यमानं दृष्टम्, न च गोहस्त्यश्वेभ्यः पुरुष उत्पद्यते। तन्तुभ्यस्तूत्पद्यते पटः। तस्मात् नासौ तेभ्योऽर्थान्तरमिति। अस्यापि पूर्ववत् हेतुन्यूनता। उपनयेन व्यज्यमानस्तेभ्यस्तूत्पत्तेरिति हेतुः। अयमप्यर्थान्तरानर्थान्तरयोर्व्यावृत्तेरसाधारणः।

---

१. द्रः पृ. २८१.१७ २. त्वादिति C

अर्थान्तराच्च तुर्यादेरर्थान्तरस्य पटस्योत्पत्तिदर्शनाद् विरुद्धः। पटपक्षीकरणे असंबद्धार्थः, न पटः पटादुत्पद्यत इति। अथ तच्छब्देन तन्तवः संबध्यन्ते, तन्तुभ्यः पट उत्पद्यत इति, तथापि विरुद्धः। न तन्तुस्तन्तुभ्यो भवति, पटस्तु भवति।

नान्योऽवयवी अवयवेभ्यः, अवयव्यन्तरावयवानामवयव्यन्तरार्थान्तरभावात्। इह ये अवयविनोऽर्थान्तरं भवन्ति, ते अवयव्यन्तरावयवा भवन्ति। यथा चक्रादयो रथावयवा इति तेऽर्थान्तरं पटात्। यदि च तन्तवोऽपि पटादर्थान्तरं स्युः, तेऽपि पटव्यतिरेकेणावयव्यन्तरावयवाः स्युः। न तु ते तद्व्यतिरेकेणावयव्यन्तरावयवाः, तस्मात् नार्थान्तरमिति। वाक्यमात्रे हेतुन्यूनता असाधारणता च दोषः। हेतुस्तु तद्व्यतिरेकेणान्यानवयवत्वात् न तन्तवस्तन्तूनामवयवा इति विरुद्धः।

अर्थान्तरप्रत्याख्यानाच्चावयवोऽवयवीत्येतन्न स्यात्। यदपीदमुच्यते [१]येऽवयवा अवयविनोऽर्थान्तरं भवन्ति ते तद्व्यतिरेकेणान्यावयवा भवन्ति ,यथा चक्रादय इति। [२]तदपि न, उभयेन व्याघातात्। चक्रादयोऽवयवा इति ब्रुवताभ्युपगतमर्थान्तरं भवति। अनभ्युपगमे वा कोऽस्य वाक्यस्यार्थः चक्रादयो रथावयवा इति? येऽपि[३] चक्रादयो रथस्यावयवत्वेनाभ्युपगम्यन्ते तेऽप्यर्थान्तरप्रतिषेधान्न रथस्य नाप्यन्यस्यावयवा इत्युच्छिन्नोऽवयवावयविशब्दस्य विषयः। तस्मादहेतुरयम्।

नान्योऽवयवी अवयवेभ्यः द्रव्यान्तरोत्पत्तिदेशव्युच्छेदात्[४]। यदुभयपक्षसंप्रतिपन्नमर्थान्तरत्वेन तत् तस्माद् भिन्नदेशमुत्पद्यमानं दृष्टम्। यथा गौरश्वात्। न तु तन्तुभ्यो भिन्नदेशः पट उत्पद्यते। तस्मात् नासौ तेभ्योऽर्थान्तरमिति। अत्रापि हेतुन्यूनता चासाधारणता च पूर्ववत्। तद्देशोत्पत्तेरिति हेतुः। न तन्तुस्तन्तुदेश उत्पद्यत इति विरुद्धः। उत्पत्तिप्रत्याख्यानं वा पटप्रतिषेधात्। यदि तन्तुभ्यः पटो नोत्पद्यते, कः पुनरुत्पत्तिशब्दार्थः। न तन्तुरुत्पद्यते न पट इति उत्पत्तिदेश-

---

१. अवयवा om J २. तदपि om C ३. ये च C ४. व्यवच्छेदात् C

व्युच्छेदात्[१] उत्पत्तिशब्दस्यार्थो वक्तव्यः। स च निरूप्यमाणो व्यक्त्यादिधर्मभेदेनापूर्वं जन्माहेति विरुद्धः।

नान्योऽवयवी अवयवेभ्यः, अवयवान्तरावयविनोऽवयवान्तरार्थान्तरभावात्। इह योऽवयवान्तराणामवयवी भवति, सोऽवयवान्तरेभ्योऽर्थान्तरं भवति। यथा चक्रादिभ्यो घटः। चक्रादिभ्योऽवयवेभ्योऽर्थान्तरं घट इति चक्राद्यवयवव्यतिरेकेणावयवान्तराणामवयवी भवति। न तु पटस्तन्तुव्यतिरेकेणावयवान्तराणामवयवी। तस्मात् नासौ तन्तुभ्योऽर्थान्तरम्। अत्राप्यसाधारणता हेतुन्यूनता च पूर्ववत्। अवयवान्तराणामवयवीति ब्रुवता अवयव्यर्थान्तरभूतोऽभ्युपगतो[२] भवति। शून्यं वा वाक्यम्। अथ नाभ्यनुज्ञायते, कोऽस्य वाक्यस्यार्थः अवयवान्तराणामवयवीति? न ह्यवयविप्रत्याख्याने एतद्वाक्यमर्थवत्तायां शक्यं व्यवस्थापयितुम्। तद्व्यतिरेकेणान्यानवयवित्वं हेत्वर्थः[३]। अस्यापि प्रसङ्गः पूर्ववदिति।

नान्योऽवयवी अवयवेभ्यः सत्यन्यकर्तुरर्थान्तरभावात्। इह ये यस्मिन् सत्यन्यत् कुर्वन्ति, ते तस्मादर्थान्तरं भवन्ति। यथा कटात् तन्तवः। सति कटे अर्थान्तरं पटं कुर्वन्ति[४], कटादर्थान्तरं भवन्ति। न पुनस्तन्तवः सति पटे द्रव्यान्तरं कुर्वन्ति। तस्मात् न तेऽर्थान्तरमिति। अस्यापि हेत्वर्थः सत्यन्याकरणात्। अस्याप्यसाधारणता न्यूनता च पूर्ववत्। सति कटे तन्तवः पटं कुर्वन्तीति ब्रूषे। पटं च कुर्वन्ति[५], न चार्थान्तरमिति व्याहतम्। न हि तन्तवः आत्मानं कुर्वन्ति। पटमप्यर्थान्तरभावात्[६] न कुर्वन्तीति चेत्–न[७], क्रियाविषयोच्छेदप्रसङ्गः[८]। न तन्तव आत्मानं कुर्वन्ति, न चार्थान्तरं कुर्वन्तीति क्रियाविषय उच्छिन्नो भवति।

नान्योऽवयवी अवयवेभ्यः, स्वात्मसंयोगव्यतिरेकभाव्यवयव्यन्यत्वात्। इह ये यस्मादर्थान्तरं भवन्ति, ते स्वात्मसंयोगव्यतिरेकेण भवन्ति। तद्यथा, तन्तुसंयोगव्यतिरेकेण कटो भवति, न च तन्तुसंयोगव्यतिरेकेण पटो भवति। तस्मात् नासौ

१. व्यवच्छेदात् C २. अभ्यनुज्ञातो C ३. हेतुः C ४. कुर्वन्तीति C ५. पटं च कुर्वन्ति om C ६. °न्तराभावात् C ७. न om C ८. °च्छेदः C

तेभ्योऽर्थान्तरम्। अस्यापि हेत्वर्थस्तन्तुसंयोगेभ्यस्तदुत्पत्तेरिति। अस्याप्यसाधारणता हेतुन्यूनता च पूर्ववदेव। तन्तुसंयोगेभ्यस्तदुत्पत्तेरिति ब्रुवता तन्तुव्यतिरिक्तः संयोगश्चावयवी च [१]तन्तुव्यतिरिक्तोऽभ्युपगतो भवति। [२]अनभ्युपगमे च तन्तुसंयोगेभ्यस्तदुत्पत्तेरिति वाक्यार्थो हीयते।

नान्योऽवयवी अवयवेभ्यः, द्रव्यान्तरगुणानां द्रव्यान्तरगुणाकारणत्वेऽगुणत्वप्रसङ्गात्[३]। न किल द्रव्यान्तरगुणेभ्यो द्रव्यान्तरगुणानामुत्पादो दृष्टः। यथा न गोगुणेभ्योऽश्वगुणानाम्। तन्तुगुणेभ्यश्च पटगुणानामुत्पत्तिः। तस्मात् नासौ तेभ्योऽर्थान्तरमिति। सोऽयमपन्यायो वर्तते। कोऽत्रापन्यायः[४]? तन्तुगुणेभ्यश्च पटगुणानामुत्पत्तिं प्रतिपद्यसे न चार्थान्तरं पट इति। न च तन्तुगुणेभ्यस्तन्तुगुणानामुत्पत्तिरिति तन्तुगुणेभ्यस्तद्गुणोत्पत्तेरिति हेतुर्विरुद्धः।

नान्योऽवयवी अवयवेभ्यः, अप्रत्यक्षत्वप्रसङ्गात्। प्रत्यक्षाप्रत्यक्षद्रव्यवृत्तिरवयवी अप्रत्यक्षः स्यात् [५]यद्यवयव्यर्थान्तरं स्यात्। यथा गर्भमातृशरीरसंयोगः प्रत्यक्षाप्रत्यक्षवृत्तिरप्रत्यक्षः, प्रत्यक्षस्त्ववयवी। तस्मात् नासौ तेभ्योऽर्थान्तरम्। प्रत्यक्षत्वादेवार्थान्तरमिति[६] विरुद्धो हेतुः। गर्भमातृशरीरसंयोगश्चाप्रत्यक्ष इति किमयं प्रत्यक्षाप्रत्यक्षाभ्यामारम्भादप्रत्यक्षः[७], उत प्रत्यक्षाप्रत्यक्षवृत्तित्वादप्रत्यक्ष इति? यदि प्रत्यक्षाप्रत्यक्षाभ्यामारम्भादप्रत्यक्ष इति हिमवत्परमाणुकमप्रत्यक्षं प्राप्नोति। तस्य ह्येकोऽवयवः प्रत्यक्षः, एकोऽप्रत्यक्ष इति। अथ प्रत्यक्षाप्रत्यक्षवृत्तित्वादप्रत्यक्षः, भावोऽप्रत्यक्षः [८]प्राप्नोति, स हि प्रत्यक्षाप्रत्यक्षवृत्तिरिति। न चायं पक्षोऽस्ति अवयवानां [९]प्रत्यक्षत्वादवयवी प्रत्यक्ष इति। उक्तं चात्र। किमुक्तम्? येषामिन्द्रियेण सन्निकर्षोऽस्त्यवयवानां तैः सहावयवी गृह्यते। येषां नास्ति तैः सह न गृह्यते। न चैतत्कृतोऽस्ति भेदः। अवयवानामप्रत्यक्षत्वादवयविनोऽप्रत्यक्षत्वं ब्रुवतः

---

१. तन्तुव्यतिरिक्तः om C　२. अनभ्युपगमे च........हीयते। om C　३. °गुणाकारणत्वात् J　४. अन्या° J　५. अवयवी om J　६. °देव नार्था° C　७. द्र: वै. सू. (च) ४.२.१　८. स्यात् C　९. अप्रत्यक्षत्वे अवयवी न प्रत्यक्ष इति C

सर्वमतीन्द्रियं प्राप्नोति। न हि कस्यचिद् मध्यभागापरभागावुपलभ्येते इति। सोऽयं प्रत्यक्षस्य विषय उच्छिन्नो भवति।

प्रत्यक्षत्वादिति ब्रुवाणेनावयवव्यतिरिक्तोऽवयवी अभ्युपगतो भवति, परमाणूनामतीन्द्रियत्वात्। न हि परमाणवः कदाचित् केनचिदुपलभ्यन्त इति। न परमाणवोऽतीन्द्रिया रूपादिमतामतीन्द्रियत्वनिवृत्तेः। न हि रूपादिमत् किञ्चिदतीन्द्रियं दृष्टमिति। दृष्टं तु रूपादिमदैन्द्रियकं घटादि। ऐन्द्रियकाः परमाणव इति कोऽर्थः? किं तावद् इन्द्रियकरणप्रत्यक्षाः उत इन्द्रियसंबद्धा इति? किं चातः? यदीन्द्रियकरणप्रत्यक्षा ऐन्द्रियका इति तन्न युक्तम्। न हीन्द्रियमन्यस्यान्यथार्थं प्रकाशयति, अन्यथान्यस्येति इन्द्रियवृत्तीनामविकल्पकत्वात्। भवतां च[१] परमाणव ऐन्द्रियकाः, अस्मदादीनामप्यैन्द्रियकाः स्युः। अथेन्द्रियसंबद्धा ऐन्द्रियका इति, तस्मिन् न विरोधः। न हि परमाणव इन्द्रियेण न संबध्यन्त इति। तस्मादिन्द्रियसन्निकर्षे सत्यपि महत्त्वाभावात् न परमाणव उपलभ्यन्त इति।

कथं पुनरवगम्यते महत्त्वमप्युपलम्भे [२]रूपवत्कारणमिति? भावाभावयोः तद्वत्त्वात्। यस्मात् सति महत्त्वे रूपे चोपलब्धिर्भवति असति च न भवति तस्माद् उभयं कारणमिति। यत् त्वत्रोक्तं तेजःस्पर्शवदिति, सति तेजःस्पर्शे उपलब्धिर्भवति, असति च न भवति। न च तेजःस्पर्शोऽपि रूपवद् द्रव्योपलब्धेः कारणमिति। तन्न, व्यभिचारात्। व्यभिचारी स्पर्श उपलब्धेर्न कारणम्। न पुना रूपमहत्त्वे क्वचिद् व्यभिचरतः। तस्माद् रूपमहत्त्वे एवोपलब्धेः कारणमिति। अयं चार्थः **सूत्रकारेण** सूत्रद्वयेनोक्तः,

अद्रव्यत्वात् परमाणावनुपलब्धिः।

रूपसंस्काराभावात् [३]वायावनुपलब्धिः[४]।

इति। रूपसंस्कारो रूपसमवाय इति सूत्रार्थः। अथ पुनः स्पर्शस्यापि रूपमहत्त्ववदव्यभिचारः, कस्मात् स्पर्शो न कारणमिति वक्तव्यम्। समवधार्य चैतद्

१. चेत् C २. रूपवतः का॰ Pañjikā ३. वायोः C ४. द्रः वै.सू. (च) ४.१.७-८

भवताभिधीयते स्पर्शवदेतत् स्यादिति। येन च प्रमाणेनावधृतमेतत् स्पर्शो न कारणमिति, मयापि तत एवाकारणत्वम्। अथाकारणत्वप्रतिपादकं न प्रमाणमस्ति, को ह्यस्य वाक्यस्यार्थः स्पर्शवदेतत् स्यादिति? तद्भावभावित्वं च व्यभिचारयता कार्यकारणधर्म उच्छिन्नो भवति। इदमस्य कार्यमिदमस्य कारणमिति परेण पर्यनुयुक्तः तद्भावभावित्वव्यतिरेकेण केनान्येन प्रतिपादयसि[1]? अतो विरोधादनुत्तरमेतत्।

यत् पुनरेतत्, अतीन्द्रियसंयोगातीन्द्रियत्वादिति— अतीन्द्रिययोः किलात्ममनसोर्यः संयोगः सोऽप्यतीन्द्रियो दृष्ट इति। यदि च परमाणवोऽतीन्द्रियाः स्युः, तत्कार्यमप्यतीन्द्रियं स्यात्। ऐन्द्रियकं तु दृष्टम्। तस्माद् ऐन्द्रियका इति। सोऽयं दृष्टान्तप्रयोगः। अतीन्द्रियसंयोगातीन्द्रियत्वादिति। दृष्टान्तप्रयोगमात्रे च हेतुन्यूनता। योऽप्यत्र कथञ्चित् हेतुर्लभ्यते, नातीन्द्रियकार्यं महाभूतादि व्यक्तमैन्द्रियकत्वात् घटादिवदिति। घटाद्यैन्द्रियकमैन्द्रियककार्यं दृष्टम्। तथा च महाभूतादि व्यक्तमैन्द्रियकम्। तस्मात् तदप्यैन्द्रियककार्यमिति। अयमपि प्रत्यक्षविरोधाद् विरुद्धः, अनुष्णोऽग्निः कृतकत्वादिति यथा।

**एके**[2] तु वातायनच्छिद्रदृश्यं त्रुटिं परमाणुं वर्णयन्ति। तन्न युक्तम् तस्य भेद्यत्वात्। अभेद्यः परमाणुर्भिद्यते च त्रुटिरिति। कथमवगम्यते भिद्यत इति? द्रव्यत्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वात्, घटादिवत्। कथं चान्यथाभेद्यः सन् परमाणुरित्युच्यते? अनित्यत्वाच्च न परमाणुः सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वाच्च। तस्मात् नैन्द्रियकाः परमाणवः, तेषामतीन्द्रियत्वात्। यत् प्रत्यक्षं तदन्यदिति विरुद्धो हेतुः।

संहतानामुत्पत्तिनिरोधात् नासंहतः परमाणुरस्ती**त्यपरे**[3]। अपरे च संहतं परमाणुं वर्णयन्ति। संहता एवोत्पद्यन्ते निरुध्यन्ते च। असंहतास्तु परमाणवो न सन्त्येवेति। तदयुक्तम्, संहतार्थस्यानुक्तत्वात्। असंहताः परमाणवो न सन्तीति

---

१. °व्यतिरेकेणान्येन न प्रति° C २. मीमांसकाः J f.n. ३. बौद्धैकदेशिनः J f.n.

ब्रुवता संहतशब्दस्यार्थो वक्तव्यः। संघातो हि नाम बहूनामकार्यकारणभूतानां संयुक्तानामवस्थानम्। न चासंहतप्रतिषेधे संघातस्य निमित्तमस्ति संहन्यमानतन्त्रत्वात्। नित्यमयं संघातः संहन्यमानतन्त्रो भवति। न चासंहतप्रतिषेधे संहन्यमानमस्ति। तस्मात् न संघातोऽस्तीति व्याघातात्[1] न किञ्चिदेतत्। एकप्रतिषेधादनेकाभ्युपगमवत्। यथा नाम कश्चिन्मुग्ध एकप्रतिषेधादनेकमभ्युपेयात् तस्य चैकप्रतिषेधादनेकं निवर्तते, एकसमुदायत्वादनेकस्य तथाविधमिदं भवतीति।

इतश्च नान्योऽवयवी अवयवेभ्यः, संयोगाप्राप्त्यभावात्। यत् खलु यस्मादर्थान्तरं भवति तस्य तेन संयोगो भवति। अप्राप्तिर्वा यथा गवाश्वस्य। न पुनस्तन्तुभिः पटस्य संयोगो नाप्यप्राप्तिः। तस्मात् नासौ तेभ्योऽर्थान्तरमिति। अवयविनः पक्षीकरणे संयोगविभागाभावस्य संयोगविभागविषयत्वादसंबद्धम्। अथासंयोगित्वाविभागित्वे हेतू[2], ते अप्यसिद्धे। संयुज्यते चायं विभज्यते चायमिति। अथ स्वावयवेनासंयोगित्वात् सोऽप्यनुपसंहार्यः नास्यान्वयो न व्यतिरेक इति। अथापि सर्पकुण्डलकाद्युदाहरणं स्यात्, यथा सर्पकुण्डलकादि किल स्वकारणेनासंयोगि न चार्थान्तरमिति, तदसिद्धम्। यथा चार्थान्तरं सर्पकुण्डलकादि तथोक्तं पुरस्तादिति। यदपि स्वकारणेनासंयोगीति, तदत्र चिन्त्यम्। किं गुणत्वात् स्वकारणेनासंयोगि अथानर्थान्तरभावात्? वयं तु ब्रूमो गुणत्वात् नानर्थान्तरभावादिति। गुणश्च सर्पकुण्डलकसंयोगः। स चार्थान्तरमिति प्रतिपादितमेतत्। अर्थान्तरभावे च दर्शनाद् विरुद्धः। सत्त्वरजस्तमांसि भवतां पक्षे मिथोऽर्थान्तरभूतानि। तेषां च न संयोगो नाप्राप्तिरिति। प्रधानपुरुषयोश्च न संयोगो नाप्राप्तिरुभयोर्व्यापकत्वादिति विरुद्ध इति।

नान्योऽवयवी अवयवेभ्यः, गुरुत्वान्तरकार्याग्रहणादिति। गुरुत्वान्तरकार्याग्रहणादित्येतन्न कथञ्चिदपि पक्षेण संबध्यते। क्व च नान्योऽवयवी अवयवेभ्यः। क्व च गुरुत्वान्तरकार्याग्रहणम्? गुरुत्वान्तरकार्याग्रहणाच्च गुरुत्वान्तरकार्यं

---

१. नासंहतोऽस्तीति विरोधात् C   २. हेतुभूते C

न स्यात्। न गुरुत्वं न गुरुत्वान्तरं नावयवी। नोदकप्रतिषेधात् कमण्डलोः कपालानां वा प्रतिषेधो युक्तः।

**एके** तु गुरुत्वान्तरकार्याग्रहणादित्यनेन गुणान्तरारम्भं प्रतिषेधन्ति। उदाहरणमात्रार्थत्वात् गुरुत्वान्तरारम्भप्रतिषेधस्य। कथमिति? न कार्यं कारणरूपादिपूर्वकरूपादिमत् गुरुत्वान्तरवत्त्वप्रसङ्गात्। यदि कारणगता रूपादयः कार्ये रूपादीन् आरभेरन् अपि तर्हि कारणगतान्यपि गुरुत्वानि कार्ये गुरुत्वान्तरमारभेरन्। ततश्च गुरुत्वान्तरवत् कार्यमुपलभ्येत। न तूपलभ्यते। तस्मात् न कारणरूपादिपूर्वकरूपादिमत् कार्यमिति। सत्यमुपपादितः पक्षधर्मः। स तु प्रत्यक्षविरोधात् न किञ्चित्। कथमिति। अभ्युपेत्य कार्यं रूपादयः कार्ये प्रतिषिध्यन्ते। कार्याभ्युपगमाच्च प्रतिषेध्यमनुज्ञातं भवति। कारणरूपादयश्च कार्ये रूपादीन् नारभन्त इति ब्रुवतः कार्यमगुणं स्यात्। न त्विदमगुणं दृश्यते। ततश्च विरोधादयमहेतुः। अथ कार्यं नैवास्ति, न कार्यं कारणरूपादिपूर्वकरूपादिमदित्यनर्थकम्। न हि कमण्डलोरभावे अनुदकः कमण्डलुरिति युक्तं वक्तुम्। एतेन कार्ये रूपादिप्रतिपत्तिः प्रत्युक्ता। यश्चायं हेतुर्गुरुत्वान्तरवत्त्वप्रसङ्गादिति, अयमप्यभ्युपगमात् न किञ्चित्। नाभ्युपगमा एव दोषत्वेन नोद्यन्ते[1]। यदि तर्हि गुरुत्वान्तरवत् कार्यद्रव्यं रूपाद्यन्तरवच्च ततो गुरुत्वान्तरकार्यमुपलभ्येत यथा रूपाद्यन्तरकार्यम्। न तूपलभ्यते। न हि तुलायां विभक्तपिण्डद्वयोपन्यासवत् संबद्धयोरपि कार्यभेदं पश्यामः, तस्माद् विभक्तयोरिव तयोः संयुक्तयोरपि नास्ति द्रव्यान्तरारम्भः।

**केचित्** तु न गुरुत्वान्तरवत्कार्यद्रव्यवती तुलेति पक्षयित्वा अवनमनविशेषाभावादिति हेतुं ब्रुवते। सोऽयं व्यधिकरणः, अवनमनविशेषाभावस्यातुलाधर्मत्वात्। न ह्यवनमनविशेषाभावस्तुलाधर्म इति। एवं तु युक्तमुत्पश्यामः। अवनमनविशेषानाधारत्वात् न गुरुत्वान्तरवत् कार्यद्रव्यवती तुलेति। असिद्धस्तावदयं हेतुः, अवनमनविशेषानाधारत्वस्यातुलावृत्तित्वात् न तद्वृत्तानुपलब्धेः। अयमप्य-

१. ०गम एव....देश्यते C

नैकान्तादहेतुः गुरुत्वान्तरवद्द्रव्यसन्निपाते सत्यवनमनविशेषानाधारत्वस्य दृष्टत्वात्। यथा गुरुत्ववति द्रव्ये उन्मीयमाने त्रुटिभूते रजसि गुरुत्ववति सन्निपतित इति। महागुरुत्वे चोन्मीयमाने गुरुत्वमात्रोपहितानामप्यवनतिविशेषं न करोति। समहीनाधिकप्रसङ्ग इति चेत्? यदि तावत् कारणगुरुत्वैः समं कार्यगुरुत्वं यावद् द्विपलाभ्यामसंबन्धेऽवनमनं द्विस्तावत् संबन्धे सति स्यात्। अथ कारणगुरुत्वादधिकं कार्यगुरुत्वम्, तथाप्यधिकतरं प्रसज्येत। अथ कारणगुरुत्वात् हीनं कार्यगुरुत्वम्, तथापि विशेषो गृह्येत। न त्विदमस्ति। तस्मात् न कार्ये गुरुत्वमस्ति। न, कार्यकारणगुरुत्वेयत्तानवधारणात् यद्येतदवधारितं स्यात्, एतावत् कारणेषु गुरुत्वम्, इयत् कार्य इति[1], तत एतद् युज्येत वक्तुं समहीनाधिकप्रसङ्ग इति। तत् तु नावधारितम्, इयत् कारणे गुरुत्वमियत् कार्य इति। यदि कार्यकारणगुरुत्वे नावधार्येते, योऽयं प्रत्ययस्तुलयोन्मीयमाने द्रव्ये द्विपलं पञ्चपलमिति स न प्राप्नोति। न न प्राप्नोति, द्रव्यसमाहारगुरुत्वावधारणात्। यदिदं भवान् मन्यते द्विपलं पञ्चपलमिति नात्र कार्यकारणगुरुत्वे अवधार्येते। किं त्वा चरमात् आ च परमाणोर्द्रव्यसमाहार उन्मीयते। तन्मनुष्यधर्मणो न युक्तं वक्तुम् इयत् कारणगुरुत्वमियत् कार्यगुरुत्वमिति। न च समाहारः कारणमपि त्वनारब्धकार्यं चरमद्रव्यं कारणमिति।

**केचित्** त्वारभ्यारभन्त इति प्रतिपद्यन्ते। तान् प्रतीदमुच्यते। न पूर्वोत्तरकार्यद्रव्ये समानदेशे मूर्तिमत्त्वात् घटादिवदिति। शेषस्त्वारभ्यारम्भकविचारो नाप्रस्तुतत्वात् निराक्रियते[2]। निरनुमानं तर्हि कार्यगुरुत्वम्। यदि गुरुत्वान्तरवद् द्रव्योपचये सति कार्ये भेदो न गृह्यते। निरनुमानं तर्हि कार्यगुरुत्वं कथं प्रतिपत्तव्यमिति[3] क एवमाह, कार्यगुरुत्वं न गृह्यत इति। यदि गृह्यते, किं तत्? पतनम्। न हि कार्यगुरुत्वमन्तरेण कार्यपातेऽन्यो हेतुरस्ति। तस्मात् गुरुत्वान्तरवत् कार्यमिति। एतेन तुलावनतिविशेषस्याग्रहणात् कार्ये न गौरवमिति प्रत्युक्तम्। अथ मन्यसे

१. कारणगुरुत्वमेतावत् कार्यगुरुत्वमिति C २. अप्रस्तुतत्वात् न क्रियते J ३. गृह्यते कथं प्रतिपद्येत इति? C

कारणगुरुत्वैरेव कार्यं पात्यते न कार्ये गुरुत्वमस्ति। अतः कार्यपातस्यान्यनिमित्तत्वात् न सिध्यति गुरुत्वान्तरवत् कार्यमिति। न, कार्यकारणयोरसंयोगात्। यत्र गुरुत्वमाश्रयान्तरे पातहेतुर्भवति तत्र संयोग उपकरणम्। यथा तुलापटलके गुरुत्ववद्द्रव्यसंयोग इति। न तु कार्यकारणयोः संयोगोऽस्ति, अयुतसिद्धत्वात्। युतसिद्धिरसंबद्धस्य विद्यमानता। न पुनः कार्यं कारणासंबद्धं विद्यते। [1]जातं संबद्धं चेत्येकः कालः। तस्मात् न कार्यकारणे संयुक्ते। समवायोपकरणं गुरुत्वं पातयिष्यतीति चेत्— न, असंकीर्तनाद् विरोधाच्च। अथ मन्यसे सत्यं न कार्यकारणयोः संयोगोऽस्ति, अपि तु[2] समवायः। समवायो गुरुत्वापेक्षः कार्यं पातयिष्यतीति न सिध्यति कार्यगुरुत्वम्। न, असंकीर्तनात्। न समवायः क्वचिदपि क्रियाहेतुत्वेन संकीर्तितः **सूत्रकारेण** यथा संयोगः।

नोदनाभिघातात्संयुक्तसंयोगाच्च पृथिव्यां कर्म[3]

इति। न केवलमसंकीर्तनादेव, विरोधाच्च। यदि च समवायः क्रियाहेतुः स्यात् कारणरूपादयोऽपि कार्येणैकार्थसमवायात् पतेयुः। पतन्तु रूपादयोऽपि, किं नो बाध्यत इति चेत्— न, गुरुत्वस्यापि पातप्रसङ्गात्। यथा रूपादयः कार्यद्रव्यं पतदनुपतन्ति, तथा गुरुत्वमप्यनुपतेत्। गुरुत्वं चानुपतत् कुतः पततीति वक्तव्यम्। न गुरुत्वस्य गुरुत्वान्तरं पातहेतुरस्ति। तस्मात् न गुरुत्वं पतति न रूपादयः पतन्तीति। यदि रूपादयो न पतन्ति द्रव्ये पतति तिष्ठेयुरित्यद्रव्या रूपादयः स्युः। द्रव्यं च रूपादिहीनमुपलभ्येत। अथ द्रव्ये पतति पतन्ति। क्रियावन्तो रूपादयः प्राप्नुवन्ति। अथ न तिष्ठन्ति न पतन्ति, सोऽयं युक्तिविरोधः। अवश्यं भवताभ्युपगन्तव्यम् पतति पतन्ति, पतति वा तिष्ठन्तीति। वेद पुनर्भवान् युक्तायुक्तयोर्नाना कारणम्। वेद्मीति परः, युक्तं प्रमितमयुक्तमप्रमितम्। अयुक्तं तर्हीदं पतति पतन्ति पतति वा तिष्ठन्तीति। तच्चोक्तम्, गुरुत्वस्य गुरुत्वान्तरप्रसङ्गात्, रूपादिशून्यस्य च द्रव्यस्यादर्शनात्, अद्रव्याणां च रूपादीनामदर्शनादिति। यच्च

१. जातः संबद्धश्चे° C    २. अस्ति च C    ३. वै.सू. (च) ५.२.१

पतति गच्छति वा तत्प्राप्तं जहाति अप्राप्तं च प्राप्नोति। न पुना रूपादयः प्राप्तं जहति अप्राप्तं च प्राप्नुवन्ति। रूपादयोऽप्राप्तं न प्राप्नुवन्तीति न युक्तम्, भवति हीदं द्रव्ययोः प्राप्तयो रूपे अपि प्राप्ते इति। न, सन्देहात्। किमयं प्राप्तिप्रत्ययः प्राप्ति-निमित्त आहो अप्राप्तेरदर्शननिमित्त इति सन्दिह्यते। वयं तु ब्रूमोऽप्राप्तेरदर्शननिमित्त इति। न हि द्रव्ययोः प्राप्तयो रूपयोरयमप्राप्तिं पश्यति। द्रव्ययोरप्येवमेवेति चेत्- अथ मन्यसे यथा रूपयोः प्राप्तिप्रत्ययोऽप्राप्तेरदर्शननिमित्तः, एवं द्रव्ययोरप्राप्त्य-दर्शननिमित्तो भविष्यति न प्राप्तिनिमित्त इति। नैष दोषः। प्रत्ययद्वैतस्यानेक-निमित्तत्वात्। इह खलु प्रत्ययद्वैतमेकनिमित्तं दृष्टम्। तद् यथा चित्रगतासु प्रतिकृतिषु क्रोधभयपरिहारेऽपि[१] क्रुद्धभीतप्रत्यया भवन्तीति न तावता पुरुषेष्वपि क्रोधभया-भावे क्रुद्धभीतप्रत्ययाः प्रादुर्भवितुमर्हन्तीति। एवमयं प्राप्तिप्रत्ययः क्वचित् संयोगनिमित्तः क्वचिदप्राप्तेरदर्शननिमित्त इति। तस्माद् व्यवस्थितं न गुरुत्वं पतति, न रूपादयः पतन्तीति।

**अपरे** तु कार्यगुरुत्वेन [२]कारणगुरुत्वप्रतिबन्धं ब्रुवते। कार्यगुरुत्वेन किल कारणगुरुत्वानि प्रतिबद्धानि। अतोऽवनतिविशेषो न भवतीति। एतत् तु न युक्त-मिति पश्यामः। कुतः? कार्यकारणयोः पातदर्शनात्। यदि कार्ये पतति कारणमव-तिष्ठेत, प्रतिपद्येमहि कार्यगुरुत्वेन कारणगुरुत्वं प्रतिबद्धमिति। न त्विदमस्ति। अतो न युक्तमेतत्। अनाधारत्वप्रसङ्गाच्च। यदि कार्यगुरुत्वेन कारणगुरुत्वं प्रतिबद्धं न कारणे क्रियामारभेत। कार्ये पतति न कारणं पतेदिति कार्यमनाधारं स्यात्। एतेन कार्यगुरुत्वेन कारणगुरुत्वविनाशोऽपि व्याख्यातः। विभक्तानां च पातो न स्यादि-त्यधिकम्। यदि च कार्यगुरुत्वेन कारणगुरुत्वं विनाश्येत, कार्यद्रव्यविनाशे कारणानां विभक्तानां पातो न स्यात्। गुरुत्वमेव च न स्यात्, यदि कार्यगुरुत्वेन कारणगुरुत्वं विनाश्येत। अपि तर्हि न क्वचिद् गुरुत्वं स्यात्। न हि कस्यचित् परमाणोरतीतं कार्यं नास्तीति, अतोऽगुरवः परमाणवः स्युः। परमाणुषु च

१. °परिहाराय J २. °गुरुत्वं प्रतिबद्धं C

गुरुत्वाभावात् कार्ये गुरुत्वं कुत उत्पद्येत। तस्मादप्रतिषेधोऽयं कार्यगुरुत्वैः कारणगुरुत्वानां [१]विनाशप्रतिबन्धाविति। अतः पूर्व एव प्रतिषेधो नानैकान्तादिति कार्यकारणगुरुत्वानवधारणाच्च। तदेवमवयविनोऽसत्त्वाव्यतिरेकप्रतिपादकं न प्रमाणमस्तीति। अतः

**साध्यत्वादवयविनि सन्देहः**

इत्ययुक्तम्।

इतश्च साध्यत्वादवयविनि सन्देहो न युक्तः, असंकीर्तनात्। न हि साध्यत्वं संशयहेतुरिति संकीर्तितं क्वचिदपि। अतो न संभवति साध्यत्वात् संशयः। क एवमाह साध्यत्वात् संशयः? अपि तु साध्यत्वाद् विप्रतिपत्तिः, विप्रतिपत्तेः संशय इति। साध्यत्वकार्यायां विप्रतिपत्तौ साध्यत्वमध्यारोप्योक्तं

**साध्यत्वादवयविनि सन्देहः**

इति ॥३३॥

## सर्वाग्रहणमवयव्यसिद्धेः ॥२।१।३४॥

संशयापाकरणार्थं सूत्रम्

**सर्वाग्रहणमवयव्यसिद्धेः**

इति। सर्वेषामर्थानामग्रहणं प्रसज्येत यद्यवयवी अर्थान्तरभूतोऽवयवेभ्यो नास्तीति। कथमिति? परमाणवस्तावद् दर्शनविषयभावं न प्रतिपद्यन्ते, अतीन्द्रियत्वादित्युक्तम्। अवयविद्रव्याणि च भवद्भिर्न प्रतिपद्यन्ते, तदनभ्युपगमे च योऽयं द्रव्यप्रत्ययः कुम्भ इति, गुणप्रत्ययः श्याम इति, क्रियाप्रत्ययश्चलतीति, सामान्यप्रत्ययोऽस्तीति, विशेषप्रत्ययः कलश इति, समवायप्रत्यय इह घटे रूपादय इति, तथा अन्येऽपि प्रत्यया एको महान् संयुक्तो विभक्तः पृथक् परोऽपर इति च न स्युः। अस्ति च

१. विनाशः प्रति॰ J

सर्वस्य ग्रहणं द्रव्यगुणकर्मादिप्रपञ्चस्य। तेन सर्वस्य ग्रहणात् पश्यामोऽवयवातिरिक्तोऽस्त्यवयवीति।

अथ वा सर्वाग्रहणमिति सर्वैः प्रमाणैरग्रहणम्। कथम्? प्रत्यक्षस्य वर्तमानमहद्विषयत्वात्। यद् वर्तमानं महच्च, तद् बाह्यकरणप्रत्यक्षम्। घटाद्यवयविप्रत्याख्याने च न बाह्यकरणप्रत्यक्षविषयोऽस्ति। तस्याभावादनुमानादेरप्यभावः। सेयं सर्वप्रमाणनिवृत्तिः। उपलभ्यन्ते चार्थाः प्रत्यक्षादिभिः प्रमाणैः। तैः सर्वैर्ग्रहणात् पश्यामोऽस्त्यवयवीति। तदिदं सूत्रमवयव्यनभ्युपगमे विरोधप्रदर्शनपरम्। सोऽयं सर्वाकारो विरोधो लोकपरिदृष्टप्रत्ययोच्छेद इति॥३४॥

**धारणाकर्षणोपपत्तेश्च॥२।१।३५॥**

अवयव्यर्थान्तरभूत इति चार्थः। किमिदं धारणं नाम? एकदेशग्रहणसाहचर्ये सत्यवयविनो देशान्तरप्राप्तिप्रतिषेधो धारणम्। यदायमवयविन एकदेशं गृह्णाति, तदैकदेशग्रहणेन सहावयविनमपि गृह्णाति। तेन च ग्रहणेन यदवयविनो देशान्तरप्राप्तिनिवारणं[१] तद् धारणम्। आकर्षणं नामैकदेशग्रहणसाहचर्येण यदवयविनो[२] देशान्तरप्रापणं पूर्ववत्। कुत एतत्? लोकतः। लोकः खलु धारणाकर्षणे एवं प्रयुङ्क्ते इति। ते एते धारणाकर्षणे अवयविनं साधयतः। कथमिति? निरवयवेऽवयवे चादर्शनात्। न हि धारणाकर्षणे निरवयवे अवयवे च दृष्टे। दृष्टे च धारणाकर्षणे। तस्मादवयविधर्माविति।

यत् त्वत्रोक्तम्, संग्रहकारिते वै धारणाकर्षणे नावयविकारिते, पांशुराशिप्रभृतिष्वभावात्। तृणोपलकाष्ठादिषु जतुसंगृहीतेषु दर्शनादिति। तन्न, अनवधारणात्। न ब्रूमः सर्वस्मिन्नवयविनि धारणाकर्षणे भवतः, अपि त्वन्यत्र न भवतः। न च विरोधोऽवयविष्वेव दर्शनात्। यानि तानि तृणोपलकाष्ठानि जतुसंगृहीतान्या-

१. °निराकरणं C २. °चर्येऽवयविनः J

कृष्यन्ते, धार्यन्ते चेति मन्यसे[1], अवयविन एव ते। यदि तु निरवयवे अवयवे वा धारणाकर्षणे स्यातां स्याद् विरोधः। यत् त्विदमुच्यते, संग्रहकारिते ते इति। न, विशेषहेत्वभावात्। संग्रहकारिते धारणाकर्षणे नावयविकारिते इति न भवता विशेषहेतुरपदिश्यते। पांशुराशिप्रभृतिषु च कस्मात् संग्रहो नास्तीति वाच्यम्। य एवात्र संग्रहाभावे भवतो हेतुः, स एवावयविनो विद्यमानस्य धारणाकर्षणयोरभाव इति। कः पुनरसौ? उक्तोऽसावेकदेशगृहीतस्य तत्सहचरितस्य संबन्धविशेष इति। स च पांशुराशिप्रभृतिषु नास्ति। तस्मात् न तत्र धारणाकर्षणे इति सोऽयं व्यतिरेकी हेतुः।

अथेदानीमन्वयिनो हेतोः प्रयोगमुपन्यसिष्यन्निदमाह–अथावयविनं प्रत्याचक्षाणको मा भूत्, प्रत्यक्षलोप इत्यणुसञ्चयं दर्शनविषयं प्रतिजानानः किमनुयोक्तव्य इति। एकबुद्धेर्विषयं पर्यनुयोज्यः। येयं बुद्धिरेकमिदं द्रव्यमिति किमियं नानाविषया उताभिन्नविषयेति। यदि नानाविषया, बहुष्वदर्शनादयुक्ता। न हि बहुष्वेकमिदमिति युक्तः प्रत्ययः। अथाभिन्नार्थविषया, योऽसावेकबुद्धेर्विषयः सोऽवयवीति। एकानेकबुद्धी भिन्नविषये विशेषवत्त्वात् रूपादिविषयबुद्धिवदिति। अथ वाप्येकानेकबुद्धी भिन्नविषये समुच्चितासमुच्चितविषयत्वाद् इदमिति, इदं चेदं चेति यथा॥३५॥

**सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम्॥२।१।३६॥**

**सेना...नाम्** इति। सेनावनवद् ग्रहणमिति चेत्, अथ मन्यसे असत्यर्थान्तरभावेऽसति चैकानेकविभेदे दृष्टो बुद्धिविशेषो यथा[2] अन्या सेनाबुद्धिरन्या गजादिबुद्धय इति, तथा अन्या धवादिबुद्धयोऽन्या च वनबुद्धिरिति। न च तावता सेना वनं चार्थान्तरम्। तस्मादनैकान्तिकत्वादहेतुरिति।

१. इति मन्यसे om C २. यथा om C

इदं तावत् सूत्रं साधनपक्षे दृष्टान्तमात्रत्वाद्[१] असंबद्धम्, अनैकान्तिकीकरण-पक्षे तु न, [२]असिद्धत्वात् केन सेनावनयोरनर्थान्तरभावोऽभ्युपगम्यते? यथा च सेनावनान्यर्थान्तरभूतानि तथोक्तम्। अभेदप्रत्ययस्य चानेकनिमित्तत्वात् न युक्तम्। अस्त्ययमभेदप्रत्ययोऽभिन्न एव। अस्ति च भिन्ने उपलभ्यमाने भेदस्यादर्शनात्। अभिन्ने तावदेकप्रत्ययः यदेकमुभयपक्षसंप्रतिपत्त्या व्यवस्थितम्। एकं नास्तीत्यनेकप्रत्ययो व्याहतः। एकसमुच्चयो ह्यनेकमिति। अनेकस्मिन्नुपलभ्यमानेऽपि भेदस्यादर्शनादभेदप्रत्ययो भवति। भेदस्य चादर्शनमारान्निमित्तात्। यथा सेनादिषु। यानि तानि सेनाङ्गानि हस्त्यादीनि तान्येकश उपलभ्यमानपृथक्त्वानि आरान्निमित्ताद् भेदं नोपलम्भयन्ति। भेदानुपलब्धेर्भिन्ने वस्तुन्यभिन्नप्रत्ययः। न तु परमाणवः केनचिदुपलभ्यन्ते, कस्मात्? अतीन्द्रियत्वादणूनामिति।

अतीन्द्रियाः परमाणव इति प्रतिपादितमेतत्। यश्चैन्द्रियकः पदार्थः स उपलब्ध-पृथक्त्वः सन् आरात् पृथक्त्वस्याग्रहणे अभेदप्रत्ययनिमित्तं भवति। यथोपलभ्यमानजातीयानामारात् न जातिग्रहणम्, उपलभ्यमानप्रस्पन्दानां च नारात् प्रस्पन्द-ग्रहणमिति। गृह्यमाणाग्रहणस्य चान्यनिमित्तत्वात्, यच्चेदं गृह्यमाणस्य पदार्थस्याग्रहणं तदन्यनिमित्तं दृष्टम्, यथा तेषामेव सेनावनाङ्गानाम्। न तु परमाणवो गृह्यन्ते, अतीन्द्रियत्वात्। तस्मात् न तेषामन्यनिमित्तमग्रहणमिति।

अनुपजातविशेषाणां च बुद्धिभेदाहेतुत्वात् विरोधः। यस्य परमाणवो घटादि-बुद्धिहेतवो भवन्ति, स इदं प्रष्टव्यः किं परमाणव उपजातविशेषा बुद्धिविशेषं[३] कुर्वन्ति? उतानुपजातविशेषा इति? किं चातः? यद्युपजातविशेषाः, योऽसौ विशेषः सोऽवयवीति प्राप्तम्। अथानुपजातविशेषाः, त एवातीन्द्रिया ऐन्द्रियकाश्चेत्यतिमहान् विरोधः। विशेषः संयोगः परमाणूनाम्। ते परस्परप्रत्यासत्तौ सत्यां संयोगोपकरणा उपलप्स्यन्त इति। न, अतीन्द्रियत्वाद् अणूनाम्। नातीन्द्रियाणां

१. °मात्रार्थत्वाद् C २. द्रः पृ. ६८ ff., पृ. १४५.९ ३. बुद्धिभेदं C

संयोगः प्रत्यक्षो भवितुमर्हति। भवति हीदमनेन संयुक्तमिति। तस्मान्न संयोगो विशेषः।

यश्चायमनेकस्मिन्नेकप्रत्ययः स मिथ्याप्रत्ययः। मिथ्याप्रत्ययनिमित्तं च सामान्यदर्शनं विशेषानुपलब्धिरविद्यमानविशेषदर्शनद्वारेणाध्यारोपिततद्विपरीतधर्मता। न चातीन्द्रियत्वादणूनां सामान्यदर्शनमस्ति। तदभावे कुतो विशेषादर्शनम्? सामान्यदर्शने[१] विशेषादर्शने वासति न तद्विपरीतधर्माध्यारोपः। न च निमित्तमन्तरेण नैमित्तिकस्य मिथ्याप्रत्ययस्य प्रादुर्भावो युक्त इति।

एतेन भाक्त औपमिकश्च प्रत्ययो व्याख्यातः। भक्तिर्नाम अतथाभूतस्य तथाभाविभिः सामान्यम्। उभयेन भज्यत इति भक्तिः। यथा वाहीकस्य मन्दां [२]संज्ञामुपादाय वाहीको गौरिति। न [३]त्वतीन्द्रियत्वात् परमाणूनामेतदस्ति। [४]उपमाप्रत्ययोऽपि न युक्तः, अतद्भाविनस्तद्भाविभिरसामान्यात्। यस्यातथाभूतस्य तथाभाविभिः सामान्यं तत्रोपमाप्रत्ययो युक्तः। यथ सिंहो माणवक इति। सिंह इव सिंहः। किं पुनरत्रोपमीयते? शौर्यम्। न तु परमाणूनामतीन्द्रियत्वान्मिथ्याप्रत्ययानां निमित्तमस्तीति। मिथ्याप्रत्यया अप्येते न भवन्ति, प्रधानाभावात्।

इन्द्रियान्तरविषयेष्वभेदप्रत्ययः प्रधानमिति चेत्? अथ मन्यसे इन्द्रियान्तरविषयेषु शब्दादिष्वेकादिप्रत्ययाः प्रधानं भवन्ति, तदभावे तु मिथ्याप्रत्यया इति। विशेषहेत्वभावाद् दृष्टान्ताव्यवस्था। एवं सति दृष्टान्तोपादानं न व्यवतिष्ठते। तस्मिंश्च तदिति प्रत्ययः अतस्मिंश्च तदिति प्रत्ययः। अस्ति चायं परमाणुषु सञ्चितेषु तदिति प्रत्ययः। किमयं तस्मिंस्तदिति आहोस्विदतस्मिंस्तदिति सन्दिह्यते। शब्दादिष्वेकप्रत्ययः प्रधानम्, घटादिषु त्वेकप्रत्ययो मिथ्याप्रत्यय इति ब्रुवाणो घटादीनभ्युपैति। न ह्यनभ्युपगतेषु घटादिषु शब्दादिसामान्यमेकप्रत्ययबीजं घटादिष्वस्ति। अथ मन्यसे नास्माभिर्घटादयोऽभ्युपगम्यन्ते, किं तु परमाणूनां सञ्चितानां

१. सामान्यदर्शने om J २. अन्तः संज्ञा° C ३. तदतीन्द्रिय° °णूनामस्ति C ४. उपमानप्र° C

शब्देन सामान्यादेकप्रत्ययोत्पत्तिनिमित्तत्वमिति। अत्रोक्तम्, नातीन्द्रियत्वादणूनामिति। यांश्च शब्दादीन्, प्रधानप्रत्ययनिमित्तत्वेन भवान् प्रतिपद्यते, तेऽपि सञ्चिता एव। सञ्चितत्वात् तेष्वप्ययमेकप्रत्ययो न युक्तः। शब्दादिषु चैकप्रत्ययः समुच्चयनिवृत्तिनिमित्त एकत्ववद्द्रव्यसामान्याद् भाक्तः। यान्येकत्ववन्ति द्रव्याणि तेषां समुच्चयनिवृत्तिर्धर्मः। अस्ति च शब्दादिषु समुच्चयनिवृत्तिः, तेनैकत्ववद्द्रव्यसामान्यात् शब्दादिष्वेकप्रत्ययो भाक्त इति। सर्वत्र समुच्चयनिवृत्तिनिमित्त एवेति चेत्, न द्वे इत्यत्रैकानेकगतौ सन्देहो न स्यात्। यदि सर्वत्रायं समुच्चयनिवृत्तिनिमित्त एवैकप्रत्ययो भवति, न द्वे इत्यत्र किमेकमनेकमिति द्विप्रतिषेधसामान्यात् सन्देहो न स्यात्। सति च सन्देह एकमिति नियमार्थम्। यतो नियमस्तदेकत्वम्, यतस्त्र्यादिप्रत्ययास्ते त्रित्वादय इति। एवं द्वित्वादिप्रत्यया अपि शब्दादिषु समुच्चयनिमित्ता द्रष्टव्याः। कस्मात्? द्वित्वादिमद्द्रव्यसामान्यात्। द्वित्वादिमता द्रव्येण शब्दादीनां समुच्चयः सामान्यम्[1]। सर्वत्र समुच्चयादेवेति चेत्–न, एकमित्यत्र सामान्यगतौ न संशयः स्यात्। यदि च सर्वत्र समुच्चयतन्त्रा[2] द्व्यादिप्रत्यया भवन्ति, नैकमिति प्रतिषेधे द्वे त्रीणि वेति सामान्यगतौ न संशयः स्यात्। तस्माद् यतो व्यवस्था ते द्वित्वादय इति।

यः पुनरेकत्वं द्वित्वादींश्च न प्रतिपद्यते, तस्य न समुच्चयो न समुच्चयनिवृत्तिः। अनभ्युपगतैकत्वस्य कस्य समुच्चयः, अनभ्युपगतद्वित्वस्य च कस्य प्रतिषेधः? एकत्वद्वित्वादींश्चार्थान्तरभूताननभ्युपगच्छत एकं शतम् एकं द्वित्वमित्येकप्रत्ययो न स्यात्। भेदस्याग्रहणाच्च शब्दादिष्वेकप्रत्ययः। यस्मात् शब्दादिषु भेदो न गृह्यते उपलभ्यमानेष्वतस्तेष्वेकप्रत्ययः, न पुनः परमाणुष्वभेदग्रहणस्य निमित्तमस्ति, अतीन्द्रियत्वादणूनामित्युक्तम्। उदाहरणमात्रत्वात् चैकप्रत्ययपर्यनुयोगस्य, एकप्रत्ययवत् अनेकप्रत्ययमप्यनुयोक्तव्यः। योऽवयविनमर्थान्तरं न प्रतिपद्यते तस्य यथैकप्रत्ययोऽनुपपन्नः, तथानेकादिप्रत्यया अपि नाप्नुवन्ति। यथा

१. समानः C २. यदि समुच्चयनिमित्तत्वाद् C

चैकानेकप्रत्ययान् एवं सर्वानिव[१] घटादिप्रत्ययान् पर्यनुयोज्यः। एवं परिमाणसंयोगप्रस्पन्दजातिविशेषप्रत्ययानप्यनुयोक्तव्यः[२]। तेषु चैवं प्रसङ्गः। यद्यवयविनमर्थान्तरं न प्रतिपद्यसे, महदिति संयुक्त इति चलत्यश्वो[३] गौर्गच्छतीति प्रत्यया न प्राप्नुवन्ति। न ह्यतीन्द्रियेषु परमाणुषु एते प्रत्यया युज्यन्त इति।

किमेते एकादिप्रत्यया अणुसञ्चयमात्रे आहोस्विदर्थान्तरभाव इति[४] सन्दिह्यते। सन्देहे सति विशेषहेतुर्वक्तव्य इति। अयं विशेषहेतुः, महत्प्रत्ययसामानाधिकरण्यादेकप्रत्ययस्यैकप्रत्ययो[५] महति। यः खलु यत्समानाधिकरणः प्रत्ययो दृष्टः, स तद्धर्मयुक्तो भवति। यथा नीलमुत्पलमिति उभयधर्मयोगिनि नीलोत्पलप्रत्ययः प्रवर्तते। अस्ति च महत्प्रत्ययसामानाधिकरण्यमेकप्रत्ययस्य। तस्मात् महत्येकप्रत्यय इति। अणुसमूहेऽतिशयग्रहणं महत्प्रत्यय इति चेत्? अथ मन्यसे नास्माभिरवयव्यर्थान्तरभूतोऽभ्युपगम्यते। अपि त्वणुसमूहमुपलभ्याणुसमूहान्तरेऽतिशयं गृह्णतो महत्प्रत्ययो भवति। सोऽयमतस्मिंस्तदिति प्रत्यय इति पूर्ववत् प्रसङ्गः। अमहत्स्वणुषु अमहत्सु वाणुसमूहेषु योऽयं महत्प्रत्ययः, सोऽतस्मिंस्तदिति मिथ्याप्रत्ययः। मिथ्याप्रत्ययाश्च प्रधानमन्तरेण न भवन्तीति पूर्ववदेव प्रसङ्गः।

अणुः शब्दो महानिति च व्यवसायात् प्रधानसिद्धिरिति चेत्-अथ मन्यसे महान् शब्दोऽणुश्च शब्द इति शब्दे दृष्टो महदणुप्रत्ययः प्रधानमन्यत्र महदणुप्रत्ययस्येति? न च मन्दतीव्रताग्रहणमियत्तानवधारणात्। न शब्दे महत्त्वं न चाणुत्वं गुणत्वात्। अणुमहत्प्रत्ययस्तर्हि शब्दे न प्राप्नोति? न न प्राप्नोति, अन्यनिमित्तत्वात्। किं निमित्तम्? मन्दता तीव्रता च। कस्मात्? इयत्तानवधारणात्। न ह्ययं महान् शब्द इति व्यवस्यन् इयानित्यवधारयति, यथा कुवलामलकविल्वानीयन्तीत्यधारयति। कुवलादामलकं महत्। आमलकाच्च विल्वम्। तानि चेयत्तया परिच्छिनत्ति इयत्परिमाणमेतदिति। न पुनः शब्देषु एतदस्ति। शब्देष्वपि [६]पूर्वानुभूतशब्दमुपल-

१. सर्वानिव om C २. पर्यनुयोज्यः C ३. इति वाश्वो C ४. सन्दिह्यते। om J ५. °प्रत्ययस्यैक om C ६. पूर्वावधृत° C

भ्य तस्मात् शब्दादयं शब्दो महान् अणुर्वेति [१]अवधार्यते नावधारणं प्रतिषिध्यत इति।

इदं तु चिन्त्यते। योऽयं शब्देऽणुमहत्प्रत्ययः, किमयं परिमाणयोगादुतान्यस्मात् निमित्तादिति। अन्यस्मात् निमित्तादिति युक्तम्, गुणस्य गुणान्तरसंबन्धानुपलब्धेः। न हि गुणस्य गुणान्तरसंबन्धो दृष्टः, यतः परिमाणसंबन्धोऽपि गम्येत। महत्प्रत्ययादेव गुणवान् शब्दो द्रव्यवदिति चेत्-यथायं महत्प्रत्ययो द्रव्येषु भवन् महत्परिमाणयोगाद् भवति, शब्देऽपि चायं महत्प्रत्ययोऽस्ति। अतो महत्प्रत्ययविषयत्वात् महत्परिमाणयुक्तः शब्द इति। न, अनैकान्तात्, महत्प्रत्ययविषयत्वे तुल्येऽपि महत्परिमाणयोगो न दृष्टः, यथा महत्परिमाण इति। द्रव्ये तर्हि महत्प्रत्ययः कथम्-यदि तावत् महत्प्रत्ययविषयत्वे सत्यपि महत्परिमाणयोगं न प्रतिपद्यसे, महत्परिमाणयुक्तं द्रव्यमित्येतत् कथम्? न महत्प्रत्ययविषयत्वात् महत्परिमाणयुक्तं द्रव्यम्, अपि तु महत्परिमाणयोगे सति महत्प्रत्ययो द्रव्ये इति। महत्परिमाणयोगस्तु द्रव्यस्य विशेषप्रत्ययानामनाकस्मिकत्वेन। यदि विशेषप्रत्ययानामनाकस्मिकत्वेन महत्परिमाणयोगो द्रव्ये, शब्देऽप्येवम्। [२]शब्देऽप्यणुमहत्प्रत्ययोऽस्ति, तेनापि नाकस्माद् भवितव्यम्। कश्चैवमाह [३]शब्देऽयमाकस्मिक इति। किंनिमित्तः? मन्दतीव्रतानिमित्तः। मन्दतीव्रता च शब्दधर्मः। ततोऽणुमहत्प्रत्ययः शब्दे इति। का पुनरियं मन्दता तीव्रता च? अणुद्रव्यसामान्यात् सामान्यप्रत्ययविषयत्वं मन्दता, महद्द्रव्यसामान्याच्च सामान्यविशेषबुद्धिविषयत्वं तीव्रता पाटवमिति।

संयुक्ते इति च द्वित्वसमानाश्रयं प्राप्तिग्रहणमवयविन प्रतिपादकम्। कथमिति? संयुक्तमहत्प्रत्ययावेकविषयौ प्रतिसन्धानात् नीलोत्पलप्रत्ययवत्। यथा नीलं च तदुत्पलं चेति प्रतिसन्धीयमानौ प्रत्ययावेकविषयौ भवतः, तथा संयुक्ते महती इति च प्रतिसन्धानमस्ति। तस्मात् प्रतिसन्धानादेकविषयाविति। एतेनैकं महच्चलं महत् खदिरं महदिति महदादिप्रत्यया[४] व्याख्याताः।

---

१. अवधार्यते om J २. शब्दस्य महत् प्र॰ C ३. शब्देऽपि C ४. महच्चलति खदिरमिति प्रत्ययाः C

समुदायद्वयापेक्ष इति चेत्? अथ मन्यसे द्वौ समुदायावाश्रित्य संयुक्तमहत्प्रत्ययौ भवतः। तथैकादिमहत्प्रत्यया अप्येकसमुदायापेक्षा[१] इति चेत्-न, विकल्पानुपपत्तेः। समुदायापेक्षाः संयुक्तमहदादिप्रत्यया इति कोऽयं समुदायः? किमनेकः समुदायी उत अनेकस्य प्राप्तिरिति। अनेकस्य प्राप्तिः समुदाय इति चेत्, प्राप्ती प्राप्ते इति प्रत्ययः स्यात्। किं कारणम्? समुदायस्य प्राप्तित्वेनाभ्युपगमात्। संयुक्ते इमे वस्तुनी इति च न स्यात्। प्राप्ती प्राप्ते इति च स्यात्[२]। समुदायश्च समुदायान्तरप्राप्तौ एकीभूत इति प्राप्तिप्रत्ययो न स्यात् समुदायस्यैकत्वात्। अथानेकः समुदायी समुदाय इति, द्वित्वेन सामानाधिकरण्यं न स्यात्। संयुक्ते इमे वस्तुनी इति द्वित्वसमानाधिकरणः प्रत्ययो न स्यात्। तस्मात् महती द्वित्वाश्रयभूते द्रव्ये संयोगस्य स्थानमिति। न संयोगोऽस्तीति चेत्? उक्तमत्र यथा अर्थान्तरं संयोग इति।

इदं तावदवयवसमूहवादी[३] प्रष्टव्यः, योऽयं गौरश्वः पुरुष इति जातिनिमित्तः प्रत्ययः स क्व भवतीति। नैव जातिरस्ति, कुतो जातिनिमित्तः प्रत्ययो भविष्यतीति। जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्याप्रत्याख्यानम्। न जातिविशेषमन्तरेण प्रत्ययानुवृत्तेर्निमित्तमस्ति। न च निर्निमित्तः प्रत्ययो [४]व्यवस्थातुमर्हति। अस्ति चायमनुवृत्तः प्रत्यय इमानि [५]कुण्डलानीति। अस्ति च व्यावृत्तः प्रत्ययो नेमानि [६]कुण्डलानीति। तस्मात् जातिविशेषो न प्रत्याख्येयः। व्यधिकरणस्यानभिव्यक्तेरधिकरणवचनम्। नायं जातिविशेषोऽनधिकरणो व्यज्यत इत्यधिकरणमवश्यं वक्तव्यम्। अणुसमवस्थानमधिकरणमिति चेत्-अथ मन्यसे परमाणव एव केनचित् समवस्थानेनावतिष्ठमानास्तां तां जातिं व्यञ्जयन्ति। अतो नावयवी सिध्यतीति। अत्र तावदुक्तम्-समवस्थानं संयोगोऽर्थान्तरमिति। यच्च समवस्थानं जातिविशेषं व्यनक्तीति मन्यसे, किं तच्चक्षुषा प्राप्तं व्यनक्ति, आहोस्विदप्राप्तमिति? प्राप्तं व्यनक्तीति चेत्? मध्यपरभागयोरप्राप्तत्वादनभिव्यक्तिः। स यदि प्राप्ते समवस्थाने जातिविशेषो व्यज्यते

१. अप्येकसमुदायापेक्षा om J २. प्राप्ती प्राप्ते इति च स्यात् om J ३. जातिसमुदायवादी C ४. नामास्थातु॰ C ५. कुण्डानि J ६. कुण्डानीति C

मध्यपरभागयोरर्वाग्भागव्यवधानादप्राप्तावनभिव्यक्तिः। यावत्प्राप्तं तावति अभिव्यक्तिरिति चेत्— न, तावतोऽधिकरणत्वम्। अथ मन्यसे यावच्चक्षुषा समवस्थानं प्राप्तं तावति जातिव्यक्तिः, तावदेव तर्ह्यधिकरणं जातेः प्राप्तम्। एवं सति प्रतीयमानभेदः। योऽयं वृक्ष इति समुदायः प्रतीयते तस्य वृक्षस्य भेदः प्राप्नोति। किं कारणम्? यावति जातिर्व्यज्यते, स वृक्ष इति प्राप्नोति। ततश्च एको वृक्षोऽनेक इति प्रतीयेत इत्येकप्रत्ययो न स्यात्। अर्वाग्भागस्य चावृक्षत्वात् न क्वचिद् वृक्ष इति वृक्षबुद्धेर्विषयो वक्तव्यः। तस्मात् समुदिताणुस्थानस्यात्मान्तरस्य[१] जातिविशेषव्यक्तिहेतुत्वात् अवयव्यर्थान्तरभूत इति। समुदिता अणवः स्थानं यस्य सोऽयं समुदिताणुस्थानः। समुदिताणुस्थानश्चासावात्मान्तरं[२] च तस्य जातिविशेषव्यक्तिहेतुत्वं नाणूनामिति सिध्यत्यवयव्यर्थान्तरभूतः।

अनभ्युपगतार्थान्तरावयविना च परमाणुशब्दस्यार्थो वक्तव्यः। परमाणुशब्दस्य परमापकर्षवाचित्वात्, न ह्यसति महति न चासत्यणौ परमाणुरिति विशेषणं युक्तम्। परिमाणप्रकर्षयोगे सति परमाणुरिति विशेषणमर्थवत्। असत्यनर्थकमिति। स चायं परिमाणप्रकर्षयोगः सत्यवयविनि सिध्यतीति।

सत्त्वरजस्तमसां सर्वापकृष्टः संघातः परमाणुरिति कस्यचिद् दर्शनम्। तन्न युक्तमिति पश्यामः, व्याघातात्। सर्वापकृष्टश्च संघातश्चेति व्याहतम्। न हि संहन्यमानमन्तरेण संघातः [३]सिध्यतीति।

अर्थान्तरं पटात् तन्तवः तत्कारणत्वात् तुर्यादिवदिति। तुर्यादि पटस्य कारणमित्यर्थान्तरं[४] दृष्टम्। तथा च तन्तवः। तस्मादर्थान्तरमिति। सामर्थ्यभेदाद् विषागदवत्। भिन्नप्रत्ययविषयत्वाद् रूपस्पर्शवत्। तन्तुपटरूपे भिन्नकारणे विशेषवत्त्वाद् रूपस्पर्शवत्।

---

१. °स्यार्थान्तरस्य C   २. °सावर्थान्तरं C   ३. संभवतीति C   ४. तुर्यादिपटकारणमर्थान्तरमिति C

**एके** तु भिन्नरूपत्वादित्येवं हेतुं कृत्वा परमाणुना प्रत्यवतिष्ठन्ते। एकस्मिन्नपि परमाणौ रूपभेदो दृष्टः, रक्तः श्याम इति च। स त्वेवं प्रत्यवस्थेयः, न, हेत्वर्थापरिज्ञानादिति। न ब्रूमो भिन्नरूपत्वादन्योऽवयव्यवयवेभ्यः, अपि तु तन्तुपटरूपे भिन्नकारणे इति पक्षयित्वा विशेषवत्त्वादिति हेतुं ब्रूमः। तथा चायमप्रतिषेध इति। अतिबहुग्रन्थविसारिणी त्वेषा कथेत्युपरम्यते॥३६॥

॥अवयविपरीक्षाप्रकरणम्॥

## [अनुमानपरीक्षाप्रकरणम्]

### रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥२।१।३७॥

प्रसंगतः परीक्षितं प्रत्यक्षम्। अथेदानीमवसरप्राप्तमनुमानं परीक्ष्यते। किं [१]पुनरिदमनुमानम्? उक्तं तत्पूर्वकमनुमानमिति। [२]तत्र पूर्ववदादेरुदाहरणानि, नदीपूरः पिपीलिकाण्डसंचारणं मयूरवासितमिति एतदुदाहरणव्यभिचारद्वारकं सूत्रम्— **रोधो...णम्** इति। तत्र रोधो नाम अपां स्यन्दमानानां द्रवत्वप्रतिबन्धहेतुः। उपघातो नाम पिपीलिकागृहाणामुपमर्दः। सादृश्यं नाम मयूरपुरुषशब्दयोः समानप्रत्ययकर्तृत्वम्। एभ्यो व्यभिचारादनुमानमप्रमाणमिति। शेषं **भाष्ये**।

यत् तावदुक्तमनुमानमप्रमाणमिति तदयुक्तम्, प्रतिज्ञापदयोर्व्याघातात्। अनुमानमिति संबद्धस्यातीन्द्रियार्थसाधकस्यैतन्नाम, अप्रमाणमिति तस्य प्रतिषेधः। सोऽयं प्रतिज्ञापदयोर्व्याघातः, अनुज्ञातप्रतिषिद्धयोरेकत्वानुपपत्तेः। प्रतिज्ञाहेत्वोश्च विरोधः। अनुमानमप्रमाणमिति प्रतिज्ञा। रोधोपघातसादृश्येभ्यो व्यभि-

---

१. पुनः in Pañjikā only २. अत्र च C

चारादिति हेतुः। यद् व्यभिचारि तदप्रमाणम्, यथा गोसिद्धौ विषाणित्वम्। सोऽयं हेतुः प्रतिज्ञां व्याहन्ति। प्रतिज्ञा च हेतुमिति।

यच्चेदमुच्यते अनुमानमप्रमाणमिति, तत् किमनुमानमात्रस्याप्रमाणत्वमुतानुमानविशेषस्य? किं चातः? यद्यनुमानमात्रमप्रमाणमिति पक्षः, हेतोरेकदेशवृत्तित्वादव्यापकत्वम्। समस्तमनुमानं पक्षीकृत्य[१] न सर्वस्मिन्ननुमाने व्यभिचारोऽस्ति। न हि व्यभिचारस्याप्रमाणत्वसाधनस्य व्यभिचारः शक्यः प्रदर्शयितुम्। न हि व्यभिचारस्य व्यभिचारे किञ्चित् प्रमाणमस्तीत्यव्यापकत्वादहेतुः। अथ यद् व्यभिचारि तदप्रमाणमिति ब्रूषे प्रतिज्ञाविशेषणत्वात् हेतोर्हेत्वन्तरं वचनीयम्। सिद्धसाधनं चैतत्। यद् व्यभिचारि तत् प्रमाणं न भवति॥३७॥

**नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात्॥२।१।३८॥**

यान्यप्येतान्युदाहरणानि व्यभिचारीणीत्युच्यन्ते तेष्वपि व्यभिचारो नास्तीत्यसिद्धतोद्भावनद्वारकं सूत्रम्—

**नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात्।**

यत् तावद् रोधादपि नदीपूरो भवतीति, नात्र नदीपूरमात्रेण उपरिवृष्टिमद्देशसंबन्धित्वं नद्याः साध्यते, अपि तु पूरविशेषेण, तस्य च व्यभिचारोऽसिद्धः। उपघातात् पिपीलिकाण्डसंचारणमात्रस्य व्यभिचारो न संचारणविशेषस्य। कः पुनरसौ विशेषः? अवित्रस्तानां भूयसीनां भूयःसु स्थानेषु पिपीलिकाण्डभूयस्त्वेनोर्ध्वसंचारणं यत् तदनागतवृष्ट्यविनाभावि। शब्दव्यभिचारोऽपि नास्ति। यस्मात् न शब्दमात्रमनुमानं मयूरास्तित्वे, न चात्र मयूरः साध्यते, अपि तु शब्दगताद् विशेषात् षड्जादिशब्द एव मयूरगुणविशिष्टोऽनुमीयत इति। एवं च व्यभिचारो नास्तीति असिद्धो हेतुः॥३८॥

।।अनुमानपरीक्षाप्रकरणम्।।

---

१. °कृतम् C

# [ वर्तमानकालपरीक्षाप्रकरणम् ]

## वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥२।१।३९॥

त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादित्युक्तम्। तत्र तावत् काल एव नास्तीति **केचित्**। तच्च न, प्रमाणाभावात्। न हि कालासत्त्वे प्रमाणमस्ति। ननु चानुपलब्धिः कालासत्त्वं प्रतिपादयति। न प्रतिपादयति व्यभिचारात्। त्रिकारणेयमनुपलब्धिः। तत्रानुपलब्ध्या कारणवैकल्यं गम्येत। न तूपलभ्यमेव नास्तीत्येतत्[१]। अथोपलभ्यमानस्याभावादनुपलब्धिरित्ययं प्रतिज्ञार्थः। तथापि[२] हेतुर्नास्ति, प्रतिज्ञार्थेनाक्षिप्तत्वात्। आक्षिप्तो हेतुः प्रतिज्ञार्थेनेति। न चासति धर्मिणि धर्मः संभवति, आश्रयाभावात्। अथ धर्मोऽपि नास्ति, साधनार्थो हीयते। न ह्यसतः साधनार्थं पश्याम इति।

परापरादिप्रत्ययानां च सनिमित्तत्वात् कालप्रतिषेधो न युक्तः। यश्च कालं न प्रतिपद्यते तेन परापरादिप्रत्ययानां निमित्तं वक्तव्यम्। न ह्यसति निमित्ते नैमित्तिकान् विशेषवतः प्रत्ययान् पश्यामो रूपादिप्रत्ययवत्। कालैकत्वात् प्रत्ययभेदानुपपत्तिरिति चेत्? अथ मन्यसे कालस्यैकत्वे सति न युक्तः परापरादिप्रत्ययभेदः, नाभिन्नं निमित्तं भिन्नं कार्यं करोतीति। न, सापेक्षत्वात् पित्रादिप्रत्ययभेदवत्। यथैकस्मिन् पुरुषे अनेकसंबन्धभेदानुविधायिन्यभिन्नेऽपि[३] पिता पुत्रो भ्रातेति प्रत्यया भवन्ति, तथैकः कालः कार्यकारणविशेषापेक्षः परापरादिप्रत्यये हेतुरिति।

एवमुपपादितः कालः। तस्योपपन्नस्य वर्तमानकालप्रतिषेधार्थं सूत्रम्—

**वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः।**

वृन्तात् प्रच्युतस्य फलस्य भूमिं प्रत्यासीदतो यदूर्ध्वं फलमवधिं कृत्वा यावद्वृन्तमिति स पतितोऽध्वा। यदधस्तात् फलमेवावधिं कृत्वा यावद्भूमिरिति

---

१. न तु om C °देव कुतः C २. च for अपि C ३. अपि om C

स पतितव्योऽध्वा। नेदानीं तृतीयोऽध्वा विद्यते यत्र पततीति स्यात्। न चाध्वानमन्तरेण कालव्यक्तिरस्ति[१]। तस्मात् न वर्तमानकालोऽस्तीति॥३९॥

## तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्॥२।१।४०॥

न, विरोधात्। वर्तमानः कालो नास्तीति ब्रुवन् अभ्युपगतौ कालौ बाधते। एतदर्थज्ञापनार्थं च सूत्रम्—

**तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्।**

वर्तमानकालापेक्षौ इतरौ कालौ। यस्य वर्तमानो नास्ति, तस्य वर्तमानानभ्युपगमेऽभ्युपगतयोः कालयोरभाव इति। न चायं कालोऽध्वव्यङ्ग्यः। किं तर्हि? क्रियाव्यङ्ग्यः पततीति। यदा द्रव्यं क्रियासंबद्धमुपलभते सोऽयं संबन्धविशिष्टः कालो वर्तमान इत्युच्यते। क्रियासंबन्धातिक्रमाच्चातीतः। यदा तु क्रियाकारणान्याभिमुख्येनावस्थितान्यप्रतिबद्धशक्तिकानि, तदा भविष्यति क्रियेत्यनागतः काल इति। यदि चायं वर्तमानां क्रियां न प्रतिपद्यते, [२]कस्मादतीततामनागततां च प्रतिपद्यते? न कालोऽतीतो न फलमतीतम्, कालस्य सर्वदा वर्तमानत्वात् फलस्य चापतत् पतति पतिष्यतीति क्रियाविशेषणत्वेन प्रत्ययविशेषविषयत्वात्[३] क्रियायां संभवो न फल इति। तस्मात् क्रियाकालाभिव्यक्तिनिमित्तं नाध्वा गन्तव्यस्य तादवस्थ्यात्, योऽसौ गन्तव्यो देशः, स यथाभूत एवानुत्पन्नक्रिये फले तथाभूत एवोत्पन्नक्रिय इत्यभेदात् नाध्वा कालभेदव्यक्तिहेतुः[४]॥४०॥

## नातीतानागतयोरितरेतरापेक्षा सिद्धिः॥२।१।४१॥

अथ मन्यसे वर्तमानकालानभ्युपगमेऽप्यतीतानागतावितरेतरापेक्षौ सेत्स्यतः, एतत्प्रतिषेधार्थं सूत्रम्—

---

१. °क्तिहेतुरस्ति C  २. कस्याती° J  ३. °विशेषं om J  ४. °भेद° om C

**नातीतानागतयोरितरेतरापेक्षा सिद्धिः।**

इति। न ह्यतीतानागतावितरेतरापेक्षौ सिध्यतः। कथमिति? वर्तमानाभावे किमतीतं कथं च किमनागतं कथं चेति न शक्यं निर्वक्तुम्। अव्याकरणीयमेतद् वर्तमानलोप इति। विशेषप्रतिषेधाच्च वर्तमानोऽभ्युपगतः, यस्मादयं विशेषप्रतिषेधः पततः पतितपतितव्यकालोपपत्तेरिति। न च वर्तमानकालानभ्युपगमे पतत इति पदस्यार्थोऽस्तीति। न चैतत्पदार्थानभ्युपगमे पतत इति युक्तं वक्तुम्। सोऽयं व्याघातः। वर्तमानश्च नास्ति, पतत इति च प्रयोगः। न चेतरेतरापेक्षा[1] कस्यचित् सिद्धिरस्ति, यस्मादेकाभावेऽन्यतराभावादुभयाभावः यदीतरेतरापेक्षा सिद्धिः स्यात्, यावदितरन्नास्ति तावदितरन्नास्तीत्युभयोरभावः॥४१॥

## वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः॥२।१।४२॥

अर्थसद्भावव्यङ्ग्यश्च वर्तमानः कालो विद्यते द्रव्यम्, विद्यते गुणः, विद्यते कर्मेति। यस्य चायं नास्ति, तस्य

**वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः।**

सूत्रार्थो विरोधः। कथं पुनर्वर्तमानाभावे प्रत्यक्षानुपपत्तिः? यस्मादिदं प्रत्यक्षं वर्तमानाधारं कार्यत्वात् क्षीरवदिति। यत् कार्यं तद् वर्तमानाधारं दृष्टं यथा क्षीरम्। कार्यं च प्रत्यक्षम्। तस्मात् [2]तदपि वर्तमानाधारमिति। वर्तमानकालानभ्युपगमादनाधारं प्रत्यक्षं प्राप्नोति। अनाधारं च कार्यं नास्तीति प्रत्यक्षानुपपत्तिः। प्रत्यक्षानुपपत्तेश्च सर्वप्रमाणलोपः। सर्वप्रमाणलोपे च सर्वस्य ग्रहणं न स्यात्। अस्ति च सर्वस्य ग्रहणम्। ते वयं सर्वस्य ग्रहणात् पश्यामोऽस्ति वर्तमानः प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षं चेति। सोऽयं वर्तमानः काल उपपन्नः॥४२॥

---

१. °पेक्षया C २. तदपि om C

**कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम्॥२।१।४३॥**

उपपन्नश्च सन् द्विधा भिद्यते, क्वचित् क्रियामात्रव्यङ्ग्यः क्वचित् क्रियासंतानव्यङ्ग्यः। क्रियामात्रव्यङ्ग्यो विद्यते द्रव्यमिति। क्रियासंतानव्यङ्ग्यः पचति छिनत्तीति। क्रियासंतानोऽपि द्विधा भवति, एकाकारक्रियो नानाकारक्रियश्चेति। एकाकारक्रियश्छिनत्तीति यथा। तत्र ह्युद्यम्योद्यम्य निपातनक्रियैकाकारा। नानाकारक्रियश्च संतानः पचतीति। तत्र ह्यनेका क्रिया अनेकाकारा च। यथा एधोपादानमग्न्यभिज्वालनं स्थाल्यधिश्रयणमुदकासेचनं तण्डुलावपनं दर्वीघट्टनमवश्रावणमवतारणमिति[1]। एष ह्येवंभूतः क्रियासंतानः पचतीत्यनेनैकेन शब्देनाभिधीयते। क्रियासंतानस्य ह्यत्राविच्छेदो विवक्षितो नानारम्भो नोपरम इति। संतानारम्भविवक्षायां पक्ष्यतीति। उपरमविवक्षायामपाक्षीदिति।

यच्चेदं छिद्यमानं तत् क्रियमाणम्। तस्मिन् क्रियमाणे

**कृतताकर्तव्यतोपपत्तेस्तूभयथाग्रहणम्।**

कस्य? वर्तमानस्य। कथम्? उभयथा। केवलस्य व्यपवृक्तस्यातीतानागताभ्यां संपृक्तस्य च ताभ्यामिति। क्व पुनर्व्यपवृक्तस्य? विद्यते द्रव्यमित्यत्र हि केवलः शुद्धो वर्तमानोऽभिधीयते। पचति छिनत्तीत्यत्र संपृक्तः। कथं संपृक्तः? काश्चित् तत्र क्रिया व्यतीताः, काश्चिदनागताः, एका च वर्तमानेति। अन्यश्च लोके प्रत्यासत्तिप्रभृतेरर्थस्य विवक्षायामनेकप्रकारो वर्तमानस्य प्रयोगः। कदाचिदयं वर्तमानमतीते प्रयुङ्क्ते। आगतः सन् ब्रवीति एष आगच्छामीति। कदाचिदनागते प्रयुङ्क्ते। यथा स्थितः सन् ब्रवीत्येष गच्छामीति। एवमन्येषु प्रयोगेषूत्प्रेक्षितव्यः॥४३॥

॥वर्तमानकालपरीक्षाप्रकरणम्॥

---

१. मण्डस्रावणम् C

# [ उपमानपरीक्षाप्रकरणम् ]

## अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥२।१।४४॥

अथेदानीमुपमानमवसरप्राप्तं परीक्ष्यते। किं पुनरुपमानम्? **प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्** [१.१.६.] इत्युक्तम्, तस्याक्षेपः—

**अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः।**

इति। नात्यन्तसाधर्म्यादुपमानं भवति यथा गौरेवं गौरिति। भूयःसाधर्म्यादपि नोपमानं सिध्यति। न हि भवति यथा गौरेवं महिष इति। एकदेशसाधर्म्यादपि न भवति। न हि भवति यथा मेरुस्तथा सर्षप इति। न चान्या गतिरस्ति। तस्मात् नोपमानं सिध्यति॥

अत्यन्तादिसाधर्म्यादुपमानप्रतिषेधे नोपमानप्रतिषेध इति। यदत्यन्तप्रायैकदेशसाधर्म्यादुपमानं तत् प्रतिषिध्यते। तेन सूत्रेण न पुनरुपमानमात्रस्य प्रतिषेधः। तथा[१] सति यदन्यथोपमानं तस्य स्वरूपं वक्तव्यम्। अथ नैवान्यथोपमानमस्तीति प्रतिपद्यसे[२], व्यर्थं तर्हीदं वाक्यम्— अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिरिति। अनभ्युपगच्छता ह्युपमानमेवं वक्तव्यम्, उपमानमप्रमाणमर्थाप्रतिपादकत्वादिति॥४४॥

## प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥२।१।४५॥[३]

प्रसिद्धसाधर्म्यस्य वैधर्म्यस्य चोपमानहेतुत्वादप्रतिषेधः। योऽयं भवता प्रतिषेधः क्रियते, अत्यन्तादिसाधर्म्यादुपमानं न सिध्यतीति, अयमनुपपन्नः, अनभ्युपगमात्। कः खल्वेवमाह, अत्यन्तादिसाधर्म्यादुपमानमिति? अपि तु प्रसिद्ध-

---

१. एवं C २. ०मानस्य स्वरूपमस्तीति मन्यसे कथं C ३. J omits it

साधर्म्यादुपमानं साध्यसाधनभावमाश्रित्य प्रवर्तते[१]। तथा चायमप्रतिषेधः। सर्वथा-संभवाच्च। अत्यन्तसाधर्म्यादुपमानं सिध्यति, यदा तत्क्रिययैव तत्क्रियोपमीयते। यथा

रामरावणयोर्युद्धं रामरावणयोरिव

इति। प्रायः साधर्म्येणापि। यदा गोर्बलप्रकर्षजिज्ञासा भवति तदा भूयःसाधर्म्ये-णोपमानम्। यथा महिषस्तथा गौरिति। एकदेशसाधर्म्यादपि भवति[२]। यदा तु सन्मात्रं जिज्ञापयिषितव्यं[३] भवति, मेरोः सत्ता किंरूपेति तदा। यथा सर्षपस्य तथा मेरोः। तस्मादप्रतिषेधोऽयमिति ॥४५॥

**प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥२।१।४६॥**

अस्तु तर्ह्युपमानमनुमानम्।

**प्रत्यक्षेणाप्रत्यक्षसिद्धेः।**

यथा प्रत्यक्षेण धूमधर्मेणोर्ध्वगत्यादिना अप्रत्यक्षो धूमधर्मोऽग्निरनुमीयते तथा प्रत्यक्षेण गवा अप्रत्यक्षस्य गवयस्य प्रतिपत्तिरित्यप्रत्यक्षार्थप्रतिपादक-त्वादुपमानमनुमानं भवति ॥४६॥

**नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः[४] ॥२।१।४७॥**

न, अपरिज्ञानात्, न भवतोपमानलक्षणं व्यज्ञायि। न चाप्रत्यक्षे गवये उप-मानार्थं पश्यामः।

**नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः।**

---

१. प्रवर्तते om C २. एक.....भवति om J ३. जिज्ञासानिमित्तं C ४. सूत्रं न गृहीतम् J

अथ प्रत्यक्षे गवये क उपमानार्थः, यासौ संज्ञासंज्ञिसंबन्धप्रतिपत्तिः स उपमानार्थः। एवं च नोपमानमागमो न प्रत्यक्षम्। न ह्ययमागमात् प्रत्यक्षाद् वा अयं गवय इति प्रतिपद्यत इति।।४७॥

**तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः[१] ॥२।१।४८॥**

परार्थत्वाच्च। परार्थं चोपमानं भवति। न हि यथा गौरेवं गवय इत्येतदागममन्तरेण सारूप्यमात्रपरिज्ञानमुपमानमुक्तम्। न ह्यागममात्रं सारूप्यपरिज्ञानमन्तरेण उपमानं भवितुमर्हति। न चैवमनुमानम्। तस्माद् यथा लिङ्गलिङ्गिसंबन्धस्मृत्यनुग्रहे सति लिङ्गपरामर्शोऽनुमानम्, तच्च प्रत्यक्षम् तथागमाहितसंस्कारस्मृत्यपेक्षं सारूप्यप्रत्यक्षमुपमानमिति।

प्रतिपत्तिभेदाच्च। नानुमानमेवं भवति यथा धूमस्तथाग्निरिति, अस्ति तूपमाने यथा गौरेवं गवय इति। यत्र च प्रतिपत्तिभेदः तत् प्रमाणान्तरम्, यथा प्रत्यक्षादनुमानम्। अपूर्वानधिगमादुपमानं न भवतीत्यनेन प्रत्युक्तम्।।४८॥

।।उपमानपरीक्षाप्रकरणम्॥

## [ शब्दसामान्यपरीक्षाप्रकरणम् ]

**शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्।।२।१।४९॥**

अथावसरप्राप्तः शब्दः परीक्ष्यते। कः पुनरयं शब्दः? **आप्तोपदेशः शब्द** इत्युक्तम्। तस्याक्षेपः— न शब्दः प्रमाणम्, सत्यप्यप्रमितेः। यस्माद् विद्यमानोऽप्ययं शब्दोऽश्रूयमाणो न प्रतिपत्तिहेतुः, प्रतिपत्तिहेतुश्च प्रमाणमिति। विषयाभावाच्च। न

---

१ सूत्रं न गृहीतम् J

च प्रत्यक्षानुमानविषयव्यतिरेकी विषयः शब्दस्यास्ति। न चाविषयं प्रमाणमिति। अविज्ञानात्मकत्वाच्च न प्रमाणम्। यत् प्रमाणं तत् सर्वं विज्ञानात्मकं प्रत्यक्षादि। अविज्ञानात्मकं च न प्रमाणं घटादि[१]। बाह्यकरणप्रत्यक्षत्वाच्च घटादिवदेव न प्रमाणम्। आत्मन्यसमवायात् न घटादिवदेव प्रमाणम्। आकाशगुणत्वात् तत् संख्यादिवत् न प्रमाणम्।

यत् तावत् सत्यप्यप्रमितेरिति, तन्नासिद्धत्वात्। न हि कदाचित् शब्द उपलभ्यमाने न प्रमा भवति। अनुपलभ्यमाने न भवतीति नासौ प्रमाणम्। तदा प्रमाणं हि नाम येन प्रमीयते। कदा च तेन प्रमीयते, यदोपलभ्यते। यत् पुनरेतत्, विषयाभावादिति। क एवमाह प्रत्यक्षानुमानविषयव्यतिरेकी विषयो नास्तीति। अयमप्यसिद्धो हेतुः। यथा च प्रत्यक्षादिभ्यो विषयभेदस्तथोक्तम्। यत् पुनरेतद् अविज्ञानात्मकत्वाद् बाह्यकरणग्राह्यत्वाद् आत्मन्यसमवायाच्चेति, न, अनेकान्तात् प्रदीपवत्। प्रदीपे एतत् सर्वमस्ति। प्रमाणं च प्रदीपः प्रत्यक्षाङ्गत्वादित्युक्तम्। तस्मादनैकान्तिकत्वादहेतव एवेति। यत् पुनरेतदाकाशगुणत्वादिति, अयमप्य-नैकान्तिक एव। यथा आकाशे यत् परिमाणं तत् महत्प्रत्ययकर्तृत्वात् प्रमाणं भवति। तस्मादाकाशगुणत्वादित्ययमप्यहेतुः।

अनुमानं शब्दः स्मृत्यपेक्षित्वात्। यस्य स्मृत्यपेक्षित्वं तदनुमानम्। स्मृत्यपेक्षश्च शब्दोऽर्थप्रत्यायने। तस्मादनुमानम्। त्रिकालविषयत्वाच्च। त्रिकालविषयमनुमानम्। तथा च शब्दः। तस्मादनुमानम्। अन्वयव्यतिरेकोपपत्तेश्च। यदन्वयव्यतिरेकि तदनुमानं दृष्टम्। यथा धूमविशेषदर्शनमग्निमद्धूमविशेषप्रतिपत्तौ[२]। तथा च शब्दोऽ-न्वयव्यतिरेकाभ्यामेवार्थं प्रतिपादयति। तस्मादनुमानम्।

इतश्च शब्दोऽनुमानम्

**शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्।**

प्रत्यक्षेणानुपलभ्यमानार्थविषयत्वादिति सूत्रार्थः॥४९॥

---

१. घटादिवदेव। C २. अग्निमत्प्रतीतै C

**उपलब्धेरद्विप्रवृत्तित्वात्॥२।१।५०॥**

इतश्चानुमानम्

**उपलब्धेरद्विप्रवृत्तित्वात्।**

प्रमाणान्तरभावे उपलब्धिभेदो दृष्टः यथा प्रत्यक्षेऽनुमाने च। अन्यथा हि प्रत्यक्षे उपलब्धिरन्यथा अनुमाने। न त्वेवं शब्द इति। तस्मात् न प्रमाणान्तरम्॥५०॥

**संबन्धाच्च॥२।१।५१॥**

संबद्धार्थप्रतिपादकत्वाच्चेति सूत्रार्थः। संबद्धार्थप्रतिपादकमनुमानं तथा च शब्द इति॥५१॥

**आप्तोपदेशसामर्थ्यात् शब्दादर्थसंप्रत्ययः[1]॥२।१।५२॥**

यत् तावत् स्मृत्यपेक्षत्वादनुमानं शब्द इति, तत् न, अनैकान्तिकत्वात्। अनुमानेऽपि स्मृत्यपेक्षित्वमस्ति यथा संशये यथा तर्के यथोपमाने इति। एतेन त्रिकालविषयत्वं प्रत्युक्तम्। यत् पुनरेतदन्वयव्यतिरेकोपपत्तेरिति, अन्वयव्यतिरेकोपपत्तिः प्रत्यक्षेऽपि। यथा यत्र घटस्तत्र घटज्ञानम्। यत्र नास्ति तत्र तदभाव इति। यत् पुनरेतदनुपलभ्यमानार्थविषयत्वादिति, सत्यम्। अनुपलभ्यमानार्थविषयमनुमानं न पुनः स्वर्गापूर्वदेवताद्यर्थेषु लौकिकस्य प्रत्यक्षमनुमानं वा। अपि तु

**आप्तोपदेशसामर्थ्यात् शब्दादर्थसंप्रत्ययः।**

न ह्ययं शब्दमात्रात् स्वर्गादीन् प्रतिपद्यते, किं तु पुरुषविशेषाभिहितत्वेन प्रमाणत्वं प्रतिपद्यते। तथाभूतात् शब्दात् स्वर्गादीन् प्रतिपद्यते। न चैवमनुमाने।

---

१. अर्थे संप्र॰ J

तस्मात् नानुमानं शब्द इति। [१]शब्दं चोल्लिखन्ती प्रतिपत्तिः शब्दात् नानुमानादिति, एतेनाद्विप्रवृत्तित्वं व्याख्यातम्॥

यत् पुनरेतत् संबन्धाच्चेति। अस्ति शब्दार्थयोः संबन्धोऽनुज्ञातः, अस्ति च प्रतिषिद्धः। वाच्यवाचकभावलक्षणः संबन्धोऽनुज्ञातः, अस्य शब्दस्यायमर्थो वाच्य इति। यः पुनरयं स्वाभाविकः शब्दार्थयोः संबन्ध इति **कैश्चिद**भ्युपगम्यते स प्रतिषिद्धः। न स्वाभाविकः शब्दार्थयोः संबन्धोऽस्ति। कथं नास्ति? प्रमाणतोऽनुपलब्धेः। तत्र प्रत्यक्षेण [२]तावच्छब्दार्थसंबन्धस्यानुपलब्धिरतीन्द्रियविषयत्वात्। यस्मात् शब्दस्यातीन्द्रियोऽप्यर्थो विषयः, तस्मात् न प्रत्यक्षेणोपलब्धिरिति॥५२॥

## पूरणप्रदाहपाटनानुपलब्धेश्च संबन्धाभावः॥२।१।५३॥

अनुमानेनोपलप्स्यत इति चेत्? नानुमानेनापि विकल्पानुपपत्तेः। शब्दो वार्थदेशमुपसंपद्यते, अर्थो वा शब्ददेशम्। उभयं वा। [३]न तावदर्थः शब्ददेशमुपसंपद्यते, पूरणप्रदाहपाटनानुपलब्धेः।

**पूरणप्रदाहपाटनानुपलब्धेश्च संबन्धाभावः।**

आस्यैकदेशस्थानकरणोच्चारणीयः शब्द इति अन्नाग्न्यसिशब्दोच्चारणे पूरणप्रदाहपाटनानि गृह्येरन्। मूर्तिमांश्च महान् पदार्थो मोदकादिर्गवादिवदागच्छन्नुपलभ्येत। ततश्च [४]शब्देन लोकव्यवहार उच्छिद्येत। अथ शब्दोऽर्थान्तिकमुपसंपद्यते, तस्याप्यनुपपत्तिर्व्याघातात्। नित्यश्च शब्दः सन्तानवृत्त्या चागच्छतीति व्याहतम्, अथ नागच्छत्यर्थदेश एव भवतीति, नित्यश्च भवति चेत्यनिवृत्तो व्याघातः। स्थानकरणप्रयत्नासंभवाच्चार्थदेशे न भवति। अथ न गच्छति न भवति तत्र व्यज्यते एको वितत्यावस्थित इति चेत्? न, सर्वार्थोपलब्धिप्रसङ्गात्। यदि सर्वशब्दा एव

१. चोल्लिखिता प्रति॰ C २. ॰शब्दार्थस्या॰ C ३. न....संपद्यते om C ४. शब्देन om C

वितत्यावस्थिताः स्थानकरणादिनिमित्तसन्निधाने सति व्यज्यन्त इति मन्यसे[१], सर्वार्थानामुपलब्धिः प्राप्ता। यदेकस्य शब्दस्य व्यञ्जकं तच्छब्दान्तराणामपीति वितत्यावस्थितस्य[२] शब्दो व्यज्यत इति स्वविषयव्याप्त्यवस्थाने सति यत्र क्वचनावस्थितानां गोशब्दाभिव्यक्तौ ककुदादिमदर्थप्रत्यायनं स्यात्।

अथ सामान्यवदेतत् स्यात्? यथा सामान्यं स्वविषयं व्याप्यावस्थितं न च सर्वत्रोपलभ्यते, तथा शब्देऽपि स्वविषयं व्याप्यावस्थिते नियमो भविष्यतीति? न युक्तमेवं भवितुम्। सामान्यस्याश्रयोपलब्धिर्व्यक्तिहेतुः। न पुनः शब्दस्याश्रयोपलब्धिरस्ति। न च वाच्ये वृत्तिः। तस्मादसमो दृष्टान्तः। यदि च वाच्यार्थवृत्तिः शब्दः स्यात् वाच्योपलब्धावकृतसमयेनापि प्रतिपद्येत, यथा सामान्यम् अकृतसमयोऽपि प्रतिपद्यत इति। तस्मान्नानुमानादपि प्रतिपद्यते।

इतश्च स्वाश्रयादन्येन न संबन्धी शब्दो गुणत्वात्। अन्येन गवादिना। शब्दं प्रति समवायो नास्ति, शब्दस्याकाशवृत्तित्वात्। नापि शब्दार्थयोरेकार्थसमवायः, [३]स्वात्मन्येकस्यानारम्भात्। उपमानात् प्रतिपत्स्यत इति न। उपमानस्यायं न विषयः। आगमात् प्रतिपत्स्यत इति चेत्? स एवात्र विचार्यते किं शब्दार्थौ संबद्धौ, आहोस्विदसंबद्धाविति।

यत्त्विदं भवताभिधीयते स्मृत्याद्यपेक्षत्वादनुमानसाधर्म्यादनुमानं शब्द इति, तस्मादेव नानुमानम्। न हि तेनैव तस्य साधर्म्यमिति। अथ स्मृत्यादिसाधर्म्यात् शब्दानुमानयोरेकत्वमेव? तर्ह्येकं प्रमाणं प्राप्नोति। अस्ति ह्यर्थपरिच्छेदकत्वं सर्वप्रमाणानां साधर्म्यमिति। भवत्वेकं प्रमाणं किं नो बाध्यत इति? कथं न बाध्यते? यदभीष्टं तन्निवर्तते। किं चाभीष्टम्? प्रत्यक्षानुमाने भिन्ने इति। अथ सामान्यमाश्रित्याभेदो देश्यते, तदोपेक्षया वर्तितव्यम्। सामान्यमाश्रित्याभेदो विशेषमाश्रित्य भेद इति न किञ्चिद् बाधितम्। न चानुमानं शब्दः, स्वपरात्मप्रत्यायकत्वात्। यत् स्वपरात्मप्रत्यायकं तदनुमानं न भवति। यथा प्रदीपः। प्रदीपो

---

१. मन्यसे om J    २. °स्थितश्च शब्दो व्यक्त इति। C    ३. ताभ्यामेकस्या° C

येन क्रियते, तस्याप्युपलब्धिसाधनं भवति, इतरस्यापि। शब्दोऽप्येवम्। तस्मात् नानुमानमिति ॥५३॥

**शब्दार्थव्यवस्थानादप्रतिषेधः ॥२।१।५४॥**

यदि शब्दार्थावसंबद्धौ स्याताम्, शब्दादर्थप्रत्ययव्यवस्थानं न स्यात्। शब्दः संबद्धोऽर्थं प्रतिपादयति, प्रत्ययनियमहेतुत्वात् प्रदीपवत्। यः प्रत्ययनियमहेतुः स संबद्धोऽर्थप्रतिपादको दृष्टः। यथा प्रदीपः। शब्दश्चैवंधर्मा तस्मात् शब्दोऽपि संबद्धार्थप्रतिपादक इति। प्रत्ययो वा पक्षीकर्तव्यः संबद्धाभ्यां शब्दार्थाभ्यां वस्तुप्रत्ययो भवति नियमात्, कुण्डलीति प्रत्ययवदिति ॥५४॥

**न, सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य ॥२।१।५५॥**

न संबन्धकारितं शब्दार्थव्यवस्थानम्। किं तर्हि? समयकारितम्। कः पुनरयं समयः? अभिधानाभिधेयनियमनियोगः। तस्मिन्नुपयुक्ते[१] शब्दार्थव्यवस्था भवति। कश्चिच्च संबन्धोऽनुज्ञात इति यदवोचाम समयं तदवोचाम इति। सेयं शब्दार्थव्यवस्था अन्यथापि भवतीत्यहेतुः। अयं च वाच्यवाचकभावलक्षणः संबन्धः स्वाभाविकशब्दार्थसंबन्धवादिनाभ्यनुज्ञेयः। न हि स्वाभाविकसंबन्धवादिनोऽनुपयुक्तशब्दार्थसंबन्धस्य शब्दश्रवणात्[२] विशेषप्रत्ययो भवति। स पुनः समयः कुतः प्रत्येतव्यः? पदज्ञानात् लोकतश्चेति। [३]तद्धि शास्त्रं समयस्याविलोपार्थं प्रणीतम्। लोकतश्च समयो बोद्धव्यः। मात्रादींस्तेषु तेष्वर्थेषु तांस्तान् शब्दान् प्रयुञ्जानानुपलभ्य सोऽपि तथैव शिक्षितस्तानेव शब्दांस्तेषु तेष्वर्थेषु प्रयुङ्क्ते, न पुनरेनं कश्चिल्लिपिमिव शिक्षयतीति ॥५५॥

---

१. समययुक्ते C २. °ग्रहणात् C ३. तदिदं समयशास्त्रं शब्दस्या° C

**जातिविशेषे चानियमात्॥२।१।५६॥**

न स्वाभाविकः शब्दार्थसंबन्धः। यदि स्वाभाविकः शब्दार्थयोः संबन्धोऽभविष्यत्, न जातिविशेषे शब्दार्थव्यवस्थाभविष्यत्। अस्ति तु यथाकामं प्रयोगः। जातिविशेषे यथाकामं प्रयोगो दृष्टः। न पुनः स्वाभाविकेन संबन्धेन संबद्धानां जातिविशेषे व्यभिचारो[1] दृष्टः। न हि प्रदीपोऽस्माकमन्यथा प्रकाशयति, अन्यथा जातिविशेष इति। जातिविशेषशब्देन पुनर्देशोऽभिधीयत इति॥५६॥

॥शब्दसामान्यपरीक्षाप्रकरणम्॥

## [ शब्दविशेषपरीक्षाप्रकरणम् ]

**तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः॥२।१।५७॥**

**तद .... भ्यः** इति सूत्रम्। तदित्यधिकृतशब्दाभिधानात् शब्दविशेषाधिकारः। यस्मात् प्राप्तमपि प्रकरणेन शब्दं तच्छब्देन पुनरभिधत्ते, तेन[2] ज्ञापयति, शब्दविशेषं प्रतीयं चिन्ता, न तु शब्दमात्रं प्रति। अन्यथैवं वक्तव्यम्, अप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्य इति। अप्रामाण्यमर्थस्याप्रत्यायकत्वम्। अनृतत्वमयथार्थाभिधानम्। व्याघातः पदयोर्वाक्ययोर्वा सहासंभवः। पुनरुक्तं पूर्वाभिहितार्थाभिधानम्। उदाहरणानि **भाष्ये**।

तत्रानृतत्वे हेतुः फलादर्शनम्। अग्निहोत्रं जुहुयादिति विधिवाक्यम्। अस्य व्याघातः कालासंभवेन उदितानुदितसमयाध्युषितप्रतिषेधात्। न चान्यः कालो विद्यते यत्राग्निहोत्रहवनं स्यात्। उदितानुदितसमयाध्युषितवाक्यानां वा परस्परविरोधः। प्रथमोत्तमयोः सामिधेन्योस्त्रिरभिधानं पुनरुक्तम्। उदाहरणं च **भाष्ये**।

---

१. जातिव्यभि J   २. तत्र C

दृष्टान्तत्वेनैतानि वाक्यान्युपन्यस्य एकवक्तृकत्वेन[१] शेषवाक्यानामप्रमाणत्वमिति[२]। अग्निहोत्रादिवाक्यानां वा प्रमाणत्वप्रतिषेधो वेदैकदेशत्वेन तदन्यवाक्यवत्। पुनरुक्ततायां पूर्वमुत्तरं वा न वाच्यमेकेन प्रतीयमानत्वात्॥५७॥

**न कर्मकर्तृसाधनवैगुण्यात्॥२।१।५८॥**

यत् तावदनृतत्वादप्रमाणं वेदवाक्यानि फलादर्शनादिति तदत्र संप्रधार्यम्। किं फलादर्शनं वेदवाक्यानामप्रमाणत्वात्, आहो कर्मकर्तृसाधनवैगुण्यादिति। वयं तु ब्रूमः, कर्मकर्तृसाधनवैगुण्यादिति। फलादर्शनाच्च कारणानामसामग्र्यं गम्यते। इष्टेः करणसाधनत्वेनाभ्युपगमाच्चादोषः[३]। न चेयमिष्टिर्मया साक्षात् पुत्रकारणत्वेनाभ्युपगम्यते, अपि तु पितराविष्ट्या संप्रयुज्यमानौ पुत्रं जनयतः। तत्र न ज्ञायते किं पित्रोरसाद्गुण्यात् पुत्रजन्म न भवति, आहोस्वित् इष्टेरसाद्गुण्यादिति। मन्त्राश्चेष्टिसाधनत्वेन प्रयुज्यमाना इष्ट्यङ्गं भवन्ति। तत्रापि न ज्ञायते किमिष्टिर्मन्त्राणां वैगुण्यात् न सम्पन्ना, आहोस्वित् दर्भेध्मादेः[४] कारणस्य वैगुण्यादिति। यथैव मन्त्राणां न्यूनाधिकभावेन प्रयुज्यमानानामिष्टिर्न निर्वर्तते, तथा दर्भेध्मादेरपि साधनस्य वैगुण्यादिति।

न केवलं [५]साधनवैकल्यादेवेष्टेरनभिनिर्वृत्तिः, तथेष्टेः साधयितुः कर्मणश्चासाद्गुण्यादिति। उपेत्येष्टिसम्पदं न केवलैवेष्टिः कारणमित्युक्तम्। तत्र पुत्रजन्मादर्शने न युक्तं वक्तुं मनुष्यधर्मणा मन्त्राणामसामर्थ्यात्[६] पुत्रानुत्पत्तिरिति। उभयथा दृष्टत्वात् सन्देह इति चेत्-न, अभ्युपेतहानेः। अथ मन्यसे त्रिकारणं पुत्रजन्म, तत्रान्यतरकारणवैकल्यात् पुत्रो न भवतीति कारणवैकल्यं गम्यते। तत्र यथैव पित्र्योर्वैगुण्यात् पुत्रानुत्पत्तिः, तथा मन्त्राणामप्यप्रमाणत्वादिति सन्दिह्यते। नाभ्युपेतहानेः। पूर्वं

१. °कर्तृकत्वेन C २. °वाक्यानुमानमप्रमाणत्व इति J ३. °नाविरोधः C ४. दर्भेन्धनादेः C ५. °वैगुण्यादे° C ६. मन्त्राणाम् om J

भवताभ्यधायि वेदोऽप्रमाणमिति, अधुना त्वभिधीयते सन्दिग्धं प्रमाणत्वमिति। एवं च ब्रुवता पूर्वो वादस्त्यक्तो भवति। समानमिति चेत्? अथ मन्यसे समानमेतद् भवतोऽपि किं पित्रोर्वैगुण्यात् पुत्राजन्म उताहो वेदवाक्यानामप्रमाणत्वादिति सन्दिह्यते। नासाधनात्। न मयैतत् साध्यते वेदवाक्यानि प्रमाणमप्रमाणं वेति। भवता तु साध्यते। तत्र मया भवतः साधनान्यतरवैगुण्यात् पुत्रजन्म न भवतीति सन्दिग्धो हेतुरपदिश्यते। तत्सहकारित्वाच्चोपदेशो दारुमथनवदिति। नेयमिष्टिः साक्षात् कारणत्वेन पुत्रजन्मन उपदिश्यते। अपि तु पुत्रकाम इष्टिं कुर्वीत इति। यथाग्निकामो दारुणी मथ्नीयादित्युपदेशः। तत्र च कर्तृकर्मणोर्वैगुण्यादग्निर्न भवतीति नोपदेशवैयर्थ्यम्। तथेहापीत्यदोषः। सामस्त्ये फलनिष्पत्तिदर्शनाच्च। यत्र च समस्तानि कारणानि तत्र फलाभिनिर्वृत्तिः[१] दृष्टेत्यदोषः। यच्चेदं वाक्यम्

**तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः**

इति, तदपि वेदवाक्यस्य पक्षीकृतत्वादव्यापकम्। अथ यान्येवंधर्मकाणि वाक्यानि तानि पक्षीक्रियन्ते, तेष्वप्येषां धर्माणां विशेषणत्वेनोपयुक्तत्वादप्रामाण्य-प्रतिपादको हेतुर्वक्तव्यः। अनृतत्वादप्रमाणमिति चेत्? किमिदमनृतत्वं नाम? यद्ययथार्थाभिधानम्, नन्वयमेव प्रतिज्ञार्थोऽप्रमाणमिति। अनृतत्वं चासिद्धमित्युक्त-मेतत्॥५८॥

## अभ्युपेत्य कालभेदे दोषवचनात्॥२।१।५९॥

यत् पुनरेतत्, व्याघातदोषादिति

**अभ्यु...नात्।** न व्याघातः। अग्न्याधानकाले एवायं नियमपरिग्रहः, उदिते होतव्यम् अनुदिते होतव्यम्, समयाध्युषिते होतव्यमिति। सोऽयमभ्युपेत्य कालं यदातिक्रामति, तदाभ्युपेतकालातिक्रमात् निन्द्यते। निन्दावचने च न व्याघातः।

१. फलनिष्पत्तिः J

उभयप्रतिषेधानभिधानात्। नेदमन्यथा। यदि पुनरेतदुभयप्रतिषेधाभिधानं स्यात् भवेदयं प्रसङ्गो व्याघात इति। न पुनरेतानि प्रतिषेधवाक्यान्युदिते होतव्यमित्येवमादीनि। तस्मादप्रसङ्गोऽयमिति। अथ पुनरेतानि वाक्यानि होमविधिप्रतिषेधकानि स्युः, तदोदितादिग्रहणं व्यर्थम्। एवमेव वक्तव्यमित्यग्निहोत्रं जुहुयादिति यद्वाक्यं तन्न कर्तव्यमिति। एवं च संगतार्थता यथैतद् व्याख्यातम्। एवं पूर्वोत्तरे च वाक्ये संगते भवतः, हवनमनूद्य कालविशेषविधानादिति। एवमेतत्, न पुनर्यथास्माभिर्व्याघातोऽभिधीयत इति नियमहेतुर्वक्तव्यः। इदमेवोदितादिवाक्यं नियमहेतुः। कथमिति? इदमेवोदितादिवाक्यं कामतो वा विकल्प्येत[१] अभिहितं वानूद्येत इति। अभिहितानुवादो न्याय्यः। तत्र हि प्रमाणानामविसंवादः। इतरत्र[२] व्याघात इति ॥५९॥

**अनुवादोपपत्तेश्च ॥२।१।६०॥**

यत् पुनरेतत् पुनरुक्तदोषादिति। न पुनरुक्तदोषः, अनुवादोपपत्तेः। पुनरुक्तं नाम तस्यैवार्थस्यानङ्गीकृतविशेषस्य यत्[३] पुनर्वचनम्। अनुवादस्तु पुनः श्रुतिसामान्यादङ्गीकृतविशेषस्यार्थस्य वादः। एवं च सति यथोक्तो न दोषः। उदाहरणं **भाष्ये**। पुत्रकामेष्ट्यादिवाक्यानि प्रमा, वेदैकदेशत्वात्

भूमिरावपनं महत्

इति[४] वाक्यवत्।

इतश्च पदादिनियमात्।

द्वादश मासाः संवत्सरः

इति वाक्यवत्।

इतश्च [५]वक्तृविशेषाभिहितत्वात्

---

१. इदं पुनर्वाक्यं....प्रकल्प्येत C २. °वादादितरत्र C ३. सतः C ४. भूमेरावपनवाक्यवत् J ५. कर्तृवि° C

अग्निर्हिमस्य भेषजम्

इत्यादि वाक्यवत् ॥६० ॥

**वाक्यविभागस्य चार्थग्रहणात् ॥२।१।६१॥**

समस्तानि वा वेदवाक्यानि पक्षीकृत्याभिधीयन्ते, प्रमाणं वेदवाक्यानि अर्थविभागवत्त्वात्, **मन्वा**दिवाक्यवत्। यथा मन्वादिवाक्यानि अर्थविभागवन्ति अर्थविभागवत्त्वे सति प्रामाण्यम्[१], तथा च वेदवाक्यान्यर्थविभागवन्ति। तस्मात् प्रमाणमिति ॥६१ ॥

**विध्यर्थवादानुवादवचनविनियोगात् ॥२।१।६२॥**

विभागश्च त्रिविधो भवति

**विध्यर्थवादानुवादवचनविनियोगात्।**

त्रिधा खलु ब्राह्मणवाक्यानि भवन्ति, विधिवचनानि, अर्थवादवचनानि अनुवादवचनानि च ॥६२ ॥

**विधिर्विधायकः ॥२।१।६३॥**

तत्र

**विधिर्विधायकः।**

यद् वाक्यं विधायकं देशकं स विधिः। विधिस्तु नियोगोऽनुज्ञा वा। यद्वाक्यं विधत्ते इदं कुर्यादिति स नियोगः[२]। अनुज्ञा तु यत् कुर्वाणकमनुजानाति

---

१. ०वाक्यान्यर्थविभागवत्त्वे सति प्रमाणम् C  २. विधिः for नियोगः J

तदनुज्ञावाक्यम्। यथाग्निहोत्रादिवाक्यमेव तत्साधनावाप्तिप्रवृत्तिपूर्वकत्वमनुजानाति[१] ॥६३॥

**स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥२।१।६४॥**

एषामुदाहरणानि **भाष्ये** ॥६४॥

**विधिविहितस्यानुवचनमनुवादः॥२।१।६५॥**

विध्यनुवचनं चानुवादो [२]विहितानुवचनं च। पूर्वः शब्दानुवादः। परोऽर्थानुवादः। यथा पुनरुक्तं द्विविधम्, शब्दपुनरुक्तमर्थपुनरुक्तं च। शब्दपुनरुक्तम्, अनित्योऽनित्य इति। अर्थपुनरुक्तम्, अनित्यो निरोधधर्मक इति॥६५॥

**नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥२।१।६६॥**

कोऽस्य सूत्रस्यार्थः? प्रतीतार्थशब्दाभ्यासोऽनुवादपुनरुक्तयोः सामान्यम्। पुनरुक्तेऽपि प्रतीतार्थः शब्दोऽभ्यस्यते, अनुवादेऽप्येवम्। अतः प्रतीतार्थशब्दाभ्यासादुभयमसाध्विति॥६६॥

**शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥२।१।६७॥**

**शीघ्र ....षः** इति। यथा शीघ्रं गम्यताम्, शीघ्रतरं गम्यतामिति च तरपा क्रियातिशयोऽभिधीयते तथानुवादलक्षणेनाभ्यासेन क्रियातिशयोऽभिधीयत इति।

१. प्रवृत्तमनु॰? प्रवृत्तिमनु॰ J २. विधिविहि॰ C

अस्य प्रयोगः। अर्थवाननुवादलक्षणोऽभ्यासः प्रत्ययविशेषहेतुत्वात्, शीघ्रतरगमनोपदेशवत्। यथा शीघ्रशब्दात् शीघ्रतरशब्दः प्रयुज्यमानः प्रत्ययविशेषहेतुत्वात् न पुनरुक्तदोषं लभते, तथानुवादलक्षणोऽभ्यासः प्रत्ययविशेषहेतुत्वात् न पुनरुक्तदोषं लप्स्यत इति। कः पुनरसौ विशेषो भवतीति वक्तव्यम्। तदुच्यते। आद्ये पचेति शब्दप्रयोगे पाको निर्वर्तनीय इति पक्तुः प्रत्ययो भवति। द्वितीयात् तु पचेति शब्दादवधारणप्रत्ययो भवति, मयैव पक्तव्यमिति। सातत्यप्रत्ययो वा भवति, सततं मया पक्तव्यमिति। अध्येषणप्रत्ययो वा भवति, मामेवायमधिकुरुत इति। आशुप्रत्ययो वा भवति, आशु मया पक्तव्यमिति। एवं श्रोतुः। यथा च श्रोतुः, तथा च वक्तुरप्येते एव प्रत्यया भवन्तीति। पुनरुक्ते तु न कश्चिद् विशेषो गम्यत इत्यस्ति महान् विशेषः पुनरुक्तानुवादयोः। एवमन्योऽप्यनुवादस्य प्रयोगो लोके[१] बोद्धव्य इति ॥६७॥

**मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥२।१।६८॥**

किं पुनः प्रतिषेधहेतूद्धारादेव प्रमाणता वेदवाक्यानां सिद्धा? न। किं कारणम्? न साधनमन्तरेण सिद्धिरस्तीति। कुतस्तर्हि? प्रमाणतः। किं तत् प्रमाणम्? अर्थविभागवत्त्वम्।

**मन्त्रा...ण्यात्।** च शब्दः पूर्वहेत्वनुकर्षणार्थः। यथा मन्त्रायुर्वेदवाक्यानि पुरुषविशेषाभिहितत्वात् प्रमाणम्, तथा वेदवाक्यानीति पुरुषविशेषाभिहितत्वं हेतुः। किमायुर्वेदस्य प्रामाण्यम्, यत् तदायुर्वेदेनोपदिश्यते इदं कृत्वेष्टमधिगच्छति, इदं कृत्वानिष्टं जहाति। तस्यानुष्ठीयमानस्य तथाभावोऽविपर्ययः एतत् प्रामाण्यम्। किंकृतमेतत्? आप्तप्रामाण्यकृतम्। किं पुनराप्तानां प्रमाणत्वम्? साक्षात्कृतधर्मता। यं ते पदार्थमुपदिशन्ति, स तैः साक्षात्कृतो भवतीति। भूतदया च। यस्मै चोपदिशन्ति तं प्रत्येषामनुकम्पा भवति। यथा परिज्ञातार्थचिख्यापयिषा

१. वाक्ये for लोके C

चास्य भवति। एतेन त्रिविधेन विशेषणेन विशिष्टो वक्ता आप्तः। तेन यः उपदेशः क्रियते, स प्रमाणमिति।

दृष्टार्थवाक्याविसंवादेन वा शेषानुमानम्। यद् वाक्यं दृष्टार्थं यथा
ग्रामकामो यजेत

इत्येवमादि, तेन[१] शेषानुमानं प्रमाणमिति[२]।

लौकिकमपि वाक्यमनेनैव त्रिप्रकारेण विशेषणेन विशिष्टस्य वक्तुः प्रमाणं भवति। अस्य प्रयोगः। प्रमाणं वेदवाक्यानि वक्तृविशेषाभिहितत्वात्, मन्त्रायुर्वेद-वाक्यवदिति।

एककर्तृकत्वेन वा मन्त्रायुर्वेदवाक्यानि पक्षीकृत्यालौकिकविषयप्रतिपादकत्वेन वैधर्म्यहेतुर्वक्तव्यः।

पौरुषेयत्वमसिद्धं नित्यत्वादिति चेत्? अथ मन्यसे नित्यानि वेदवाक्यानि। नित्यत्वाच्चैषां प्रामाण्यम्। तस्मात् पौरुषेयत्वमसिद्धम्। न, असिद्धत्वात्। सिद्धे नित्यत्वे एतद् युक्तं वक्तुम्। तत्तु न सिद्धमित्यतो न युक्तमेतत्। यदि न नित्यानि, कथं प्रमाणम्? प्रतिपादकत्वात् प्रमाणं न नित्यत्वात्।

**केचित्** तु ब्रुवते न किञ्चित् नित्यं प्रमाणमस्तीति प्रमाणत्वादेवानित्यानीति, तत्तु न सम्यगिति पश्यामः। नित्यमपि प्रमाणं यथा मनः आत्मा च। प्रमाणशब्दस्य समुदायवाचित्वात्। अयं खलु प्रमाणशब्दः समुदाये वर्तते। तत्र च नित्यमनित्यं चानेकं समुदायि प्रमाणस्याङ्गत्वात् प्रमाणमित्युच्यते। यथा प्रदीपः। एवं च नित्यमपि प्रमाणमस्तीति। यदा च परमाण्वादि नित्यमितरवस्तुसाधकत्वेनोपादीयते, तदा परमाण्वादेर्नित्यस्य प्रमाणभावात् प्रमाणत्वादनित्य इत्यनेकान्तो[३] भवति इत्यनुत्तरमेतत्।

तस्माद् युक्तमर्थविभागवत्त्वादनित्यत्वं लौकिकवाक्यवदिति। यथा अर्थ-विभागवन्ति लौकिकवाक्यानि तथा च वेदवाक्यानि, तस्मादनित्यानि इति।

१. तेन वा C  २. प्रमाणत्व इति J  ३. इत्ययं नैका॰ C

लौकिकवाक्यान्यपि नित्यानीति चेत्? अथ मन्यसे यान्येतानि लौकिकवाक्यन्यर्थविभागवन्ति, तान्यपि नित्यानीति? अर्थविसंवादो[१] न स्यात्। योऽयमर्थविसंवादो [२]लौकिके वाक्ये स न स्यात्। दृष्टस्तु। तान्यनित्यानीति चेत्? विशेषहेतुर्वक्तव्यः। तुल्येऽर्थविभागवत्त्वे तुल्ये चार्थप्रतिपादकत्वे लौकिकान्यनित्यानि वैदिकानि नित्यानीति विशेषहेतुर्वक्तव्यः। तुल्यम्, भवतोऽपि अनित्यत्वे विशेषहेतुर्वक्तव्य इति।

उक्तोऽर्थविभागवत्त्वं हेतुः। इतश्च वर्णवत्त्वात् वर्णवन्ति लौकिकानि वाक्यानि, अनित्यानि च। तथा च वेदवाक्यानि। तस्मात् तान्यप्यनित्यानि। इतश्च, सामान्यविशेषवत्त्वे सति श्रोत्रग्राह्यत्वात् लौकिकवाक्यवदेव। इतश्च पदादिनियमात्[३] लौकिकवाक्यवत्।

दर्शनस्य परार्थत्वादिति चेत्? अथ मन्यसे दर्शनं परार्थं दृष्टम्। दर्शनशब्द उच्चारणार्थः। तच्चोच्चारणं परप्रतिपादनार्थम्। न हि कश्चिदात्मप्रतिपत्तये शब्दमुच्चारयति। यदि चायं नित्यो भवति ततः शब्दादर्थप्रत्ययो युक्तः। अथानित्य उत्पन्नप्रध्वंसी ततोऽस्य श्रोतुर्नित्यमपूर्वः शब्दः श्रोत्रविषयमेति, न चापूर्वशब्दश्रवणात् संप्रतिपत्तिर्युक्ता। न हि नारिकेलद्वीपवासिनोऽप्रसिद्धगोशब्दस्य[४] गोशब्दश्रवणात् ककुदादिमदर्थप्रतिपत्तिर्भवति। तथा चानित्यवादिनः सर्वे शब्दाः। तस्मादस्यापि शब्दात् प्रत्ययनियमो न प्राप्त इति। न, अनेकान्तात्, क्षणध्वंसिष्वपि प्रदीपेषु परप्रत्यायनं[५] दृष्टमिति। न, उदाहरणवैधर्म्यात्, प्रदीपोऽनाख्यातः प्रकाशनीयार्थसंबन्धात् प्रकाशनीयार्थसंप्रतिपत्तिं करोति न पुनरनाख्यातः शब्द इति। क एवमाह अनाख्यातः शब्दः प्रतिपादयतीति? संबन्धस्यादर्शनादाख्यानमनुपपन्नम्। उक्तमेतद्, यथा न शब्दार्थयोः प्राप्तिलक्षणः संबन्धोऽस्तीति। वाच्यवाचकभावलक्षणस्तु पौरुषेयः संबन्धः, स च कृतक इति,

---

१, २. विभाग C ३. पदवत्त्वात् C ४. नालिकेर J; ॰गोशब्दस्य om C
५. ॰ध्वंसिषु प्रदीपादिषु अपूर्वस्य प्रत्यायनं C

स च संसारानादित्वात् लोकतोऽवगम्यते। ये तु संसारमादिमन्तं वर्णयन्ति, त एवमुपालभ्याः।

अथ योऽयमभिलापो नित्या वेदा[१] इति, स कथम्? संप्रदायस्याविच्छेदात् तान्येव वेदवाक्यानि मन्वन्तरचतुर्युगान्तरेषु सम्प्रदायाभ्यासाविच्छेदेन प्रवर्तन्ते। तदपेक्षया लौकिकाः शब्दान् प्रयुञ्जते नित्या वेदा इति, यथा नित्याः सरितः, नित्याः पर्वता इति। एतच्च **मन्वा**दिवाक्येषु समानम्। कुत एतत् सम्प्रदायाभ्यासाविच्छेदात् नित्यत्वं न पुनर्नित्यत्वादेव? अनित्यत्वे प्रमाणाविघातात्[२]। यानि मया अनित्यत्वे प्रमाणान्युपदिष्टानि[३] तानि न विहन्यन्ते। तेषामविघातादनित्यत्वे सति सम्प्रदायाभ्यासाविच्छेदात् नित्यत्वोपचार इति॥६८॥

॥शब्दविशेषपरीक्षाप्रकरणम्॥

॥इति औद्द्योतकरे न्यायवार्त्तिके द्वितीयाध्यायस्य प्रथमाह्निकम्॥

---

१. वर्णाः for वेदाः C  २. अनित्यत्वोक्तप्र॰ C  ३. ॰न्युपन्यस्तानि C

# द्वितीयाध्याये द्वितीयाह्निकम्

## [ प्रमाणचतुष्ट्वपरीक्षाप्रकरणम् ]

### न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात् ॥२।२।१॥

**प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि** [१.१.३] इति सूत्रम्। तस्याक्षेपः,

**न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात्।**

अस्यार्थः। अयथार्थोऽयं प्रमाणोद्देश इति। न चत्वार्येव प्रमाणाणि, ऐतिह्यार्थापत्तिसंभवाभावा अपि प्रमाणानीति।

संशयव्युदासार्थं वा ऐतिह्यादय उपक्षिप्य[1] प्रतिषिध्यन्ते। प्रत्यक्षादीनि च प्रमाणानीति। ऐतिह्यादीनि चेति **केचित्** मन्यन्ते। तत्र श्रोतुः संशयः स्यात् किं विद्यमाना ऐतिह्यादयो नाभिहिताः, उताविद्यमाना इति।

विधिन्यूनतापरिहारार्थं वा प्रकरणम्। विद्यमानान्यैतिह्यादीनि नाभिहितानीति विधिहीनं[2] शास्त्रं स्यात्। दोषवतां दोषानभिधानाद् दोषहीनं वा शास्त्रं स्यादिति अत उद्दिश्य निवर्त्यन्ते। दोषवन्त ऐतिह्यादय इत्यतो नाभिधीयन्त इति। दोषस्तर्हि वक्तव्यः। अथ दोषो नाभिधीयते दोषहीनं शास्त्रमिति तत्परिहारार्थं प्रकरणमुपदिश्यते।

प्रत्यक्षादिष्वन्तर्भावप्रदर्शनार्थं वा। ऐतिह्यादीनि प्रत्यक्षादिष्वन्तर्भावयितुं[3] ये यत्रान्तर्भवन्ति तत्र तेषां प्रदर्शनार्थं प्रकरणमिति। सिद्धत्वादनारम्भः। नन्वयमर्थश्चत्वार्येव प्रमाणानीत्येतस्मिन्नेव विभागोद्देशसूत्रे सिद्ध इति सिद्धत्वात् पुनरनारम्भ इति। न, अवधारणप्रयोजनस्य इतः सिद्धेः। येन न्यायेन चत्वार्येव प्रमाणानीत्येतदवस्थाप्यते स न्याय इह प्रकरणे वर्ण्यते। तस्मादारभ्यमेवेति।

---

१. उपदिश्य C    २. विधिवाक्यहीनं C    ३. ०र्भावयता J

किमिदमैतिह्यं नाम? अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यम् इति होचुर्वृद्धाः कथयन्तीति।

अर्थादापत्तिरर्थापत्तिः। आपत्तिः प्राप्तिः प्रसङ्गः। यस्मिन् वाक्येऽभिधीयमानादर्थादन्योऽर्थ आपद्यते सार्थापत्तिः। यथासत्सु मेघेषु वृष्टिर्न भवतीति किमत्रार्थादापद्यते? सत्सु भवतीति।

संभवो नामाविनाभाववर्तिनः पदार्थस्य ग्रहणादन्यस्य सत्ताविज्ञानम्। यथा द्रोणस्य सत्ताग्रहणादाढकस्य सत्तेति।

अभावः प्रत्यनीकस्य ग्रहणात् तद्विरोधिनो ग्रहणम्। यथा विधारके वाय्वभ्रसंयोगे सति गुरुत्वप्रतिबन्धाद् अपामपातः प्रसिद्धः[१]। तदपामपातेन विरोधिनं वाय्वभ्रसंयोगं प्रतिपद्यत इति॥१॥

**शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसंभवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥२।२।२॥**

तान्येतान्यैतिह्यादीनि एवंभूतानि लक्षणभेदादेतेष्वेवान्तर्भवन्ति इति न पृथगुच्यन्ते। विषयाभावाच्च। न हि प्रत्यक्षादिप्रमाणव्यतिरेकी विषय ऐतिह्यादीनां संभवति[२]। अतश्च न प्रमाणान्तराणि। अथ प्रयोजनभेदात् भेदं प्रतिपद्यसे[३]? एवं तर्हि अष्टत्वं निवर्तते। यदभ्युगतं प्रमाणाष्टत्वं तन्निवर्तते प्रयोजनभेदात् प्रमाणभेदमभ्युपगच्छत इति। एककरणनिमित्तश्च प्रयोजनभेदो दृष्ट इत्यनेकान्तः। यथैकं चक्षुरनेकनीलादिभिन्नरूपग्रहणप्रयोजनमिति। इन्द्रियानेकत्वं वा। अथ प्रयोजनभेदाद् भेदं मन्यसे? एकमिन्द्रियमनेकं प्राप्नोति। अथ विषयसामान्याव्यतिरेकादेकमिन्द्रियम्? न युक्तस्तर्हि प्रतिषेधः,

१. पातः प्रतिषिद्धः C २. ॰रेकेण विषयाः...न्ति C ३. भिद्यन्त इति मन्यसे C

**न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात्**

इति।

यद्येतानि प्रमाणानि न प्रमाणान्तराणि, तर्हि क्व अन्तर्भवन्तीति वक्तव्यम्। अन्तर्भावप्रदर्शनार्थं सूत्रम्, **शब्द...षेधः**।

शब्द ऐतिह्यमन्तर्भवति, समानलक्षणत्वात्। न शब्दलक्षणमैतिह्यात् निवर्तते। सोऽयं भेदः सामान्येन संगृहीतः। अनुमानेऽर्थापत्तिसंभवाभावानामन्तर्भावः, समानलक्षणत्वात्। अनुमाने अर्थापत्तिसंभवाभावा अन्तर्भवन्ति[१]। कथमर्थापत्तिरनुमानेन संगृह्यते? द्वयोरेकतरप्रतिषेधस्य द्वितीयाभ्यनुज्ञाविषयत्वात्। यत्र यत्र द्वयोर्वस्तुनोरेकतरद् वस्तु प्रतिषिध्यते तत्र तत्र द्वितीयाभ्यनुज्ञा दृष्टा। यथा दिवा न भुङ्क्ते इत्यभिधानाद् रात्रौ भुङ्क्ते इति गम्यते।

**एके** तु ब्रुवते, नेयमर्थापत्तिर्दिवा न भुङ्क्ते इति। अत्र किलावधारणद्वयम् दिवा न भुङ्क्ते एव, दिवैव न भुङ्क्ते इति च। उभयप्राप्तौ न वक्तव्यं रात्रौ भुङ्क्ते इति। एतत् तु न सम्यग्, असंभवात्। दिवा न भुङ्क्ते एवेत्ययमर्थोऽसंभवेन निराकृतः। न हि कश्चिद् दिवा भुङ्क्ते एव। भुञ्जानोऽपि तावत् न भुङ्क्ते एव, किं पुनरभुञ्जान इति? तस्माद् असंभवेनास्यार्थस्य निराकृतत्वात् कालप्रतिषेधोऽनेन वाक्येन दिवा न भुङ्क्ते इति। अन्यथा अनर्थकं स्यात्। [२]क्रियान्तरनिवृत्तेरसंभवेन निराकृतत्वात् कालप्रतिषेधस्य चानभ्युपगमात् अनर्थकं वाक्यम्। भवत्वनर्थकं वाक्यम्, किं नो बाध्यते। कथं न बाध्यते[३]? यदभ्युपेतं तन्निवर्तते। किं चाभ्युपेतम्? क्रियान्तरप्रतिषेधोऽयं न कालप्रतिषेध इति। न चेदमनर्थकम्। तस्मादुभयोः सामर्थ्यप्राप्तयोः[४] एकतरप्रतिषेधे द्वितीयाभ्यनुज्ञानादनुमानमेवार्थापत्तिः। कतमदनुमानम्? सामान्यतोदृष्टम्।

एतेन संभवाभावौ व्याख्यातौ। संभवोऽनुमानम्। अभावोऽप्येवमेव[५]। तच्च वर्णितम्। अनयोरपि सामान्यतोदृष्ट एवान्तर्भाव इति। तदेवमन्तर्भावात् पृथगनपदेश इति॥२॥

१. अनुमाने...र्भवन्ति om C २. क्रियान्तरप्रतिषेधनिवृत्तेः C ३. कथं न बाध्यते om C ४. द्वयोः for उभयोः सामर्थ्यप्राप्तयोः C ५. ॰प्यनुमानमेव C

## अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ॥२।२।३॥

सत्यमेतानि प्रमाणानि, न तु प्रमाणान्तराणीत्युक्तम्। तत्रार्थापत्तेः प्रमाणभावाभ्यनुज्ञा नोपपद्यते। तथा हि इयम्,

**अर्थापत्तिरप्रमाणमनैकान्तिकत्वात्।**

येयं भवतार्थापत्तिः प्रमाणत्वेन प्रतिपाद्यते सा न प्रमाणम्। अप्रमाणमिति नार्थस्यैकदापि प्रतिपादिका। यथा मेघेष्वसत्सु वृष्टिर्न भवति सत्सु भवतीत्यर्थादापन्नं सत्स्वप्येकदा न भवतीत्यनैकान्तिकी अर्थापत्तिः। अर्थापत्तिमात्रस्य पक्षीकरणेऽनैकान्तिकत्वमव्यापकम्। यदि तावदर्थापत्तिमात्रं पक्षयसि, ततोऽर्थापत्तेरनैकान्तिकत्वमशक्यं दर्शयितुम्। अथानैकान्तिकी या सा पक्षीक्रियते तदाभ्युपगमः। वयमपि ब्रूमोऽनैकान्तिक्यप्रमाणमिति। हेतुश्च नास्ति, हेतोः प्रतिज्ञाविशेषणत्वात्। यानैकान्तिकी सा अप्रमाणमिति प्रतिज्ञा। तत्र हेतुर्नास्ति। न चायमर्थः साध्य इति हेत्वभावः। व्याघातश्चाभ्युपगमात्, अनैकान्तिकी यार्थापत्तिः सा प्रमाणं न भवतीति ब्रूवता यैकान्तिकी सा प्रमाणमित्यभ्युपगतं भवति। अनर्थकं चेदमभिधानम्। यानैकान्तिक्यर्थापत्तिः सा न प्रमाणमिति॥३॥

## अनर्थापत्तावर्थापत्त्यभिमानात् ॥२।२।४॥

यामपि भवाननैकान्तिकीमर्थापत्तिं मन्यते सापि नानैकान्तिकी,

**अनर्थापत्तावर्थापत्त्यभिमानात्।**

नेयमर्थापत्तिरनैकान्तिकी अर्थापत्तिश्च[१] सत्सु मेघेषु वृष्टिर्भवतीति। सेयमनैकान्तिकी कथम्? न सत्सु भवत्येव, अपि तु सत्स्वेव भवतीति। यत् तु सत्सु मेघेषु वृष्टिर्न भवतीति कारणप्रतिबन्धोऽसौ। न तदर्थापत्तेः प्रमेयम्। किं पुनरस्याः

१. अर्थापत्तिश्च om J

प्रमेयम्? कारणे सति कार्यं भवतीति। सेयमनैकान्तिकी कथं स्यात्? यद्यसत्यपि कारणे कार्यमुत्पद्यते, तत्तु न दृष्टमिति न कदाचिदनैकान्तिकत्वम्॥४॥

**प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥२।२।५॥**

योऽयं भवता प्रतिषेधः क्रियते, अर्थापत्तिर्न प्रमाणम् अनैकान्तिकत्वादिति, अयमप्यनैकान्तिकः सत्ताप्रतिषेधात्। नानेन प्रतिषेधेनार्थापत्तेः सत्ता प्रतिषिध्यते। कथं न सत्ता प्रतिषिध्यते? यस्मादर्थापत्तेर्विशेषः प्रतिषिध्यते, नार्थापत्तिमात्रं तेन सत्ताऽप्रतिषेधादनैकान्तिको भवतीति॥५॥

**तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥२।२।६॥**

अथ मन्यसे न प्रतिषेधस्य सत्त्वं विषयः किं तु प्रमाणत्वम्, सोऽयं प्रतिषेधः स्वविषये प्रवर्तमानो नानैकान्तिको भवितुमर्हतीति, अनैकान्तिको हि नाम स ज्ञेयो यः स्वविषयतज्जातीयान्यवृत्तिः। न चानैकान्तिकत्वं [1]प्रामाण्यप्रतिषेधेऽस्ति। तस्मात् नानैकान्तिकः प्रतिषेध इति।

**तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम्।**

यदि स्वविषयतज्जातीयान्यवृत्तिमनैकान्तिकं मन्यसे, अर्थापत्तिरपि तर्हि अनैकान्तिकी न भवति, न ह्यसति कारणे [2]क्वचिदपि कार्यमुत्पद्यमानं दृष्टमिति। तदिदं सूत्रं व्याघातदेशनार्थम्। यदुक्तं भवता स्वविषयादन्यत्रावर्तमानमनैकान्तिकं न भवति[3], अर्थापत्तिश्चानैकान्तिकीति तद् व्याहतम्। अज्ञानं वा। [4]अथाबुद्ध्वा ऐकान्तिकानैकान्तिकव्यवहारमिदमुच्यते, अर्थापत्तिरप्रमाणमनैकान्तिकत्वादिति, तदोपेक्ष्या वर्तितव्यम्। नोन्मत्तवाक्यानि [5]प्रतिसमाधेयानीति॥६॥

---

१. प्रामाण्ये for प्रामाण्यप्रतिषेधे J  २. क्वचिदपि om J  ३. °दन्यत्र वर्तमानमनैकान्तिकं भवति C  ४. अथाबुद्ध्वैवानैका° C  ५. प्रतिसन्धे° C

**नाभावप्रामाण्यं प्रमेयासिद्धेः ॥२।२।७॥**

नाभावः प्रमाणं विषयाभावात्। यदविषयं तदप्रमाणम्। यथा गोशब्दोऽश्वप्रतिपादने। तथा चाभावः। तस्मादप्रमाणम्।

कश्चैवमाह, अभावः प्रमाणमिति? अपि त्वभावविषया प्रतिपत्तिः प्रमाणम्। तया प्रमीयत इति। कः पुनरस्या विषयः? [१]अभाव इत्युक्तम्॥७॥

**लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः ॥२।२।८॥**

तत्रानेकधाभिन्नस्याभावप्रपञ्चस्योदाहरणार्थं सूत्रम्,

**लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः।**

अलक्षितानि वासांस्यानयेति प्रयुक्तः उभयसन्निधौ येषु वासःसु लक्षणानि न पश्यति, तानि लक्षणाभावेनैव प्रतिपद्यते, प्रैषसंप्रतिपत्त्योरेकविषयत्वात्। प्रतिपद्य चानयति। प्रतिपत्तिहेतुश्च प्रमाणम्। तस्मात् सिध्यत्यभावस्य प्रमाणत्वम्[२] ॥८॥

**असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥२।२।९॥**

असत्यर्थे नाभाव इति चेत्? अथ मन्यसे यत्र यद् भवति, तत् तत्र न भवति[३]। न चालक्षितेषु वासःसु लक्षणानि भवन्ति। तस्मात् न तत्र न भवन्तीति। न, अपरिज्ञानात्। न भवता अस्मदभिप्रायोऽबोधि। न ब्रूमो यद् यत्र भवति, तत्र तत् न भवतीति। अपि तु लक्षितानि वासांस्युपलभमान इतराणि लक्षणाभावविशिष्टानि प्रतिपद्यत इति। अयथार्थोऽयमुपालम्भ इत्युक्तार्थं सूत्रं नान्यलक्षणोपपत्तेरिति ॥९॥

---

१. भावः C २. प्रमेयत्वम् C ३. तत्र तस्याभावः C

**तत्सिद्धेरलक्षितेष्वहेतुः ॥२।२।१०॥**

यानि तानि लक्षितेषु वासःसु लक्षणानि, तानि न कस्यचित् न सन्तीति। यानि च सन्ति, तेषामभावो व्याहतः। अत्रोक्तं नापरिज्ञानादिति ॥१०॥

**न लक्षणावस्थितापेक्षसिद्धेः ॥२।२।११॥**

अस्य चार्थस्य ज्ञापनार्थं सूत्रम्,

**न लक्षणावस्थितापेक्षसिद्धेः।**

न ब्रूमो यानि भवन्ति तेषां तत्रैवाभाव इति। अपि तु केषुचिल्लक्षणान्यवस्थितान्यपेक्ष्य येषु तानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यत इति ॥११॥

**प्रागुत्पत्तेरभावोपपत्तेश्च ॥२।२।१२॥**

अभावद्वैतं खलु भवतीति प्राक्चोत्पत्तेरविद्यमानता, ऊर्ध्वं च विनाशादविद्यमानतेति। तत्र योऽयं विनाशादभावो लक्षणानाम्, अलक्षितेषु वासःसु सोऽनुपपन्नः, नेतर इति।

**असत्यर्थे नाभावः**

**तत्सिद्धेरलक्षितेष्वहेतुः**

इति चोभे अप्येते छलसूत्रे। छलस्योक्तमुत्तरं ज्ञात्वा अज्ञात्वा वा [१]असंबद्धमज्ञानं वा। तस्मादप्रयोज्यं छलमिति ॥१२॥

॥प्रमाणचतुष्टपरीक्षाप्रकरणम्॥

---

१. असंबन्धत्वमज्ञानं C

## [ शब्दानित्यत्वप्रकरणम् ]

### आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च॥२।२।१३॥

आप्तोपदेशः शब्द इति प्रमाणभावे विशेषणं ब्रुवता नानाप्रकारः शब्द इति ज्ञाप्यते। कथं नासति भेदे विशेषणमर्थवत्? न चानर्थकं विशेषणं युक्तमिति। युक्तं नानाभूतः शब्दो विशेषणसामर्थ्यादिति। तस्मिन् सामान्येन विचारः, नित्योऽनित्यो वा। विचारः परीक्षा।

विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः। विप्रतिपत्तिशब्दस्योक्तोऽर्थः। तत्राकाशगुणः शब्दो महत्त्ववदभिव्यक्तिधर्मा इत्येके। एके तावद् ब्रुवते नित्यः शब्द इति, अविनश्यदाधारैकद्रव्याकाशगुणत्वात्। यदविनश्यदाधारमेक-द्रव्यमाकाशगुणश्च तन्नित्यं दृष्टम्। यथा आकाशमहत्त्वम्। तथा च शब्दस्तस्मात् नित्य इति। सोऽयं नित्यः सन्नभिव्यक्तिधर्मा। तस्याभिव्यञ्जकाः संयोगविभागनादा इति।

गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मेत्यपरे। अपरे पुनर्ब्रुवते गन्धादिभिः सह सन्निविष्टः शब्दो गन्धादिवदेवाभिव्यज्यते। तस्याभिव्यञ्जका भूतविशेषाभिघाता इति।

आकाशगुणः शब्द उत्पत्तिनिरोधधर्मक इति चान्ये। अन्ये पुनर्वर्णयन्ति अनित्यः शब्द आकाशगुण उत्पत्तिनिरोधधर्मक इति॥

महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिनिरोधधर्मक इति चापरे।

अतः संशयः किमत्र तत्त्वमिति।

अनित्य इत्येतत् तत्त्वम्। किमिदमनित्यत्वं नाम यतोऽनित्य इति भवति? किं पुनस्तत्? प्राक्प्रध्वंसाभावावित्येके। एके तावद् वर्णयन्ति यस्य प्राक्प्रध्वंसाभावौ स्तः, तदनित्यमिति। न, असंबन्धात्। न हि प्राक्प्रध्वंसाभावाभ्यां भावः संबध्यत

इति। अनुत्पन्नविनष्टयोश्च प्रसङ्गात्। यदि च प्राक्प्रध्वंसाभावावनित्यतेति मन्यसे, अनुत्पन्ने वस्तुनि प्रागभावोऽस्ति ऊर्ध्वं च वस्तुनः प्रध्वंसाभावोऽस्तीति घटादावसति प्राक्प्रध्वंसाभावनिमित्तोऽनित्यप्रत्ययः[1] स्यात्। अनित्यस्य भावोऽनित्यतेति प्राक्प्रध्वंसयोरभावत्वात् भावशब्देनानभिधानम्। अनित्यं नाम यस्य नास्त्यत्यन्तं भावः। तस्यानित्यस्य यो भावः सा अनित्यता। प्राक्प्रध्वंसाभावौ च भावप्रतिषेधौ। न चाभावो भावाभिधानेन वक्तुं[2] युक्तः। तस्मात् न प्राक्प्रध्वंसाभावावनित्यतेति।

षष्ठ्यर्थश्च नास्तीति।

तस्य भावस्त्वतलौ [पा. सू. ५.१.११९]

इति। तस्येति धर्म्यपदिश्यते। भाव इति धर्मिणो धर्मः। न चाभावो धर्मः। न च धर्मकाले तच्छब्दवाच्यो धर्मी विद्यते। न चाविद्यमानस्य षष्ठ्या योग इति। अथ यद् भवति तत् प्राङ् न भवति, ऊर्ध्वं च न भवतीति मन्यसे, एवमपि न किञ्चित् प्रतिषिद्धम्। वयमपि ब्रूमो यत् प्राङ् न भवति तदूर्ध्वं न भवतीति षष्ठ्यर्थस्तु पूर्ववत् नास्ति। घटस्य प्रागभावः, घटस्य प्रध्वंसाभाव इत्येतत् कथम्? नात्र षष्ठ्या संबन्धोऽभिधीयते, अपि तु प्रागिदं वस्तु नास्ति[3] पश्चात् जातमित्यर्थः। ऊर्ध्वं च विनाशादिदं वस्तु न भविष्यतीति अनित्यमित्युच्यते। तस्य च भावोऽनित्यतेति।

वर्तमाने चासंभवात्। यदि च प्राक्प्रध्वंसाभावावनित्यतेति मन्यसे वर्तमाने वस्तुनि न प्रागभावो न प्रध्वंसाभाव इति अनित्याभिलापो न स्यात्। पाचकादिशब्दवदिति चेत्? अथ मन्यसे यथामी पाचकादिशब्दाः त्रिकालविषयाः तथायमनित्यशब्दः त्रिकालविषयो भविष्यतीति, न, ण्वुलस्त्रिकालविषयत्वात्। ण्वुलः प्रयोगस्त्रिकालविषयो दृष्टः। पाचको भवति, पाचको भविष्यति, पाचकोऽभूदिति। [4]त्यपोऽपि त्रिकालविषयत्वमिति चेत्? अथ मन्यसे त्यपोऽपि त्रिकालविषयत्व-

१. भावेऽनिमित्ततोऽनि॰ C २. शब्देनाभिधातुं J ३. नासीत् C ४. पा. वा. ४.२.१०४

मिति? तच्च न, अदर्शनात्। न ह्यसति[१] अनित्य इति प्रयोगं पश्यामः। तस्मात् त्यपस्त्रिकालविषयत्वमयुक्तमिति। अतो न प्राक्प्रध्वंसाभावावनित्यतेति।

विनाशहेतुभाव **इत्यन्ये**। अपरे पुनर्ब्रुवते विनाशहेतोरस्तित्वमनित्यतेति। एतत् तु न युक्तम्, असति भावात्। प्राग् विनाशहेतुभावादनित्य इति प्रत्ययो दृष्टः अनुपजातकपालविभागेषु घटादिषु। यदि पुनर्विनाशहेतुभावोऽनित्यता स्यात्, वर्तमानेषु घटादिषु न स्यात्। न ह्यसति ज्वरे ज्वरित इति प्रत्ययो दृष्टः। विनाश-हेतुभावाच्च विनाशस्य हेतुरस्तीति प्रत्ययो युक्तः, नानित्य इति। न हि गोत्वादश्वप्रत्ययो भवतीति।

अथ मन्यसे, यस्य विनाशहेतुरस्ति तद्विनाशवत्। यच्च विनाशवत् तदनित्य-मिति। एतदपि न बुध्यामहे यस्य विनाशहेतुरस्ति तद्विनाशवदिति। किं तु यस्य विनाशहेतुरस्ति तद्विनाशहेतुमदिति वक्तुं युक्तम्। न चान्येन योगादन्यनिमित्तः प्रत्ययो युक्तः। न हि दण्डयोगात् कुण्डलीति भवति।

विनाशवत् शरीरमिति प्रयोगदर्शनाद् युक्तमिति चेत्? अथ मन्यसे विनाशवत् शरीरमिति दृष्टः प्रयोगः। न चासति संबन्धे प्रयोगो भवितुमर्हतीति। न, मतुपोऽ-सत्स्वदर्शनात्। नायं मतुप् क्वचिदप्यसत्सु दृष्टः। न ह्यसता कुण्डलेन कुण्डलीति भवति। न च [२]भावस्य विनाशेन योगोऽस्ति। तस्माद् विनाशवत् शरीरमित्ययुक्तः प्रयोगः।

दृष्ट इति चेत्? अथ मन्यसे दृष्टोऽयं प्रयोगः। विनाश्येतत् शरीरकम्, अध्रुवा एते विषया इति। न, उपचारात्। विनाशीत्युपचारेण प्रयोगः, विनाशोऽस्यावश्य-न्तया भविष्यतीति। अध्रुवा इत्यनित्यतैव उच्यते। तस्मात् न विनाशहेतुभावोऽनित्यता।

उपलब्धिलक्षणप्राप्तस्यात्यन्ततिरोभावोऽनित्यते**त्यन्ये**। अन्ये पुनरनित्यता-शब्दस्यार्थमन्यथा वर्णयन्ति। यदुपलब्धिलक्षणप्राप्तं वस्तु तेनैवात्मनात्यन्तं तिरोभूतं नोपलभ्यते तदनित्यमित्युच्यते। एतत् तु शून्यमभिधानम्, उपलब्धिलक्षण-

---

१. असत्यनित्ये C  २. असता for भावस्य C

प्राप्तमत्यन्ततिरोभूतं नोपलभ्यत इति ब्रुवाणः सिद्धान्तं बाधते। न हि किञ्चिद् वस्त्वत्यन्तं नोपलभ्यत इति सिद्धान्तः। अनुपजातविशेषस्य च वस्तुनस्तिरोभावो न युक्त इत्यनेकधा वर्णितम्। तस्मादियमनित्यता न युक्ता।

ये पुनर्वर्णयन्ति स एव च भावोऽभूत्वा भवन् भूत्वा चाभवन् अनित्य इत्युच्यते। सा चावस्था भावप्रत्ययेनानित्यतेत्यभिधीयते। एतत् तु न युक्तम्, स्वार्थे भावप्रत्ययस्यादर्शनात्। न हि कश्चित् स्वार्थे भावप्रत्ययो दृष्टः। विनयादिपाठादिति चेत्? ननु च

विनयादिभ्यष्ठक् [पा. सू. ५.४.३४]

इति स्वार्थे प्रत्ययो दृष्टः, विनय एव वैनयिकमिति। न, अनभ्युपगमात्। नायं स्वार्थे प्रत्ययः।[1] किं तर्हि? विनयेन योगो वैनयिकमित्युच्यते। एवं सर्वत्र द्रष्टव्यम्। अनुपलभ्यमानभेदानामप्यनुमानतो भेदोऽनुमेयः। यांश्चापि भवाननुपलभ्यमानभेदान् प्रत्ययान् स्वार्थे मन्यते तेष्वप्यनुमानतो भेदोऽनुमेयः। किमनुमानम्? षष्ठ्या भेदविषयत्वम्। सर्वा षष्ठी भेदे दृष्टेति। यथा चानर्थान्तरे षष्ठी नास्ति तथोक्तं **गुणगुणिवाद**[2] इति।

तत् किमिदानीमनित्यतेत्ययं शब्दोऽनभिधेय एव? नानभिधेयः, अवध्यपेक्षानपेक्षाभेदात् सत्तैवोभयथा। योभयान्तपरिच्छिन्नवस्तुसत्ता सा अनित्यतेति। या अपरिच्छिन्नवस्तुसत्ता सा नित्यतेति। यथा समवाय एकः सन्। स च कार्येण विशिष्यमाणः कारणत्वमित्यभिधीयते। कारणेन विशिष्यमाणः कार्यत्वमित्यभिधीयते। कथमिति? कारणमित्ययं प्रत्ययो नानिमित्तः कदाचिद् भावात्। न वस्तुनिमित्तोऽवस्तुप्रत्ययो[3] व्यतिरेकित्वात्। न सत्तातो वैलक्षण्यात्। सत्तातः सदिति स्यात्। अयं तु सत्ताप्रत्ययाद् विलक्षणः तस्मात् न सत्तातः।

इहविशेषणनिमित्तत्वाच्च संबन्धनिमित्तः। इह तन्तुषु पट इत्याधारविशिष्टः प्रत्यय उपजायते। न चासति संबन्धे इहप्रत्ययेन शक्यं भवितुम्। यतोऽयमिह-

१. अपि तु for किं तर्हि C  २. द्रः पृ. ६८ ff.  ३. वस्तु° J

प्रत्ययः स समवायः। कार्यसमवाये सति कारणं कारणमित्यभिधीयते। यस्य गुणस्य योगात् यस्मिन्नर्थे शब्दनिवेशः तदभिधाने त्वतलाविति। कार्यसमवायस्य च भावात् एतद् भवतीति कार्यसमवायः कारणत्वम्।

एतेन कार्यत्वं व्याख्यातम्। कार्यात्मलाभहेतुः समवायः कारणविशिष्टः कार्यत्वम्। यथा समवाय एवं सत्ताप्येका सती उभयान्तपरिच्छिन्नवस्तुसंबन्धित्वे सति अनित्यतेत्युच्यते। विपर्ययात् नित्यतेति। एतया अनित्यतया योगादनित्यः शब्द इति।

**आदि....च्च॥** आदिमत्त्वात्। आदिर्योनिः कारणमिति। कारणवत्त्वादनित्य इति सूत्रार्थः। किं पुनरिदं कारणवत्त्वं नाम? निमित्तकारणभेदानुविधानम् उत्पत्तिधर्मकत्वमिति। तदभिव्यङ्ग्येषु नास्ति। न हि किञ्चिदभिव्यज्यमानं निमित्तकारणभेदानुविधायि दृष्टमिति। संयोगविभागानन्तरमुपलब्धेः[१] सन्देह इति चेत्? अथ मन्यसे संयोगविभागानन्तरमुपलभ्यते शब्दः, सा च तदनन्तरोपलब्धिर्व्यज्यमानस्यापि युक्ता। अतः सन्देहः किमयं संयोगविभागाभ्यां व्यज्यत अथ क्रियत इति?

न व्यज्यते ऐन्द्रियकत्वात्। किमिदमैन्द्रियकत्वम्? इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियक इति। ततः किम्? यदीन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः, ततो न व्यज्यते। न हि व्यज्यमानस्येन्द्रियेण प्राप्तिर्युक्ता। कथमिति? श्रोत्रं तावत् शब्ददेशं न गच्छति, अमूर्तत्वात्। यदमूर्तं तन्निष्क्रियं दृष्टं यथा रूपादि। अमूर्तं चाकाशम्, तस्मात् निष्क्रियमिति।

क्रियाकारणगुणसमवायात् क्रियावत्त्वमिति चेत्? अथ मन्यसे यस्मिन् क्रियाकारणं गुणो वर्तते तत् क्रियावद् दृष्टं यथा लोष्टादि। तथा चाकाशम्। तस्मात् तदपि क्रियावदिति? न, अनेकान्तात्। क्रियाकारणं च गुण आत्मनि न च क्रियावानात्मा इत्यनेकान्तः। विद्यमानस्यापि न क्रियाहेतुत्वं महापरिमाणप्रतिबन्धात्।

---

१. ॰लब्धिः J

विद्यमानोऽप्याकाशेऽभिघातो न क्रियाहेतुः, महत्परिमाणप्रतिबन्धात्। यदाकाशे वर्तते महत्त्वं तेनैकार्थसमवेतेन तद्वृत्तिरभिघातः प्रतिबध्यत इति। यथा लोष्टगुरुत्वं तदेकार्थवृत्तिना संयोगेनेति।

संयोगप्रतिबन्धाद् गुरुत्वस्य सापेक्षत्वप्रसङ्ग इति चेत्? अथ मन्यसे यदि संयोगेन प्रतिबध्यमानं गुरुत्वं क्रियां नारभते, तत्प्रतिबन्धापगमापेक्षमारभत इति? नन्वेवं गुरुत्वं सापेक्षं क्रियाकारणमिति प्राप्तम्। एवं च शास्त्रव्याघातः,

निरपेक्षं गुरुत्वं कर्मकारणम् [वै. सू. ?]

इति हि शास्त्रम्। न, निरपेक्षस्यान्यथा व्याख्यानात्। नायं निरपेक्षार्थो गुरुत्वं न किञ्चिदपेक्षत इति। अपि तु चरमभावि निमित्तान्तरं नापेक्षत इति निरपेक्षं गुरुत्वं कर्मकारणमिति नास्ति व्याघातः। तथा च शास्त्रम्,

संयोगाभावे गुरुत्वात् पतनमिति [वै. सू. ५.१.७]।

विषयाभावाच्च। न क्रियाकारणगुणसमवायमात्रं क्रियावत्त्वे हेतुः। अपि तु क्रियाकारणगुणसमवाये सति यदि क्रियाविषयो मूर्तिर्भवति, क्रियाकारणं च गुणोऽप्रतिबद्धो भवति तदा क्रियोत्पद्यते। तस्मात् निष्क्रियत्वादाकाशं तावत् न गच्छति। शब्दोऽपि नागच्छति निष्क्रियत्वादेव। न चाप्राप्तस्य ग्रहणमस्ति, सर्वशब्दोपलब्धिप्रसङ्गात्। परिशेषात् सन्तानसिद्धिः।

तत्राद्यः शब्दः संयोगविभागहेतुकः। तस्मात् शब्दान्तराणि कदम्बगोलकन्यायेन सर्वदिक्कानि। तेभ्योऽपि प्रत्येकमेकैकः शब्दो मन्दतरतमादिन्यायेनाश्रयाप्रतिबन्धमनुविधीयमानः प्रादुरस्ति। ततोऽन्त्यस्यातिमान्द्यात् शब्दान्तरोत्पत्तिशक्तिव्याघातो येन केनचित् प्रतिबन्धाद् भवतीत्यतः शब्दसन्तानोच्छेदः। तत्र यः कर्णशष्कुलीमन्तमाकाशदेशं प्राप्नोति स उपलभ्यते नेतर इति। तस्माद् ऐन्द्रियकत्वम्, तच्चान्यथा न युक्तमित्यतोऽनित्य इति।

एक एवेति चेत्? अथ मन्यसे नैव शब्दान्तराणि मयाभ्युपगम्यन्ते, अपि त्वेक एवायं शब्दो वितत्याकाशमवतिष्ठते। संयोगविभागाभ्यां व्यक्तः सन् उपलभ्यते।

यथा घटाद्यपवरकादिष्ववस्थितं प्रदीपसंयोगेनेति। तच्च न सर्वैरुपलब्धिप्रसङ्गात्। यद्येकः शब्दो वितत्यावस्थितः संयोगेन व्यक्तः श्रोत्रवतोऽर्थप्रत्ययं करोतीति मन्यसे तदा येन केनचित् यत्र तत्रावस्थितेन शब्दो व्यक्त इति सर्वैः श्रोत्रवद्भिरुपलभ्येत। न चोपलभ्यते। तस्मादकल्पनेयम्।

एकदेशाभिव्यक्तिरिति चेत्? अथ मन्यसे सत्यं वितत्यावस्थितः शब्दः। तस्य त्ववस्थितस्यैकदेशो निमित्तेन व्यज्यत इति। न, किमस्तादात्म्यानुपपत्तेः। यांस्तानेकदेशान् शब्दस्य मन्यसे, ते किं शब्दात्मका आहो नेति? किं चातः? यदि शब्दात्मकाः ततोऽनेकः शब्द इति व्याघातः। अथाशब्दात्मकाः, न शब्दादर्थप्रत्यय इति प्राप्तम्। तेषां च स्वभावो वक्तव्यः।

[1]एकदेशार्थानभिधानाच्च। एकदेश इति समासपदमेतत्। एकश्चासौ देशश्चेति। तत्र देश आधारार्थः, कारणार्थो वा स्यात्? तत्राधारार्थस्तावत् न युक्तः शब्दस्याकाशवृत्तित्वात्। आकाशवृत्तिः शब्दः, तद्गुणत्वात्। तस्मादाकाशव्यतिरिक्तो नाधार इति। कारणार्थोऽपि नास्ति, अकृतकत्वाभ्युपगमात्। अकृतकः शब्द इति स्वयं प्रतिपद्यमाना भवन्तो नार्हन्ति वक्तुं कारणमेकदेश इति। न चान्य एकदेशार्थः संभवतीति शून्यमभिधानम् एकदेशः शब्दस्य व्यज्यत इति। एकदेशाभिव्यक्तौ चार्थप्रत्ययो न स्याद् वर्णवत्। वर्णाः सर्व एव व्यापका भवन्तीति एतस्मिन् पक्षे वर्णैकदेशव्यक्तिः। न च वर्णैकदेशः शक्यो निरूपयितुम्। न च निरूपितादपि तस्मादर्थप्रतिपत्तिः संभवति, वर्णानामप्यर्थप्रत्यायकत्वानभ्युपगमात्। वर्णा एव तावदेकैकशोऽर्थप्रत्यायका न भवन्ति कुत एव तदेकदेशा इति?

एतेन बहुत्वं प्रत्युक्तम्। यथैकस्य शब्दस्य व्यक्तौ दोषः, एवमनेकशब्दस्यापि व्यापित्वे दोष इति। कोलाहलं च स्यात्। यदि चानेकशब्दा आकाशे युगपद् वर्तन्त इति प्रतिपद्यसे, एकशब्दाभिव्यञ्जकोपादाने समानदेशानां शब्दानां व्यक्तिरिति कोलाहलं स्यात्। यथा मल्लनटरंगसमाजेषु [2]प्रयोगकरणातिशयावर्जितेषु नदत्सु न

१. शब्दस्याकाशवृत्तित्वादेक° C २. प्रयोगझङ्कारादि C

तु भवति तस्मात् नानेको व्यापक इति। नियमश्च न स्यात् [१]यदि चानेके शब्दा युगपदाकाशे वर्तन्त इति। एवं च यत्किञ्चिद् व्यञ्जकमुपात्तं समानदेशान् सर्वशब्दानभिव्यनक्तीति। यदा वीणा वाद्यते तदा रासभध्वनिरपि श्रूयते। न हि समानेन्द्रियग्राह्याणां समानदेशानां व्यञ्जकेषु नियमो दृष्टः।

यद् यस्य व्यञ्जकं तेन तस्य व्यक्तिरिति चेत्? तन्नादृष्टत्वात्। अथ मन्यसेऽनेकशब्दसन्निपातेऽपि व्यञ्जकानि भिद्यन्ते, व्यञ्जकभेदानुविधायिन्यो व्यक्तयः प्रतिशब्दमुपजायन्त इति। तन्न, अदृष्टत्वात्। न हि समानदेशानामेकेन्द्रियग्राह्याणां व्यञ्जकेषु नियमो दृष्ट इति। न हि प्रदीप एकेन्द्रियग्राह्यमनेकमर्थं युगपत्सन्निपतितं न प्रकाशयतीति।

सामान्यवदेतत् स्यादिति चेत्? नानभ्युपगमात्। अथ मन्यसे अनेकार्थसन्निपाते सति सर्वाभिव्यक्तिभिः सामान्यानि संबध्यन्ते, अनेकार्थसंबन्धे सत्यपि सामान्यस्य केनचिदेवार्थेन किञ्चित् सामान्यं व्यज्यते। एवमनेकशब्दसन्निपाते सति किञ्चिद् व्यञ्जकं कञ्चित् शब्दं व्यनक्तीति, न, अनभ्युपगमात्। सामान्यमनेकेन भिन्नजातीयेनार्थेन संबध्यत इति नाभ्युपगम्यते। अपि तु स्वविषयसर्वगतं सामान्यम्, गोत्वं गोष्वेव नाश्वादिषु, अश्वत्वमश्वेष्वेव न गवादिष्विति। तस्मादसमोऽयं दृष्टान्तः।

व्यञ्जकाभावे चोपलब्धेर्न व्यज्यते शब्दः। यदि च संयोगविभागाभ्यां व्यक्तः शब्द उपलभ्यत इति मन्यसे, सोऽपि संयोगाभावे नोपलभ्येत उपलभ्यते च दारुव्रश्चने दारुपरशुसंयोगनिवृत्ताविति।

अभिघाताद् वायुरिति चेत्? अथ मन्यसे दारुपरश्वोरभिघाताद् वायुर्जायते, स वायुः सन्तानवृत्त्या वर्तते। सन्तानवृत्त्या च वर्तमानः कर्णशष्कुलीमन्तमाकाशदेशं प्राप्नोति। तत्प्राप्तौ तत्रस्थः शब्दो व्यज्यत इति। अत्रोक्तं यथैकः शब्दः कर्णशष्कुलीमन्त्याकाशदेशे वर्तते, तथा सर्व एव शब्दा वर्तन्त इति। यत्किञ्चिद् व्यञ्जकमुपात्तं

---

१. यदि ...... एवं च om J

यस्य कस्यचित् शब्दस्य व्यञ्जकं स्यादिति सर्वशब्दोपलब्धिप्रसङ्गः, नियमश्च न स्यादिति।

निमित्तसन्निधाने च सर्वत्रोपलब्धेर्न व्यज्यते। यत् खलु व्यज्यते तत् निमित्तसन्निधाने सत्यपि न सर्वत्र व्यज्यमानं दृष्टम्। यथा घटार्थिनो बिभ्राणाः प्रदीपं घटादिरहितानपवरकादीन् प्रविश्य न घटादीनुपलभन्त इति अभिव्यक्तिं घटादीनां प्रतिपद्यन्ते, न पुनस्ताल्वाद्यभिघातभूतसन्निधाने सति क्वचिदपि शब्दान् न पश्यामः। तस्मात् न व्यज्यत इति।

सर्वत्र सन्तीति चेत्? न, उक्तोत्तरत्वात्। अथ मन्यसे, यस्यैकदेशवृत्तयः शब्दाः, तं प्रत्ययमुपालम्भः। अस्माकं तु सर्व एव व्यापकाः। तस्मात् नैष दोष इति। न, उक्तोत्तरत्वात्। उक्तोत्तरमेतद् वाक्यम्, न पुनः प्रतिसमाधानं प्रयोजयतीति। तस्मात् न व्यज्यत इति। नादोपलब्धौ च विप्रकृष्टदेशावस्थितेन नादसमानदेशस्य शब्दस्यानुपलब्धेर्न व्यञ्जको नादः। एतेन वायवीयाः संयोगविभागाः शब्दव्यञ्जका इति प्रत्युक्तम्।

कृतकवदुपचाराच्च। तीव्रं मन्दमिति कृतकमुपचर्यते। तीव्रं सुखं दुःखम्, मन्दं सुखं दुःखमिति। उपचर्यते तीव्रः शब्दो मन्दः शब्द इति। अस्य प्रयोगः। अनित्यः शब्दः, तीव्रमन्दविषयत्वात् सुखदुःखवदिति। **कृतकवदुपचारादि**त्यनेन सूत्रेण सर्वानित्यत्वधर्मसाधनसंग्रहः। कृतकवद्ग्रहणस्योदाहरणार्थत्वात्। यथा सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् उपलभ्यस्यानुपलब्धिकारणाभावे सत्यनुपलब्धिः गुणस्य सतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वमित्येवमादि।

तीव्रशब्दस्य तीव्रार्थविषयत्वात्[१] न शब्दविषयत्वमिति चेत्? अथ मन्यसे तीव्रशब्देन तीव्रार्थोऽभिधीयते न शब्दः, न चान्यविषयः शब्दोऽन्यस्यार्थस्य प्रतिपादक इति। न, शब्दशब्दसमानाधिकरणस्य तीव्रशब्दस्याभिधानात्। सत्यम्, अयं तीव्रशब्दः केवल उच्चरन्[२] द्रव्यगुणकर्मणां समानं धर्मं प्रतिपादयति।

---

१. ०त्वम् C २. उच्चारितः C

शब्दशब्दोऽप्युच्चरन् [१]अनेकधर्मयोगिनं शब्दमभिधत्ते। यदा पुनरेतौ तीव्रशब्द-शब्दौ विशेषणविशेष्यभावापन्नावभिधीयेते, तदा तीव्रशब्देन धर्मान्तराणि व्यवच्छिद्यन्ते। शब्दशब्देन च धर्म्यन्तराणीत्युभयशब्दप्रयोगात् शब्दो गम्यते। तस्मादुपपन्नं तीव्रमन्दशब्दविषयत्वादनित्यः शब्द इति।

व्यञ्जकस्य तथाभावाद् ग्रहणस्य तीव्रमन्दता रूपवदिति चेत्? नाभिभवोपपत्तेः। शेषं **भाष्ये**।

ग्रहणं निमित्तभेदानुविधायीति चेत्? न, ग्रहणभेदस्यैकत्रादृष्टत्वात्। अथ मन्यसे न शब्दो भिद्यते, शब्दे त्वभिन्ने ग्रहणं निमित्तभेदानुविधायि भवति, ग्रहणभेदाच्चाभिभव इति। न, ग्रहणभेदस्यैकत्रादृष्टत्वात्। यद्यभिन्नः शब्दो ग्रहणभेदो न प्राप्नोति, न ह्यभिन्ने विषये भेदग्रहणं पश्यामः।

अथाभिन्ने विषये ग्रहणानि भिद्यन्त इति मन्यसे, नित्यं ग्रहणभेदः स्यात्। ततश्च भिन्नोऽभिन्न इति भिन्नाभिन्नप्रत्ययौ न स्याताम्। अभिभवानुपपत्तिश्च ग्रहणयोर्युगपदसंभवात्। न हि ग्रहणे युगपद् भवतः। न चैकं ग्रहणमात्मन एवाभिभावकम्। न चायमभिभवो नास्ति। तस्माद् भिद्यते शब्दः।

अभिभवानुपपत्तिश्च व्यञ्जकसमानदेशस्याभिव्यक्तौ। प्राप्त्यभावात्। व्यञ्जकेन समानदेशोऽयं व्यज्यत इति एतस्मिन् पक्षे नोपपद्यतेऽभिभवः। कस्मात्? व्यञ्जकसमानदेशत्वात्। न हि व्यञ्जकसमानदेशेन शब्देनाप्राप्तः शब्दोऽभिभवितुं शक्यः, अप्राप्तत्वात्। न ह्यप्राप्तमभिभावकं भवति।

अथाप्राप्तमभिभवतीति मन्यसे, वीणादिशब्दानामग्रहणप्रसङ्गः। अप्राप्ताः शङ्खरासभादिशब्दा अभिभावका इति न कदाचित् वीणादिशब्दाः श्रूयेरन्।

सर्वत्र सन्तीति चेत्? न, पूर्वदोषानुवृत्तेः। अथ मन्यसे यो व्यञ्जकसमानदेशं शब्दमभ्युपैति तस्यैष दोषः। अस्माकं तु सर्व एव शब्दाः समानदेशाः। तस्माददोषोऽयमिति। न, पूर्वदोषानतिवृत्तेः। समानदेशत्वे शब्दानां व्यञ्जकेषु नियमो

१. एकध॰ C

नास्तीति यत्किञ्चिद् व्यञ्जकमुपात्तं सर्वशब्दव्यक्तिहेतुरिति पूर्वदोषानिवृत्तिः। समानदेशत्वे च वीणावेणुशङ्खशब्दानां नित्यं शङ्खशब्देन वीणावेणुशब्दयोरभिभव इति वीणादिशब्दाश्रवणप्रसङ्गस्तदवस्थः। तस्मात् शब्दा एव भिद्यन्त इति। तेषां तु भिन्नानां सन्तानवृत्तित्वे सति ये कर्णशष्कुलीमत्याकाशदेशे युगपत् समवयन्ति तत्र यः पटुः शब्दः स इतरस्याभिभावक इति। अभिभवश्च नाम मन्दस्य पटीयसोर्ग्रहणादग्रहणमिति।

यदि सन्तानवृत्तिः शब्दः कर्णशष्कुलीमदाकाशदेशं प्राप्तश्च गृह्यते, दिग्देशप्रत्ययो न प्राप्नोतीति पूर्वेण शब्द उत्तरेण शब्द इति। न हि विषयेषु प्रत्यासीदत्सु दिग्देशप्रत्ययो दृष्टो गन्धादिवदिति। न, उपादाननिमित्तत्वात् दिग्देशव्यपदेशस्य। योऽयं शब्देषु दिग्देशव्यपदेशः, नायं शब्दनिमित्तः पूर्वापरादिभिन्नेभ्यो निमित्तेभ्य उपजायमानानामेकदेशग्रहणात् तुल्यो दिग्देशव्यपदेशः स्यात्। तस्मात् न शब्दनिमित्तः।

कुतस्तर्ह्ययं भवतीति वाच्यम्, निमित्तभेदात्। यानि तानि शब्दनिमित्तानि शब्दकारणस्य संयोगस्यानुग्राहकाणि तानि दिग्देशवन्ति तेषां निमित्तानां भेदात् दिग्देशप्रत्यया इति। निमित्तदेशग्रहणात् य उपलभ्यमाननिमित्ताः शब्दाः, तेष्वेतद् युक्तं वक्तुम्। येषां तु शब्दानां निमित्तानि नोपलभ्यन्ते तेषु दिग्देशप्रत्ययो न युक्तः। न न युक्तः। शब्दसन्तानस्य निमित्तभेदाभिमुख्येनादौ प्राप्तेः। यः शब्दसन्तानो यस्मात् निमित्तादुपजायते, स समन्तात् शब्दान्तराणि संतनोति। तत्र यः शब्दविशेष आदौ कर्णशष्कुलीमत आकाशदेशस्य तदभिमुखेन भागेन संबध्यते, तन्निमित्तः पूर्वापरादिशब्दव्यपदेश इति। यदा पुनराद्यशब्दपरिच्छेदो नास्ति तदा विपर्यय इति।

**एके** तु ब्रुवते, नैव शब्देषु दिग्देशप्रत्ययाः सन्ति। कुतः? चक्षुर्विषयप्रसिद्धौ दिग्देशव्यवसायादिति[1]। तथा हि जात्यन्धानां पूर्वापरादिप्रत्ययाः शब्देषु न सन्तीति।

---

१. °शाध्यवसायः C

**अपरे** तु दिग्देशव्यपदेशेन चक्षुःश्रोत्रे अप्राप्यकारिणीति ब्रुवते। तेषामुक्तमुत्तरं प्रत्यक्षसूत्रं वर्णयद्भिरिति॥१३॥

## न घटाभावसामान्यनित्यत्वात् नित्येष्वप्यनित्यवदुपचाराच्च ॥२।२।१४॥

सूत्रस्य पूर्वहेतूनामनैकान्तिकत्वज्ञापनमर्थः। शेषं **भाष्ये**॥१४॥

## तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः॥२।२।१५॥

नित्यत्वमित्यत्र किं तावत् तत्त्वम्? उभयान्तापरिच्छिन्नसत्तासंबन्ध इति। विपर्ययादनित्यत्वम्। एतच्चाभावे नास्ति। [1]भाक्तं तु तद्भवति नित्य इव नित्यो घटाभावः। न पुनर्नित्य एव कालद्वयानवस्थानात्[2]। प्रध्वंसाभावो न प्रागस्ति, न घटकालेऽस्ति। प्रागभावो न प्रध्वंसकाले न घटकाल इति। कथं तर्हि नित्य इति? नित्य इव नित्य इत्युच्यते भक्त्या। का पुनरियं भक्तिः? प्रागभावस्य कारणाभावः, प्रध्वंसाभावस्याविनाशः। उभयं चैतत् नित्यविषयमिति। एतत्सामान्यात् नित्य इव नित्यो न पुनर्नित्य एवेति॥१५॥

## सन्तानानुमानविशेषणात्॥२।२।१६॥

इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियक इति **सन्ता...णात्**। अव्यभिचारः। न वयमैन्द्रियकत्वादित्यनेन शब्दानित्यतां साधयामः। अपि तु ऐन्द्रियकत्वादित्यनेन शब्दस्य व्यक्तिं प्रतिषेधामः। न हि व्यज्यमानस्यैन्द्रियकत्वं युक्तमिति पुरस्तादुक्तम्॥१६॥

१. भक्त्या Alaṃkāra २. ॰ननुभवात् C

# कारणद्रव्यस्य प्रदेशशब्देनाभिधानात्॥२।२।१७॥

नित्येष्वप्यव्यभिचारः। न हि नित्यानां द्रव्याणां प्रदेशशब्देन कारणमुच्यते। आकाशस्य प्रदेश आत्मनः प्रदेश इति नात्राकाशात्मनोः कारणद्रव्यमभिधीयते, यथा कृतकस्य। किमिति नाभिधीयते? अविद्यमानत्वात्। न हि विद्यन्त आकाशादेः प्रदेशा इति। कथं न विद्यन्ते? प्रमाणतोऽनुपलब्धेः। यद्याकाशादेः प्रदेशाः स्युः प्रमाणत उपलभ्येरन्निति। कथं प्रमाणतोऽनुपलब्धिः? विकल्पानुपपत्तेः। प्रदेशशब्देन कारणं वाभिधीयते, आधारो वा? न कारणम्, अकृतकत्वात्। यस्मादकृतकमाकाशम् अतो न कारणार्थः प्रदेशशब्देनोच्यते। नाधारोऽनाश्रितत्वात्। अनाश्रितमाकाशम् तस्याधारार्थोऽपि न शक्यो वक्तुमिति।

लोकविरोध इति चेत्? न, अन्यथा तदुपपत्तेः। यद्याकाशं निष्प्रदेशं प्रतिपद्यसे, ननु लोको विरुध्यते पूर्वभागेन नभस आदित्यो मध्यभागे नभस आदित्य इति, न, अन्यथा तदुपपत्तेः। संयोगस्याव्याप्यवृत्तित्वे प्रदेशशब्देनाभिधीयमाने न लोकविरोधः। यस्मात् यत्तत् संयोगस्याव्याप्यवृत्तित्वं तत् प्रदेशशब्देनाभिधीयते। एतच्च प्रदेशवता द्रव्येणाकाशसामान्यम्। ये खलु परिच्छिन्ने द्रव्ये आमलकादिके भवतः, तयोर्यः संयोगो वर्तते स ते न व्याप्नोति। प्रदेशवती च ते। आकाशसंयोगोऽपि नाकाशं व्याप्नोतीति प्रदेशवद्द्रव्यसामान्यात् प्रदेशवदाकाशमिति भाक्तः [१]प्रत्ययः।

का पुनरियं भक्तिः? अतथाभूतस्य तथाभाविभिः सामान्यम्। उभयेन भज्यत इति भक्तिः। एतत्सामान्यादध्यारोपितप्रदेशवृत्तिः प्रदेशशब्दः। यस्मात् आकाशस्य प्रदेशवद्भिर्द्रव्यैः सामान्यं संयोगस्याव्याप्यवृत्तित्वमस्ति, अतः प्रदेशशब्द आकाशे प्रयुज्यते।

एवमेतत्, न तत्त्वत इति न प्रमाणमस्तीति चेत्? न, प्रमाणतोऽनुपलब्धेः। अथ मन्यसे आकाशप्रदेशाः प्रदेशवद्द्रव्यसामान्यादाकाश उपचर्यन्ते, न पुनस्तत्त्वतः

---

१. प्रयोग: C

सन्तीति न प्रमाणमस्ति। न, प्रदेशस्य प्रमाणतोऽनुपलब्धेः। न ह्याकाशादिप्रदेश-प्रतिपादकं प्रत्यक्षादिप्रमाणं संभवतीति॥

स्वरूपेणानभिधानाच्च। यदि चाकाशस्य प्रदेशाः स्युः, ते स्वरूपेण व्यपदिश्येरन्, यथा पटस्य प्रदेशाः। के? तन्तव इति। न पुनराकाशस्य प्रदेशाः के इत्युक्ते स्वरूपेण व्यपदेष्टुं शक्या इति।

किमोऽनुपपत्तेश्च पूर्ववत्। यांश्चाकाशप्रदेशान् भवान् मन्यते, ते किमाकाशात्मका उत नेति? किं चातः? यद्याकाशात्मकाः, अनेकमाकाशमिति प्राप्तम्। अथ न, तेषां स्वभावो वक्तव्यः। कथं च ते तस्य प्रदेशा इति वक्तव्यम्। अनाकाशात्मकाः सन्तः आकाशस्य प्रदेशा इति केनार्थेनाभिधीयन्ते? तद्यथा तन्तवः पटप्रदेशा इत्युक्ते कारणार्थ आधारार्थश्च गम्यते। न पुनराकाशस्य प्रदेशेषु एतदस्ति।

प्रदेशाभावादनाधारः संयोग इति चेत्? न अनाधारः, आकाशवृत्तित्वात्। अथ मनुषे यद्याकाशस्य प्रदेशा न सन्ति, आकाशदेशाश्रयः संयोगोऽनाधारः प्राप्नोति। न अनाधारः, आकाशवृत्तित्वादस्य। यस्मात् त्वयैवोच्यते आकाशाश्रय इति, तस्मात् न अनाधार इति।

समानदेशा इति चेत्? न, अबाधनात्। अथ मन्यसे मूर्तिमद्द्रव्यसंयोगा ये आकाशे, ननु ते प्रदेशाभावात् सर्व एव समानदेशाः प्राप्नुवन्ति। एवं समानदेशत्वे सति न किञ्चिद् बाध्यते। तदेवं प्रदेशवद्द्रव्यसामान्यादाकाशस्य प्रदेशा इति भाक्तः प्रत्ययः।

निष्प्रदेशत्वात् सर्वशब्दोपलब्धिप्रसङ्ग इति चेत्? न, उक्तोत्तरत्वात्। अथ मन्यसे, यदि निष्प्रदेशमाकाशम्, तेन च तर्हि सर्व एव शब्दाः समानदेशा इति सर्वैः सर्वः शब्द उपलभ्येत। न तूपलभ्यते। तस्माद् अन्योन्यवृत्तयः शब्दाः सर्वैरग्रहणादङ्गुलिरूपादिवदिति। न, उक्तोत्तरत्वात्। उक्तोत्तरमेतत् यथा संयोगस्याव्याप्यवृत्तित्वम्, तथा शब्दस्यापीति।

गुणत्वाद् व्यापकमित्येके। एके तु गुणत्वाद् हेतोः शब्दसंयोगादि अङ्गुलिरूपवद् व्यापकं प्रतिपद्यन्ते। त इदं प्रष्टव्याः, व्यापकमिति कोऽर्थः? यद्याश्रयवृत्तित्वं व्याप्तिर्न किञ्चिद् बाध्यते। अथान्यत्, तन्न विद्मः[१]। वयं तु व्याप्तिमङ्गुलिरूपस्य आश्रयोपलब्धावुपलभ्यत्वं[२] ब्रूमः। न पुनः शब्दादय आश्रयोपलब्धावुपलभ्यन्त इति। तस्मादङ्गुलिरूपवत् न व्यापका इति।

समुदितस्थानानामेकसमुदाय्युपलब्धावुपलब्ध्यनुपलब्धी[३] व्याप्त्यव्याप्ती एकाश्रयाणामाश्रयोपलब्धाविति। अथ य आकाशे मूर्तिमतां संयोगाः, तेषां कांश्चित् केचित् कृतकान् प्रतिपद्यन्ते, कांश्चिदकृतकानिति। तत्र कार्यद्रव्यसंयोगः कृतकः संयोगजत्वात्। उत्पद्यमानस्य कारणसंबन्धिभिः कार्यस्य संयोगजः संयोग इति। क्रियाजं तु **केचित्** नेच्छन्ति, यावद्द्रव्यभावित्वात् संयोगस्य। अविभक्तस्य च संयोगो नास्तीति, नास्त्याकाशे क्रियाजः संयोगः। अण्वाकाशसंयोगं त्वकृतकमिच्छन्ति। तत्र, अण्वाकाशसंयोगस्य तावत् कृतकत्वेऽनुमानम्। आकाशेन कृतकसंबन्धसंबन्धी परमाणुः मूर्तिमत्त्वादिभ्यो घटवदिति कार्याकाशसंयोगोऽपि विप्रतिपत्तिविषयो न यावद्द्रव्यभावी, अविनश्यदाधारत्वे क्रियावद्द्रव्यवृत्तित्वे चाप्राप्तिप्रतिद्वन्द्वित्वात् मूर्तिमदितरद्रव्यसंयोगवत्। तस्मात् कार्यद्रव्येणाकाशस्य संयोगजश्च संयोगः, कियाजश्च। परमाणोस्तु क्रियाज इति।

[४]विप्रतिपत्तिविषयाविभागिन आकाशादयः क्रियावद्द्रव्यसंयोगित्वात् परमाणुवत्। यथा परमाणोः क्रियावद्द्रव्यसंयोगा अयावद्द्रव्यभाविनः, संयोगवत् शब्दबुद्ध्यादयश्चात्मन्यव्यापकाः संयोगस्य चाव्याप्यवृत्तित्वमात्मनः प्रदेशार्थ इति व्याख्यातम्।

एकस्य चानेकमूर्तप्रदेशवद्द्रव्यसंबन्धित्वं प्रदेशार्थः। यद् वा यदाकाशस्यैकस्य सतः प्रदेशवता अनेकेन संबन्धित्वं तत् प्रदेशवद्द्रव्यसामान्यम्, यथा घटस्येति।

---

१. तन्नास्ति C २. पलब्ध्योपलब्धिं C ३. ॰पलब्ध्यनुप॰ C ४. विप्रतिपत्ति.... संयोगवत् om C

कस्मात् पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयत इति? कतमस्मिन् अर्थे? निष्प्रदेशमाकाशं निष्प्रदेश आत्मेत्येतस्मिन्। अर्थतोऽधिगतेर्न सूत्रम्। यस्माद-यमर्थोऽर्थतोऽधिगम्यते, अतो न सूत्रित इति। शब्दसन्तानप्रतिपादने वा न सूत्रमर्थतोऽधिगतेः।

शास्त्रसिद्धान्ताद् वा तदधिगतिः[1]। शास्त्रसिद्धान्तस्तु न्यायसमाख्यातं बहु-शाखमनुमानम्। तेनानुक्तमपि गम्यत इति न सूत्र्यते॥१७॥

## प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च॥२।२।१८॥

अथापि खल्विदमस्ति इदं नास्तीति **भाष्यम्**। योऽयं पर्यनुयोगः तस्य को विषय इति अनुपलभ्यमानशब्दास्तित्वम्। ये शब्दं नित्यं कल्पयन्ति त इदं पर्यनुयोज्याः इदमस्तीदं नास्तीत्येतद् भवन्तः कथं प्रतिपद्यन्त इति। एवमनुयुक्ताः सन्तः प्रतिब्रुवते प्रमाणत उपलब्धेरनुपलब्धेश्चेति।

अविद्यमानस्तर्हि शब्दः?

**प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च।**

यच्चोभयपक्षसंप्रतिपन्नं घटाद्यनित्यत्वेन, तेन चानुयोज्या इति। यदिदमनित्यं घटादि भवद्भिः प्रतिपद्यते, तत् कथमनित्यमिति? स एवमनुयुक्तो[2] यदि घटाद्यनित्यत्वे न्यायं ब्रवीति[3] स शब्देऽप्यस्तीति सूत्रम्। सतोऽनुपलब्धिकारणाभावे [4]कदाचिदुपलब्धेरनित्यः शब्द इति सूत्रार्थः। शेषं **भाष्ये**।

व्यञ्जकाभावादग्रहणमिति चेत्? न, उक्तोत्तरत्वात्। अथ मन्यसे शब्दस्योच्चारणं व्यञ्जकम्, व्यञ्जकाभावात् नोपलभ्यत इति असिद्धं विशेषणमनुपलब्धिकारणा-भाव इति। किमिदमुच्चारणं नाम? विवक्षाजनितेन प्रयत्नेन कौष्ठ्यस्य वायोः

१. शास्त्र....गतिः om J  २. अनुयुक्ता C  ३. प्रतिपद्यन्ते for ब्रवीति C
४. ०दनुपलब्धे० C

प्रेरितस्य कण्ठादिस्थानेषु प्रतिघातः। तन्न, उक्तोत्तरत्वात्। वायुगतवेगापेक्षो वायुना ताल्वादिसंयोगोऽभिघातः। संयोगस्य च व्यञ्जकत्वं प्राक् प्रतिषिद्धमिति ॥१८॥

**तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥२।२।१९॥**

एवं च सति तत्त्वं पांशुभिरिवावकिरन्नाह कोऽस्यार्थः? तत्त्वे उक्ते जात्या प्रत्यवतिष्ठत इति। सा च जातिः।

**तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः।**

कोऽस्य वाक्यस्यार्थः? आवरणानुपलब्ध्या[1] अनेकान्त इत्ययमर्थः। [2]यथावरणानुपलब्धिरनुपलभ्यमानाप्यस्ति तथावरणमित्यनेकान्तः। अथानुपलब्धिरनुपलभ्यमाना नास्ति, तदभावादुपलब्धिरस्ति। न चाविद्यमानस्योपलब्धिरिति सिद्धमावरणम्। कथं पुनर्भवान् जानीते नावरणानुपलब्धिरुपलभ्यत इति? किमत्र ज्ञेयं प्रत्यात्मवेदनीयत्वात्। प्रत्यात्ममेवायमावरणोपलब्धिवदावरणानुपलब्धिं च वेदयते। एवं च सत्यपहतविषयमुत्तरं वाक्यमिति। अपहतविषयमिति। नास्योत्थानमस्तीति ॥१९॥

**अनुपलम्भादप्यनुपलब्धिसद्भावान्नावरणानुपपत्तिरनुपलम्भात् ॥२।२।२०॥**

अभ्यनुज्ञावादेन तूच्यते

**अनुपलम्भादप्यनुपलब्धिसद्भावान्नावरणानुपपत्तिरनुपलम्भादिति।**

अस्य सूत्रस्य[3] अनुपलब्धेरनैकान्तिकत्वमर्थः ॥२०॥

१. °णाद्यनुप° C २. आवरणानुपलब्धिमावरणोप° C ३. अस्य सूत्रस्य om J

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥२।२।२१॥**

अतथाजातीयेन प्रत्यवस्थानादनुत्तरमिति सूत्रार्थः। यथाजातीयः शब्दोऽनित्यः, तथाजातीयं किञ्चित् नित्यं न दृष्टमिति। उक्तं चात्र। किमुक्तम्? उभयान्तापरिच्छिन्नसत्तासंबन्धो नित्यतेति। तस्मादयथार्थप्रत्यवस्थानात् न किञ्चिदेतत्।

अनित्यः शब्दो गुणत्वे सत्यस्मदादिप्रत्यक्षत्वात् बुद्धिवदिति। अव्यापकस्य व्यापकद्रव्यसमवायित्वे सति प्रत्यक्षत्वात् सुखवत्। आकाशनिष्प्रदेशत्वे हेतुः निष्प्रदेशमाकाशं व्यापकत्वात् आत्मवत्, द्रव्यस्य सतः सर्वदा अमूर्तत्वात् आत्मवदेव। व्यापकत्वादेवाकृतकम्। व्यापकत्वं च द्रव्यस्य[१] सतः सर्वदा अमूर्तत्वात्। एतेन दिक्कालौ व्याख्यातौ। एवं तावत् स्वसाधनस्थित्या व्यवस्थितमनित्यः शब्द इति ॥२१॥

**अस्पर्शत्वात् ॥२।२।२२॥**

अथ शब्दस्य नित्यत्वं प्रतिजानाना इति **भाष्यम्**। विप्रतिपत्तेः प्रमाणमूलत्वात् हेतौ परिप्रश्नः। विप्रतिपत्तिर्नाम द्वयोरेकधर्मिविषया विरुद्धधर्मसंप्रतिपत्तिः। न च संप्रतिपत्तिः प्रमाणान्तरमन्तरेण युक्तेति नित्यत्वे प्रमाणं वक्तव्यमिति[२], नित्यः शब्दः

**अस्पर्शत्वात्।**

अनुपलब्धविपक्षैकदेशस्य प्रयोगः आकाशवदिति ॥२२॥

**न कर्मानित्यत्वात् ॥२।२।२३॥**

तस्य व्यभिचारदर्शनार्थं सूत्रम्

---

१. °कत्वे च द्रव्यव्यापकस्य C २. °मित्यत आह C

**न कर्मानित्यत्वात्।**

इति। शेषमस्य **भाष्ये**॥२३॥

**नाणुनित्यत्वात्॥२।२।२४॥**

नाणु...त्वात्॥२४॥

**सम्प्रदानात्॥२।२।२५॥**

अयमन्यो हेतुः शब्दनित्यत्वे

**सम्प्रदानात्।**

न हि किञ्चित् नित्यं संप्रदीयमानं दृष्टमित्यन्वयिनो दृष्टान्तस्याभावाद् विरुद्धः॥२५॥

**तदन्तरालानुपलब्धेरहेतुः॥२।२।२६॥**

अथायं प्रतिज्ञार्थोऽवतिष्ठते शब्दः सम्प्रदानाद् घटादिवदिति, एवमपि नित्यत्वं न सिध्यति।

**तदन्तरालानुपलब्धेरहेतुः।**

अवतिष्ठमानो हि दातृप्रतिग्रहीत्रोरन्तराले उपलभ्येतेति विरोधः सूत्रार्थः॥२६॥

**अध्यापनादप्रतिषेधः॥२।२।२७॥**

न विरोधोऽनुमानत उपलब्धेः। न हि प्रत्यक्षतोऽनुपलभ्यमानस्यानुमाने-

नोपलब्धिः[१] सत्तां बाधते। किमनुमानम्? अध्यापनम्। किमिदमध्यापनं नाम? दीयमानस्य संप्रदानप्राप्तिः। दातृप्रतिग्रहीत्रोरन्तराले शब्दोऽस्ति अधापनात् [२]शरादिवदिति ॥२७॥

**उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥२।२।२८॥**

न शब्दस्याध्यापनं प्रतिषिध्यते। अपि तु नृत्योपदेशवदनित्यस्यैवाध्यापनमिति। यत् पुनरेतद् दातृप्रतिग्रहीत्रोरन्तराले शब्दोऽस्तीति सिद्धसाधनमेतत्। वयमपि ब्रूमो दात्रोच्चरितः शब्दः सन्तानवृत्त्या सम्प्रदानं प्राप्नोति। तस्मात् सम्प्रदानमवस्थाने न हेतुः॥२८॥

**अभ्यासात् ॥२।२।२९॥**

अयं तर्हि हेतुः

**अभ्यासात्।**

वीणादिवदिति। अनित्येष्वेव लङ्घनप्लवनादिष्वभ्यास इति विरुद्धः। अथावस्थानमभ्यासात् साध्येत तथाप्यनवस्थितेषु तेष्वेवाभ्यास इत्यनेकान्तः, अभ्यासस्वरूपानवधारणादसिद्धश्च। अभ्यासो हि नामैकविषयोऽनेकविज्ञानोत्पाद एकाकारविषयो वा। तत्रायमभ्यास एकविषय एकाकारविषयो वेति सन्दिग्धासिद्धः॥२९॥

**नान्यत्वेऽप्यभ्यासस्योपचारात् ॥२।२।३०॥**

अभ्यासासिद्धावभ्यासोपचारविषयत्वेन साधनं तस्यानैकान्तिकत्वज्ञापनार्थम्। नान्यत्वेऽप्यभ्यासोपचारोऽन्यत्वप्रतिषेधार्थम्[३] ॥३०॥

---

१. °नुपलब्धिरनुमानेनोपलब्धस्य C  २. गवादि J  ३. °पचारादिति॥ C एतत्सूत्रमन्यत्वप्रतिषेधार्थमिति परसूत्रवार्त्तिकेऽन्तर्भूतम् C

**अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः ॥२।२।३१॥**

यदिदमन्यदिति मन्यसे इदमन्यस्माद् अन्यद् वा स्याद्, अनन्यद् वा। यद्यन्यत्, [१]अन्यत् न भवति। यथा ब्राह्मणादन्यो न ब्राह्मण इति। अथानन्यत्, तथाप्यन्यत् न भवति, अनन्यत्वात्। यदनन्यत् तत् कथमन्यद् भवतीति ॥३१॥

**तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥२।२।३२॥**

सूत्रस्यार्थो विरोधः। अनन्यत्वमभ्युपगतं निवर्तत इति। कथं निवर्तते? प्रतिषेधस्यान्यविषयत्वात्। अन्याभावेऽनन्यन्नास्ति। न हि ब्राह्मणाभावेऽब्राह्मणः सिध्यतीति।

अयं तर्हि हेतुः प्रत्यभिज्ञानात्। तद्भावे प्रत्यभिज्ञानं दृष्टं मण्यादिषु। अस्ति च प्रत्यभिज्ञानं शब्दे। तस्मात् प्रत्यभिज्ञानादवतिष्ठते शब्द इति। किमिदं प्रत्यभिज्ञानम्? तत्प्रत्ययविषयत्वम्। तत्प्रत्ययविषयत्वमन्यत्वेऽपीत्यनेकान्तः। अथ प्रत्यभिज्ञानं तत्प्रत्ययविषयस्याव्यभिचारः, न हि कदाचित् तत्प्रत्ययविषयव्यभिचारोऽस्ति। यः पुनः सदृशे तत्प्रत्ययविषयः सविशेषदर्शनात् निवर्तते। अतो यासौ तत्प्रत्ययस्य शब्देऽव्यावृत्तिः, तत्प्रत्यभिज्ञानमिति। न, तत्प्रत्ययस्याव्या-वृत्तिरसिद्धा। अयं तावत् तत्प्रत्ययः पुरुषान्तरे निवर्तमानो दृष्टः। यत्पुनरेतत् विशेषदर्शनात् तत्सदृशे तद्भावप्रत्ययो निवर्तत इति, सत्यमेव तत्[२]। शब्दे तु किं विशेषस्यादर्शनात् तत्सदृशे तत्प्रत्ययः, उत तद्भावादेव तत्प्रत्यय इति सन्दिह्यते। अथ प्रत्यभिज्ञानं तद्भावाद् भवतीति पक्षः, तथाप्यन्यो हेतुर्वक्तव्यः, किं कारणम्? प्रत्यभिज्ञानस्य पक्षविशेषणत्वेनोपयुक्तत्वात्। यत् पुनरेतत् गोशब्देन[३] गोशब्द इति प्रत्यय-स्याव्यावृत्तिरस्तीति[४], न च गोशब्दस्य गोप्रत्ययकर्तृत्वव्यभिचार इति, एतदपि

१. अनन्यत् C २. मन्यसे एवमेतत् C ३. पुनर्गोशब्दो C ४. ०व्यव्या० J

सन्दिह्यते। किं कारणसामान्याद् गोशब्दे [१]गोशब्दप्रत्ययस्याव्यावृत्तिराहोस्वित् तद्भावादिति? एतेन तत्प्रत्ययकर्तृत्वं व्याख्यातम्। युक्ता तु कारणसामान्यात् [२]तत्प्रत्ययस्याव्यावृत्तिः। कथमिति? गोबुद्धौ गोबुद्धिप्रत्ययो न व्यावर्तते न चास्या गोशब्दबुद्धेः[३] तत्प्रत्ययकर्तृत्वं निवर्तते। तस्मात् [४]तत्प्रत्ययहेतुत्वे प्रत्यभिज्ञानमहेतुः।

यश्चानुपलब्धविशेष एव निवर्तते तं प्रति तस्य वस्तुनः किं विशेषोऽस्ति नास्तीति भवन्त एव प्रष्टव्याः। यद्यस्ति विशेषः, तत्प्रत्ययाव्यावृत्तिरहेतुः, अनेकान्तात्। अथ नास्ति विशेषः, एकं वस्तु द्व्यात्मकमिति प्राप्तम्। विरोधादहेतुः प्रत्ययाव्यावृत्तिश्चाशेषपुरुषविषयतया असिद्धा पुरुषविशेषविषयतया अनैकान्तिकीति॥३२॥

**विनाशकारणानुपलब्धेः॥२।२।३३॥**

अयं तर्हि हेतुः

**विनाशकारणानुपलब्धेः।**

यदनित्यं तस्य विनाशकारणमुपलभ्यते, यथा लोष्टस्य कारणद्रव्यविभागः। न तु शब्दस्य, तस्मात् नित्यः शब्द इति॥३३॥

**अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः॥२।२।३४॥**

अश्रवणकारणानुपपत्तेः सततं श्रवणप्रसङ्गः। शेषं **भाष्ये**॥३४॥

१. गोप्रत्ययस्यानि॰ C  २. गोशब्दे गोशब्दप्रत्य॰ C  ३. गोबुद्धिः J  ४. तत्प्रत्ययहेतुत्वे om J

## उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥२।२।३५॥

अनुमानेन शब्दस्य विनाशकारणमुपलभ्यते। यच्चानुमानेनोपलभ्यते न तन्नास्ति। किमनुमानम्? सन्तानोपपत्तेरिति वर्णितम्। तस्मादनपदेशोऽयं विनाशकारणानुपलब्धेरिति। यथा

विषाणी तस्मादश्वः [वै. सू. च. ३.१.१२]

इति। किं पुनरत्रासत्, किं विषाणम्, आहोस्विदश्वविषाणसंबन्ध इति? उभयमित्याह। ननु यदा विषाणिनमश्वत्वेन साधयति, तदा विषाणमस्त्येव न विषाणं प्रतिषिध्यते। अश्वविषाणसंबन्धस्याभावादनुमानमसदिति युक्तं वक्तुम्[१] असत्त्वादनपदेश इति।

कर्मवदिति चेत्? न, आश्रयानित्यत्वात्। अथ मन्यसे नित्यस्याप्युपलभ्यमानस्यात्यन्तमग्रहणं दृष्टम्, यथा कर्मत्वस्येति। तत् न, आश्रयस्यानित्यत्वात्। आश्रयस्य नित्यत्वादश्रवणकारणानुपपत्तेरिति ब्रूमः। कर्मत्वस्य पुनरग्रहणकारणमाश्रयानित्यत्वमस्ति। तस्मादप्रसङ्ग इति।

घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदात् नानाशब्दसन्तानो ह्यविच्छेदेन श्रूयते, तत्रेदं चिन्त्यते। शब्दस्य व्यज्यमानस्य यद् व्यक्तिकारणं तत् किं घण्टास्थम्, आहोस्विदन्यवृत्तीति? यदि घण्टास्थम्, किमवस्थितमुत सन्तानवृत्तीति? अन्यवृत्तित्वेऽपि किमवस्थितमुत सन्तानवृत्ति? यदि घण्टास्थमवस्थितं च श्रुतिभेदो न प्राप्नोतीति। अथ घण्टास्थं सन्तानवृत्ति च युगपदनेकशब्दव्यक्तिप्रसङ्गः। यावान् शब्दो घण्टास्थेनावस्थितेन सन्तानवृत्तिना वा व्यङ्ग्यः, स सर्व एकस्मिन् काले उपलभ्येत। घण्टास्थं चाभिव्यक्तिकारणं कथमन्यत्र वर्तमानं शब्दं व्यनक्तीति वाच्यम्। अथान्यगतमवस्थितं सन्तानवृत्ति वा शब्दाभिव्यक्तिकारणं मन्यसे, तदैकस्यां घण्टायामभिहतायां शब्दान् व्यनक्ति

१. उक्तं for वक्तुम् C

न प्रत्यासन्नदेशवर्तिषु घण्टान्तरेष्विति नियमहेतुर्वक्तव्यः। असति च शब्दभेदे श्रुतीनां भेद उपपादयितव्यः।

तारो मन्द इति नादो भिद्यते, न शब्दस्तारो मन्द इति चेत्? न, शब्दसमानाधिकरणस्य ग्रहणात्। शब्दशब्दसमानाधिकरणोऽयं तारमन्दादिशब्दः प्रवर्तते। न चासति शब्दविषयत्वे शब्दसमानाधिकरणत्वं युक्तम्, नीलोत्पलवदिति।

व्यामोहप्रत्ययः स इति चेत्? न, निमित्तानभिधानात्। अथ मन्यसे तारो मन्द इति शब्दसमानाधिकरणो व्यामोहप्रत्ययो भवति, यथा दीर्घः शब्दो महान् शब्द इति। न, विशेषहेत्वभावात्। व्यामोहप्रत्ययोऽयमिति न विशेषहेतुरस्ति। यदि चायं व्यामोहप्रत्ययो भवति, व्यामोहप्रत्ययस्य निमित्तं वाच्यम्। यथा दीर्घः शब्द इत्यविरतशब्दसन्तानश्रुतौ शब्दे दीर्घप्रत्ययो भवति। यानि खलु दीर्घाणि द्रव्याणि भवन्ति तेषामवयवोपचये सति ग्रहणसन्ततिविषयत्वम्। तत्सामान्यात् शब्दे दीर्घप्रत्ययः। न तु नित्यशब्दवादिनो व्यामोहप्रत्ययबीजमस्तीत्ययुक्तमेतत्।

तुल्यमिति चेत्? न, तन्निमित्तस्य कदाचिद् भावात्। अथ मन्यसे यस्याप्यनित्यः शब्दः, तेनापि घण्टास्थमवस्थितं सन्तानवृत्ति वा, अन्यस्थमवस्थितं सन्तानवृत्ति वोत्पत्तिकारणं वाच्यम्। घण्टास्थमुत्पत्तिकारणं कदाचित् शब्दानुत्पादयति कदाचित् नेति नित्यवत् प्रसङ्गः। न प्रसङ्गो निमित्तस्य कदाचिद् भावात्। यत्तु तत् शब्दोत्पत्तिकारणं घण्टावृत्ति तत् कदाचिद् भवति। कदाचिद् भावेऽपि सति सन्तानवृत्ति। तस्मात् निमित्तभेदानुविधायिनः शब्दाः कदाचिद् भवन्ति। सन्तानवृत्तित्वाच्च मन्दतरतमादिभिन्नरूपानुविधायिनं शब्दमुत्पादयन्तीति। तच्च कारणं संस्कार इति।

कुतस्तदुत्पत्तिः? पाणिसंश्लेषमपेक्षमाणात् कर्मणः। पाणिघण्टासंश्लेषात् पाणिगतवेगापेक्षात् घण्टायां कर्म। तत् कर्म पाण्यभिघातमपेक्षमाणं विभागसमकालं संस्कारं करोति। सा चलन्त्याध्यात्मिकं वायुमुपगृह्णाति। सा वायुनाभिहता पुनः कर्म करोति। ततः संस्कारः संस्कारेण पुनः कर्म। पुनर्वायूपग्रहणमित्येवं

मन्दतरतमादिन्यायेन[१] संस्कार उपपद्यत इति। तत्रान्त्यस्यातिमान्द्यात् घण्टायां महाभूतसंक्षोभणशक्तेरभावः। ततो वायूपग्रहोच्छेदः। ततः संस्कारक्षय इति ॥३५॥

## पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥२।२।३६॥

न संस्कारोऽस्त्यनुपलब्धेरिति चेत्? अथ मन्यसे, नैव संस्कारोऽस्त्यनुपलब्धेरिति। तच्चासत्

**पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः।**

उक्तार्थं सूत्रम्। यदि संस्कारं शब्दोत्पत्तिनिमित्तं न प्रतिपद्यसे पाणिघण्टासंश्लेषात् शब्दसन्तानोच्छेदो न प्राप्नोति। अथ घण्टास्थः संस्कारः पाणिसंश्लेषात् निवर्तते, तथापि कथं शब्दसन्तानोच्छेद इति। न ब्रूमः पाणिघण्टासंश्लेषः शब्दमुच्छिनत्तीति, अपि तु पाणिघण्टासंश्लेषात् तद्वृत्तिः संस्कारः स्पर्शवद्द्रव्यसंयोगविरोधित्वात् निवर्तते। निवृत्ते च तस्मिन्

कारणाभावात् कार्याभावः[२]

इति शब्दसन्तानोच्छेदः ॥३६॥

## विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥२।२।३७॥

यदिदमुच्यते

विनाशकारणानुपलब्धेः

नित्यः शब्द इति, यदि यस्य विनाशकारणं नोपलभ्यते तन्नित्यम्, यानीमानि शब्दग्रहणानि तेषां न भवता विनाशकारणमुपपाद्यते। अनुपपादनादवस्थानात् नित्यत्वमिति। अथानुपलब्धविनाशकारणान्यपि शब्दग्रहणानि अनित्यानि,

---

१. इत्येवमादिन्यायेन C २. वै. सू. (च) १.२.१

शब्दोऽप्येवमित्यनेकान्तः। अथानुमानतः शब्दग्रहणानां विनाशकारणं गम्यते[१], तत्समानं शब्द इति न किञ्चिद् बाधितं भवति॥३७॥

**अस्पर्शत्वादप्रतिषेधः॥२।२।३८॥**

व्यधिकरणत्वादयुक्तमिति चेत्, अथ मन्यसे व्यधिकरणः शब्दः, कथमन्यवृत्तिना संश्लेषेण निवर्त्यते[२]? अथ व्यधिकरणमपि निवर्तयति, सर्वघण्टाशब्दोच्छेदप्रसङ्गः। तस्मात् पाणिघण्टासंश्लेषसमानाधिकरणः शब्द इति।

**अस्पर्शत्वादप्रतिषेधः।**

अस्पर्शव्यापिद्रव्याश्रयः[३] शब्द इति सूत्रार्थः। कथमन्यत्र वर्तमानस्य पाणिघण्टासंश्लेषो निवर्तक इति? न, उक्तोत्तरत्वात्। उक्तोत्तरमेतत्, कारणाभावादन्यशब्दानुत्पादः। यस्तूत्पन्नः शब्दः, स मन्दतरतमादिन्यायेन अन्त्यस्यातिमान्द्यात् येन केनचिद् विरोधित्वात् क्षीयते। योऽयं संस्कारः शब्दकारणत्वेन समधिगतः स किमेकोऽनेको वेति संदिह्यते, अनेकः संस्कार इत्येतत् तत्त्वम्, शब्दभेदात्। कारणभेदे सति कार्यभेदो दृष्ट इति। यस्य चैकः संस्कारः, तस्यैषोः पातः प्राप्नोति, अगत्वैव यावद् गन्तव्यमिति। अथाप्रतिबध्यमाने संस्कारे द्रव्यं गच्छति, न कदाचित् पातः प्राप्नोति। दृष्टश्च पातः[४]। तस्माद् अनेकः संस्कार इति॥३८॥

**विभक्त्यन्तरोपपत्तेश्च समासे॥२।२।३९॥**

तस्मात् नायं शब्दो गन्धादिभिः सह सन्निविष्टो व्यज्यते विभक्त्यन्तरोपपत्तेः। विभागश्च विभागान्तरं चेति विभक्त्यन्तरम्। विधर्माणः शब्दा नाना-

१. °कारणानि गम्यन्ते C    २. निवर्तन्ते J    ३. °व्यापि° om C    ४. दृष्टश्च पातः om C

रूपाः, सरूपाश्चैकद्रव्याः श्रूयन्ते। समासः समुदायः। एतच्च स्पर्शवद्द्रव्यवृत्तिषु शब्देषु न प्राप्नोति गन्धादिवत्। यथा प्रतिद्रव्यमेको गन्धः, एवं प्रतिद्रव्यमेकः शब्द इति। सन्तानोपपत्तेश्चेति चार्थः। यद्ययं गन्धादिभिः सह सन्निविष्टः स्यात्, नान्यत्र वर्तमानः श्रोत्र उपलभ्येत। तस्मात् सन्तानवृत्तित्वाद् आकाशाश्रयः शब्द इति ॥३९॥

॥शब्दानित्यत्वप्रकरणम्॥

## [ शब्दपरिणामप्रकरणम् ]

**विकारादेशोपदेशात् संशयः ॥२।२।४०॥**

इति संशयज्ञापनार्थं सूत्रम् ॥४०॥

**प्रकृतिविवृद्धौ विकारविवृद्धेः ॥२।२।४१॥**

इति सूत्रम्। प्रकृत्यनुविधानादिति सूत्रार्थः, विकारे प्रकृत्यनुविधानं दृष्टमिति ॥४१॥

**न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥२।२।४२॥**

इति साधनपक्षे दृष्टान्तमात्रत्वादहेतुः ॥४२॥

**द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः ॥२।२।४३॥**

द्वि...न्तः ॥४३॥

**नातुल्यप्रकृतीनां विकारविकल्पात्॥२।२।४४॥**

दूषणपक्षे

**नातुल्यप्रकृतीनां विकारविकल्पात्।**

इत्यसंबद्धम्। अतुल्यायाः प्रकृतेर्विकल्प्यन्ते विकाराः, ह्रस्वदीर्घानुविधानं तु यकारे नास्तीति॥४४॥

**द्रव्यविकारवैषम्यवद् वर्णविकारविकल्पः॥२।२।४५॥**

यथा द्रव्यभावेन तुल्यायाः प्रकृतेर्विकारविकल्पो भवति[१], एवं वर्णभावेन तुल्यायाः प्रकृतेर्विकारविकल्पः स्यादिति॥४५॥

**न विकारधर्मानुपपत्तेः॥२।२।४६॥**

इति परिहारः॥४६॥

**विकारप्राप्तानामपुनरापत्तेः॥२।२।४७॥**

इति। यदि विक्रियन्ते वर्णाः, पुनरापत्तिर्न प्राप्नोति॥४७॥

**सुवर्णादीनां पुनरापत्तेरहेतुः॥२।२।४८॥**

विकारप्राप्तानां पुनरापत्तिदर्शनादनेकान्त इति सूत्रार्थः॥४८॥

---

१. °र्विकारो विकल्प्यते C

**न तद्विकाराणां सुवर्णभावाव्यतिरेकात्॥२।२।४९॥**

सर्वावस्थं सुवर्णदर्शनम्, न पुनरिकारयकारयोः कश्चिद् वर्णात्मा व्यवस्थितोऽस्ति य इत्वं हित्वा यत्वमापद्यत इति।

वर्णत्वाव्यतिरेकाद् वर्णविकाराणामप्रतिषेधः। वर्णविकारा अपि वर्णत्वात् न व्यतिरिच्यन्त[१] इति। अस्ति वर्णत्वं सामान्यमिति। सामान्यवतो धर्मयोगो न सामान्यस्येति परिहारः॥४९॥

**नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात्॥२।२।५०॥**

वर्णविकारानुपपत्तिः

**नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात्।**

नित्या वर्णा इति। न युक्तो विकारो व्याघातात्। अनित्या वर्णा इति न युक्तो विकारः, अनवस्थितानां विकारादर्शनादिति॥५०॥

**नित्यानामतीन्द्रियत्वात् तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः॥२।२।५१॥**

नित्यानामप्यतीन्द्रियत्वदर्शनात् तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेध इति विकल्पसमा जातिः॥५१॥

**अनवस्थायित्वे च वर्णोपलब्धिवत् तद्विकारोपपत्तिः ॥२।२।५२॥**

इति साधर्म्यसमा जातिः॥५२॥

१. न वर्णत्वं व्यभिचरन्ति C

**विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥२।२।५३॥**

उभयोरप्युत्तरम्,

**विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः।**

नित्या वर्णा विक्रियन्त इति व्याघातो दोषः। उपलभ्यमानस्य चेकारस्य यत्वानुपपत्तेर्वर्णोपलब्धिवदिति असंबद्धम्।।५३॥

**प्रकृत्यनियमात्॥२।२।५४॥**

इतश्च वर्णविकारानुपपत्तिः,

**प्रकृत्यनियमात्।**

विकारे प्रकृतीनां नियमो दृष्टः। इकारयकारयोस्त्वनियमः। तस्मादनियमात् न विक्रियन्त इति।।५४॥

**अनियमे नियमान्नानियमः॥२।२।५५॥**

सूत्रार्थोऽनियमो नास्तीति।।५५॥

**नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः॥२।२।५६॥**

अनुज्ञातप्रतिषिद्धयोरेकत्वानुपपत्तेरिति विरोधः सूत्रार्थः। तस्मादनुपलभ्यमान-पृथग्धर्मिविशेषाणामादेश इति। यद्येते वर्णा विक्रियेरन्, ततः पृथग्विकारलक्षणेभ्यो धर्मेभ्यो धर्म्युपलभ्येत, न तूपलभ्यते। तस्मात् न वर्णा विक्रियन्त इति।।५६॥

**गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः॥२।२।५७॥**

अथ विक्रियन्त इत्येवं विकारो भवति

**गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः।**

सूत्रार्थो गुणान्तरापत्त्यादिनादेश[१] इति। अयं च विकारादेशोपदेशविचारो **भाष्यकारे**णैव सम्यक् निरूपित इति सूत्रार्थमात्रं वर्णितमिति॥५७॥

॥शब्दपरिणामप्रकरणम्॥

## [ शब्दशक्तिपरीक्षाप्रकरणम् ]

**ते विभक्त्यन्ताः पदम्॥२।२।५८॥**

ते वर्णा यथादर्शनं विकृता विभक्त्यन्ताः पदसंज्ञका भवन्ति। अर्थप्रत्ययस्तर्हि न प्राप्नोति? न न प्राप्नोति। अन्त्यवर्णप्रत्ययात् पूर्ववर्णप्रतिसन्धानप्रत्ययापेक्षात् अर्थप्रत्यय इति। विभक्तिर्द्वयी, नामिकी चाख्यातिकी च। नामिकी स्वादयः, आख्यातिकी तिबादयः। तया विशिष्यमाणं पदं द्वेधा भवति, नाम चाख्यातं च। अभिधेयस्य क्रियान्तरयोगाद् विशिष्यमाणरूपः शब्दो नाम, यथा ब्राह्मण इति क्रियाकारकसमुदायः कारकसंख्याविशिष्टः। क्रियाकालयोगाभिधायि क्रियाप्रधानमाख्यातं पचतीति यथा। यदि द्वयी विभक्तिः, उपसर्गनिपातास्तर्हि न पदसंज्ञकाः? न, नाम्नि अन्तर्भावात्। उपसर्गनिपाता नाम्ना संगृहीताः, यस्मादाह

अव्ययाल्लोपः[२]

इति, तेन सुबन्तत्वात् तेनैव संगृहीता इति॥५८॥

---

१. °पत्त्यादेरादेशः C    २. द्रः पा. सू. २.४.८२

## व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः॥२।२।५९॥

पदेन व्यवहार इति पदार्थश्चिन्त्यते। नामपदं चाधिकृत्य व्यवहार इति नामपदं चिन्त्यते। नाम्नश्चाधिकारो व्यापकत्वात्। यस्मात् नाम्ना सर्वपदं व्याप्यते, तस्मात् गौरित्यस्य पदस्यार्थश्चिन्त्यते।

न पदादर्थाधिगतिर्विशेषेऽनवस्थानात्। न हि पदे उच्चरिते कश्चिद् विशेषो गम्यते। तस्मात् पदमवाचकमिति? न, पदस्य विशेषाविषयत्वात्। क एवमाह पदेन विशेषो गम्यत इति? अपि तु सामान्यवर्ति पदम्, विशेषवर्ति च वाक्यम्। न च सामान्याभिधानादनर्थकं भवितुमर्हतीति। न सामान्यस्य व्यवहाराविषयत्वात्[1]। सर्व उपदेष्टा विशेषप्रतिपत्त्यर्थं पदमुच्चारयति। न च सामान्ये प्रैषो न संप्रतिपत्तिः। तस्मात् पदमवाचकमेवेति? न, सामान्यविषयत्वे सति विशेषश्रुतेर्नियामकत्वात्। यदि पदान्यवाचकानि स्युः, न च पदश्रवणात् सामान्यं गम्येत। यदवाचकं न तस्मात् सामान्यं विशेषो वा गम्यते, यथा अर्थात्। गम्यते च पदात् [2]सामान्यम्। सामान्यश्रुतेश्च विशेषश्रुतिर्नियामिका भवति। यथा गौरिति सामान्याधिगतौ तिष्ठति गच्छतीति विशेषश्रुत्या विशेषो गम्यत इति। कथं पुनरियं विशेषश्रुतिर्गच्छति तिष्ठतीति? नैवेयं केवला विशेषश्रुतिः, किं तु पूर्वपदापेक्षया विशेषप्रत्ययहेतुत्वात् विशेषश्रुतिरित्युच्यते। भवतु वा पदादेवोभयम्। एतस्मादेव वा गोशब्दादुभयं गम्यते क्रिया च तत्साधनं च। प्रधानोपसर्जनभावस्यानियमेन यदायं गोशब्दो गोत्वनिमित्तो गोत्वयोगाद् गौरिति, तदा गोशब्दात् प्रधानं साधनं गौर्गम्यते, क्रिया त्वङ्गभूता विशेषकत्वात्। यदा पुनः क्रियाप्रधानं पदं गोर्भावो गोत्वमिति, तदापि गौरङ्गभूतो विशेषकत्वाद् गम्यते प्रधानं गोत्वमिति। तदेवं प्रधानोपसर्जनभावस्यानियमेन गोत्वमिति च पदे गौरिति चोभयं गम्यत इति। तत्र प्रधानोपसर्जनभावमाश्रित्य तदर्थे

---

१. व्यवहारविशेषावि° C २. तत्सामा° C

**व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः।**

यस्मादयं गोशब्दो व्यक्त्याकृतिजातिष्वविनाभावेन वर्तमानासु प्रयुज्यते, अविनाभाववृत्तिश्च सन्निधिः, अतो न ज्ञायते किं व्यक्तिः पदार्थः, उत आकृतिः , उत जातिरिति।।५९।।

**याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्यपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः।।२।२।६०।।**

शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणमिति प्रयोगप्रदर्शनार्थं याशब्दादिसूत्रम्। नामी याशब्दादयो जातौ प्रयुज्यन्ते। कस्मात्? अभेदात्। एका जातिः। तस्या विशेषणमनर्थकम्। या गौस्तिष्ठतीति या गौर्निषण्णेति। एवं शेषेषु। आकृतेरप्यभिधायकमेतत् न भवति, निष्क्रियत्वादाकृतेः। न हि निष्क्रिया गच्छति तिष्ठति वेति। एवं सर्वत्र। यस्य चानेन विशेषणेन तिष्ठत्यादिना योगः, तं गोशब्दोऽभिधातुमर्हतीति। कुतः? विशेषणविशेष्यभावस्यैकविषयत्वात्। यदि च गोशब्दस्य तिष्ठतिशब्दस्य चैकमभिधेयं भवति, ततो गोशब्देन धर्म्यन्तराणि निराक्रियन्ते, तिष्ठतिशब्देन च क्रियान्तराणीति विशेषणविशेष्यभावापन्नयोस्तिष्ठतिगोशब्दयोः सामानाधिकरण्यं युज्यते, अन्यथा नेति। द्रव्यं व्यक्तिरिति नार्थान्तरम्। तिष्ठतिशब्दसन्निहितेन गोशब्देन व्यक्तिरभिधीयत इति।।६०।।

**न, तदनवस्थानात्।।२।२।६१।।**

तत्प्रतिषेधार्थं सूत्रम्

**न, तदनवस्थानात्।**

इति। नानेन गोशब्देन व्यक्तिमात्रं शुद्धमुच्यते। यद्ययं व्यक्तिमात्राभिधायकोऽभविष्यत्, तेन यस्यां कस्याञ्चिद् व्यक्तौ प्रत्ययोऽभविष्यदिति सूत्रार्थः।।६१।।

**सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥२।२।६२॥**

यदि व्यक्तिर्न पदार्थः, कथं व्यक्तौ प्रयोगो या गौस्तिष्ठतीत्येवमादिः? निमित्तादतद्भावेऽपि तद्वदुपचारः। क्व पुनर्निमित्तादतद्भावेऽपि तद्वदुपचारो दृष्ट इति तस्योपदर्शनार्थं[1] सूत्रम्,

**सह...चारः। इति।** अतद्भावेऽपि तदुपचार इति। अतच्छब्दस्य तच्छब्देनाभिधानमुपचारः। यथा यष्टिकाशब्देन द्रव्यविशेषोऽभिधीयते। यष्टियोगात् पुनः साहचर्याद् [2]ब्राह्मणोऽभिधीयते यष्टिकां प्रवेशयेति[3]। एवं सर्वत्र। किं पुनरत्रोपचारबीजं यष्टिका ब्राह्मण इति? न ह्युपचारबीजमन्तरेणोपचारो लभ्यते। ननूक्तं साहचर्यमिति। साहचर्यं नाम यष्टिकया नित्यसंबन्धः। यष्टिकासंबन्धाच्च यष्टिकावानिति स्यात् न तु यष्टिकेति। यष्टिकावानिति चायं शब्दो मुख्य एव। तस्मादुपचारबीजमन्यद् वक्तव्यमिति। यष्टिकायां तावदयं यष्टिकाशब्दो जातिनिमित्तः। यष्टिकात्वं जातिः। सा यष्टिकायां वर्तत इति तया यष्टिकात्वयुक्तया यष्टिकया ब्राह्मणस्य योगः। साहचर्यात् संयुक्तसमवेतां जातिमध्यारोप्य ब्राह्मणं यष्टिकेत्याह। एवं शेषाण्युपचारबीजानि स्वयमुत्प्रेक्षणीयानीति ॥६२॥

**आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥२।२।६३॥**

यदि तर्हि गौरिति पदस्य न व्यक्तिरर्थः, अस्तु तर्हि

**आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः।**

१. ॰पादनार्थं C २. ब्राह्मणविशेषः C ३. यथा यष्टिकाः प्रवेशयेति C; प्रवेशयेदिति J

आकृतिः पदार्थः। कस्मात्? तदपेक्षत्वात् सत्त्वव्यवस्थानस्य। गौरश्वः पुरुष इत्येवमादिसत्त्वव्यवस्थानमाकृत्यपेक्षं सिध्यति। यदपेक्षा च सत्त्वव्यवस्थानसिद्धिः, स गोशब्दस्य विषय इति। अत्रापि तदेवोपस्थितम्, न तदनवस्थानादिति। यस्य च जात्या योगः, स गोशब्दस्य विषयः, नाकृतिर्जात्ययोगात्। कस्य पुनर्जातियोगः? नियतावयवव्यूहस्यावयविनः। नियतोऽवयवव्यूहो यस्य स भवति नियतावयवव्यूहः। अन्यपदार्थेन बहुव्रीहिणा अवयव्यभिधीयत इति॥६३॥

**व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ॥२।२।६४॥**

अस्तु तर्हि जातिः पदार्थः

**व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः।**

यस्मात् मृद्गवके व्यक्त्याकृती स्तः, न च तत्र प्रोक्षणादीनि प्रयुज्यन्ते। न हि गामानय, गां प्रोक्षय, गां देहीति मृद्गवके प्रैषसंप्रतिपत्ती भवतः, यदभावात् तत्र न संप्रत्ययः स गोशब्दस्यार्थः। कस्य चाभावात् न तत्र संप्रत्ययः? जातेः।

अथ मृद्गवके कस्माद् गोत्वं न जातिः? यस्मात् मृद्गवको गौर्न भवति। यश्च गौर्न भवति, न तत्र गोत्वं वर्तते। यथा अश्व इति। अथ मृद्गवकः कस्मात् गौर्न भवति? अत एव न भबति यस्मात् मृद्गवक इति। न चायं युक्तः प्रश्नः मृद्गवकः कस्माद् गौर्न भवतीति। किं कारणम्? प्रतिपत्तिबाधितत्वात्। भवानप्येतमर्थं प्रतिपद्यते नायं गौरिति। प्रतिपत्त्या च प्रश्नो बाध्यत इति।

अथ मृद्गवके गोशब्दः कुतः? आकृतिसामान्यात् चित्रादिवदिति। सर्वगतेति चेत्? अथ मन्यसे सर्वगता जातिः। सोत्पद्यमानेन यथा गवा संबध्यते, तथा मृद्गवकेनापीति अस्ति मृद्गवके गोत्वम्? तन्न, अनभ्युपगमात्। [१]केन सर्वगतत्वं

१. केन (in all sources) seems to be a mistake for न

जातेरभ्युपगम्यते, अपि तु स्वविषये सर्वत्र वर्तत इति सर्वगतेत्युच्यते[१]। कः पुनर्गोत्वस्य स्वो विषयः? यत्र गोत्वं वर्तते। क्व पुनर्गोत्वं वर्तते? यत्र गोत्वनिमित्तोऽनुवृत्तिप्रत्ययो भवति। क्व पुनरनुवृत्तिप्रत्ययं गोत्वं[२] करोति? यत् तस्य साधनम्। कः पुनर्नित्ये गोत्वे गोः साधनार्थः? यत् तेन व्यज्यते। न हि ककुदादिमदर्थव्यतिरेकेण गोत्वस्य व्यक्तिरिति[३]।

न हि पिण्डेभ्योऽर्थान्तरं गोत्वम्, पिण्डान्तरालेष्वग्रहणादिति **केचित्**। तन्न, विकल्पानुपपत्तेः। पिण्डान्तरालेष्वदर्शनादिति ब्रूवाणः पिण्डान्तरालं पर्यनुयोज्यः। किमिदं पिण्डान्तरालम्? किमाकाशम्, आहोस्विदभावः, उत द्रव्यान्तरमिति? यद्याकाशम्, न तत्र गोत्वम्। न ह्याकाशं गौरिति। एतेनाभावो द्रव्यान्तरं च व्याख्यातम्।

विशेषप्रत्ययानामनाकस्मिकत्वाच्च। अयं च पिण्डप्रत्ययव्यतिरेकभाक् प्रत्यय उपजायमानो निमित्तान्तराद् भवति। दृष्टा खलु पिण्डप्रत्ययव्यतिरेकभाजां प्रत्ययानां निमित्तान्तरादुत्पत्तिः। यथा वस्त्रचर्मकम्बलेषु नीलप्रत्यय इति। आकृतिसामान्यादिति चेत्? अथ मन्यसे सत्यम्, अयं [४]पिण्डव्यतिरिक्तात् निमित्तान्तरादनुवृत्तिप्रत्ययो भवति, न पुनरत्र जातिर्निमित्तम्। अपि तु यच्छिरःपाणिपादाकृतिसामान्यम्, तस्मादनुवृत्तिप्रत्यय इति? न, पिण्डवदसाधारणत्वाद् आकृतेः। यथैव पिण्डाः पिण्डान्तरवृत्तयो न भवन्ति, तथा आकृतिरपि एकपिण्डवर्तित्वात् पिण्डान्तरवर्तिनी न भवति।

अथ आकृतेः पिण्डान्तरवर्तित्वमभ्युपगम्यते, नाम्नि विवादो नार्थ इति। अथ पिण्डव्यतिरिक्तं सामान्यं नाभ्युपगम्यते, तथाप्येकसामान्यनिराकरणात् समानप्रत्ययबीजमन्यद् वक्तव्यं स्यात्। न ह्यसति सामान्ये समानप्रत्ययं पश्याम इति। असत्यपि सामान्ये दृष्टः समानप्रत्यय इति चेत्? अथ मन्यसे यथा सामान्येष्वसति

---

१. cf. स्वविषयसर्वगतम्-पदार्थधर्मसंग्रहः, Sam. 1951, p.311. २. गोत्वं om J ३. अभिव्यक्तिरस्ति C ४. ॰व्यतिरेकनिमि॰ C

सामान्यान्तरे अनुवृत्तिप्रत्ययो दृष्टः गोत्वाश्वत्वघटत्वेषु इदं सामान्यमिदं सामान्यमिति, तस्मादनैकान्तिकत्वादनुवृत्तिप्रत्ययोऽसाधनम् अर्थान्तरनिमित्तप्रतिपादने इति? नानभ्युपगमात्। न मया गोत्वाश्वत्वघटत्वेषु निर्निमित्तः समानप्रत्ययोऽभ्युपगम्यते। तस्मादनुत्तरमेतत्।

सूत्रव्याघात इति चेत्? अथ[१] मन्यसे सामान्येष्वपि सामान्यमस्तीति, ननु सूत्रव्याघातः

सामान्यविशेषेषु सामान्यविशेषाभावात् तत एव ज्ञानम् [वै. सू. (च) ८.५] इति। न, सूत्रार्थापरिज्ञानात्। अयं सूत्रार्थः, यथा द्रव्यमिति प्रत्ययो द्रव्यत्वविशेषणे द्रव्ये भवति, न पुनः सामान्यविशेषेष्वेवमिति। न पुनरयं सूत्रार्थः, निर्निमित्तोऽनुवृत्तिप्रत्यय इति। किं निमित्तमिति चेत्? अथ मन्यसे गोत्वादिष्वनुवृत्तिप्रत्ययस्य किं निमित्तं यतः सामान्यमिति भवति? कुतश्च सामान्यमिति भवति? अनेकार्थसमावायात्। यथा गोत्वमनेकार्थसमवायि, तथा अश्वत्वादीत्यनेकार्थैः तत्समवायस्य[२] समानत्वाद् गोत्वादिष्वनुवृत्तिप्रत्यय इति। पाचकादिशब्दवदिति चेत्? अथ मन्यसे यथा पाचकादिशब्दा अनुवृत्तप्रत्ययाश्च[३] भवन्ति न च पाचकत्वं नाम [४]सामान्यमस्ति, तथा गवादिषु अनुवृत्तिप्रत्यया इति? न, हेत्वर्थापरिज्ञानात्। विशेषप्रत्ययानामनाकस्मिकत्वादित्यस्य हेतोः पिण्डप्रत्ययव्यतिरिक्तस्य प्रत्ययस्य निमित्तान्तरादुत्पाद इत्ययमर्थः। न पुनः सर्वोऽनुवृत्तिप्रत्ययः सामान्यादेव भवतीति। एवं च सति पचनक्रियायाः यत् प्रधानं साधनं तत्पाचकशब्देनोच्यते। तच्च प्राधान्यं पाचकान्तरेष्वप्यस्तीति न दोषः।

यद्यनेकार्थवृत्ति[५] गोत्वं तत् किं प्रतिपिण्डं परिसमाप्त्या[६] वर्तते, अथैकदेशेनेति? किं चातः? यदि प्रतिपिण्डं परिसमाप्त्या वर्तते, पिण्डवदसाधारणत्वात् न सामान्यं भवितुमर्हति। अथैकदेशेन वर्तते, तथापि नैकमनेकत्र वर्तते, किं

१. यदि for अथ C २. °त्यनेकार्थसम° J ३. अनुवृत्ताश्च J ४. सामान्यविशेषम् C ५. अनेकानुवृ° C ६. किं पिण्डपरि° J

त्वनेकमनेकत्रेति। यस्मात् प्रदेशाः सामान्यस्य वर्तन्त इति। ये च ते एकदेशाः सामान्यस्य प्रत्येकं पिण्डेषु वर्तन्ते ते किं सामान्यात्मका उत नेति? यदि सामान्यात्मकाः, [1]नैकमनेकत्र प्रवर्तत इति प्राप्तम्। न चानेकमनेकत्र प्रवर्तमानं सामान्यमिति युक्तं वक्तुम्। अथ न सामान्यात्मकाः, शून्यमभिधानं सामान्यस्यैकदेशाः प्रत्येकं वर्तन्त इति। तैरपि त्वेकदेशैः सामान्यं [2]वर्तत इति पूर्ववत् प्रसङ्गः। न चान्या गतिरस्ति। तस्मात् नानेकवृत्ति सामान्यमिति। न, विकल्पानभ्युपगमात्। नायं विकल्पोऽस्ति गोत्वं प्रत्येकं पिण्डेषु परिसमाप्त्या वर्तते, अथैकदेशेन वर्तत इति। तस्माद् विकल्पानभ्युपगमात् अप्रश्नोऽयम्।

कस्मात्? गोत्वस्यावयविसमुदायत्वानभ्युपगमात्। न गोत्वमवयवी न समुदायः, [3]समुदायस्य भाग एकदेशशब्दः, अवयविनश्चावयवे। यदा न किञ्चित्परिहाण्या[4]शेषमभिधीयते, तदा अवयविनोऽवयवानपेक्ष्य कृत्स्नशब्दः, समुदाये च समुदायिनोऽपेक्ष्य। न च गोत्वमवयवी, न समुदायः। तस्मात् न तत्र कृत्स्नैकदेशशब्दौ स्तः। न चेत् तत्रैतौ शब्दौ स्तः तस्माद् गोत्वं किं कात्स्न्येंन वर्तत उत एकदेशेनेति न युक्तः प्रश्नः।

उक्तं चात्र[5] एकमनेकत्र वर्तत इति प्रतिजानानो नानुयोक्तव्यः। कस्मात्? उभयेन व्याघातादिति। कथं तर्हि गोत्वं गोषु वर्तते? आश्रयाश्रयिभावेन। कः पुनराश्रयाश्रयिभावः? समवायः। तत्र वृत्तिमद् गोत्वम्, वृत्तिः समवाय इति इहप्रत्ययहेतुत्वादित्युक्तम्। गव्यगवि वृत्त्यभावादिति चेत्? अथ मन्यसे यदिदं गोत्वं गोष्वनुवृत्तिप्रत्ययकारणं तत् किं गवि वर्तते, आहोस्विदगवि? यदि तावद् गवि? प्राक् गोत्वयोगाद् गौरेवासाविति व्यर्थं गोत्वम्। अथागवि? तेनाश्वाद्यपि गोत्वयोगाद् गौः प्राप्नोति। न चान्या गतिरस्ति। तस्मात् न गोत्वादनुवृत्तिप्रत्यय इति? न, विकल्पानभ्युपगमात्। न गवि गोत्वम्, नागवि प्राक् गोत्वात् नासौ गौर्नाप्यगौरिति। किं कारणम्? उभावेतौ विशेष्यप्रत्ययौ। न च विशेष्यप्रत्ययौ[6]

१. एकमेकत्र C २. पूर्ववद्वर्तते C ३. समुदायसमु॰ J ४. परिहाया॰ C
५. वा. २.१.३२ ६. च विशेष्यप्रत्ययौ om C

विशेषणसंबन्धमन्तरेण भवतः। न च प्राग् गोत्वयोगाद् वस्तु विद्यते। न चाविद्यमानं गौरित्यगौरिति वा शक्यं व्यपदेष्टुम्। यदैव वस्तु तदैव गोत्वेनाभिसंबध्यत इत्यनास्पदो विकल्पः।

एतेन सत्तासंबन्धस्य सदसद्विकल्पो[१] व्याख्यातः। न सतः सत्तासंबन्धः, नासतः। यदैव वस्तु तदैव सत्तया संबध्यत[२] इति सदसदाश्रयदोषोऽनुपपन्नः। तस्मादुपपन्ना जातिः। न चासौ मृद्गवक इति यदभावात् तत्रासंप्रत्ययः स पदार्थ इति ॥६४॥

**नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥२।२।६५॥**

जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते। व्यक्त्याकृती इति प्राप्ते प्राधान्यादाकृतेः पूर्वनिपातः। किं पुनः प्राधान्यम्? आकृतिविशेषणत्वं व्यक्तेः। यस्माद् व्यक्त्या आकृतिर्विशेष्यमाणा जातेर्लिङ्गं भवति, तस्मात् प्रधानमाकृतिः। न चागृह्यमाणायामाकृतौ व्यक्तौ च जातिमात्रं शुद्धं शब्दाद् गम्यते, तस्मात् न जातिरेव[३] पदार्थः ॥६५॥

**व्यक्त्याकृतिजातयस्तु पदार्थः ॥२।२।६६॥**

न च वै पदार्थेन न शक्यं भवितुम्। कस्तर्हि पदार्थः?

**व्यक्त्याकृतिजातयस्तु पदार्थः।**

तुशब्दो विशेषणार्थः। किं विशिष्यते? प्रधानोपसर्जनभावस्यानियमेन पदार्थत्वम्। यदा भेदविवक्षा विशेषगतिश्च गौस्तिष्ठति, गौर्निषण्णेति तदा व्यक्तिः पदार्थः, अङ्गं जात्याकृती। जातावाकृतौ च स्थानगमनासंभवात् यत्र संभवः स

१. सदसत्संबन्धो J २. संबद्धमिति C ३. जातिरपि J

पदार्थ इति। यदा पुनर्भेदो न विवक्षितः, सामान्यगतिश्च तदा जातिः पदार्थः। यथा गौर्न पदा स्प्रष्टव्येति। आकृतेस्तु प्रधानभाव उत्प्रेक्षितव्य इति स्वयमुत्प्रेक्ष्य इत्ययमर्थः। क्व पुनराकृतेः प्राधान्यं दृष्टम्? यथा पिष्टकमय्यो गावः क्रियन्तामिति। तदेवं बहुलं प्रयोगेषु प्रधानोपसर्जनभावः स्वयमुत्प्रेक्ष्य इति।

न व्यक्त्याकृतिजातयः पदार्थ इति **केचित्**। कुतः? विकल्पानुपपत्तेः। सदित्येतदेव पदं व्यापकत्वादुपादाय चिन्त्यते, सदित्यनेन पदेन जातिर्वाभिधीयते, पिण्डो वा, संबन्धो वा जातिमान् वार्थः[१]? तत्र न तावत् जातिरभिधीयते भेदार्थैरभिन्नविभक्तिकत्वात्। यद्ययं जातिवाचकः सच्छब्दो भवति सद्द्रव्यमिति भेदवाचिना द्रव्यशब्देन सामानाधिकरण्यं न प्राप्नोति। न हि भिन्नार्थवाचकानां शब्दानां सामानाधिकरण्यं पश्यामः। न हि गवाश्वमिति सामानाधिकरण्यं दृष्टमिति।

अथ द्रव्यादिवृत्तित्वात् सत्ताया द्रव्यादिशब्दैः सह सामानाधिकरण्यम्, तथापि पारतन्त्र्यात् सत्ता गुणः[२]। गुण्यभिधायिनोश्च शब्दयोः सामानाधिकरण्यम्, यथा शङ्खस्य शौक्ल्यमिति। एतेन संबन्धो व्याख्यातः। सच्छब्दः पिण्डानां वाचको भवतीति न युक्तम्, पिण्डानामानन्त्यात्। न ह्येकस्य सच्छब्दस्य अनेकेन द्रव्यगुणकर्मप्रपञ्चेन संबन्ध आख्यातुं शक्यः। न चानाख्याते शब्दार्थसंबन्धे शब्दादर्थप्रतिपत्तिर्युक्ता स्वरूपमात्रप्रतीतेर्व्यभिचाराच्च। सच्छब्दश्रवणात् द्रव्यगुणकर्माणीति परिप्लवते बुद्धिः[३]। न च यस्मादभिधानात् परिप्लवते बुद्धिः, तदभिधानमिति युक्तं वक्तुम्। तस्मात् न सच्छब्दो भेदानां वाचकः। जातिमन्मात्राभिधायकोऽपि सच्छब्दो न भवति। कस्मात्? अस्वतन्त्रत्वात्। न हि सच्छब्दात् तद्भेदा घटादयो गम्यन्त इति तद्गतघटादिभेदानाक्षेपात् सामानाधिकरण्याभावः।

अथ वा अस्वतन्त्रत्वादिति सच्छब्दः प्राधान्येन सत्तायां वर्तते, तत्र वर्तमानः तद्वत्युपचर्यते। यच्च यत्र वर्तमानमन्यत्रोपचर्यते, न तत् तस्याभिधायकं युक्तं मञ्चशब्दवदिति। उक्तं चात्र। किमुक्तम्? तद्वतामानन्त्यात् न सच्छब्देनाभिधानं

१. पदार्थः C २. सत्ताया गुणत्वम् C ३. परिप्लवमाना बुद्धिरवतिष्ठते C

युक्तमिति। तद्वति च न गुणसारूप्यात् प्रत्ययसंक्रान्तिः, यथा स्वामिशब्दस्य भृत्ये। न गुणोपरागात्। यथा नीलः स्फटिक इति। क्रमवृत्त्यभावाच्च। युगपदसंभवाच्च। अयथार्थज्ञानोत्पत्तिप्रसङ्गाच्च। तस्मात् न जातिमन्मात्राभिधायकोऽपि। असाधारण-विशेषाभिधायको भविष्यतीति न युक्तम्, अन्यत्र प्रत्ययाभावप्रसङ्गात्। न चान्या गतिरस्ति। तस्मादन्यार्थापोहकृतश्रुतिरिति। अन्यशब्दार्थान्तरापोहं स्वार्थे कुर्वती श्रुतिरभिधत्त इति[१]।

अत्रास्माभिर्व्यक्त्याकृतिजातयः पदार्थ इति प्रधानोपसर्जनभावस्यानियमेन व्यवस्थापितम्। एकान्तवादिनश्चैते दोषा इति। न चैते दोषाः। कथमिति? यत् तावत्सत्ताशब्दः सत्ताया न वाचक इति, तत्र व्याघातात्। सत्ताशब्दो न सत्ताया वाचक इति व्याहतमुच्यते। कथं च तदवाचकत्वे सति सत्ताशब्द इत्यभिधीयते? भवदभिप्रायेणाभिधीयत इति चेत्? अथ मन्यसे नैव नः कृतान्ते[२] सत्तादिशब्दाः सन्ति, किं तु भवद्भिः सत्ताशब्दो द्रव्यगुणकर्मशब्दा इति च परिकल्प्य व्यवहारः क्रियते, ततोऽस्माभिरपि युष्मदभिप्रायानुविधानेन सत्तादिशब्दा इति वाच उच्चार्यन्त इति। न, व्याघातानिवृत्तेः। सदित्येवमादीनि पदानि लोकप्रसिद्धानि तानि केषु अर्थेषु वर्तन्त इत्युभयोर्विचारः। वयं तु ब्रूमः सत्ताशब्दः सत्तायां वर्तते। त्वं पुनर्ब्रवीषि सत्ताशब्दो न सत्तायामिति। एवं ब्रुवाणो मया विरोधेन प्रत्यवस्थीयसे। विरोधोद्धारं चानुक्त्वा त्वन्मत्या[३] मयाभिधीयत इति ब्रूवाणो न व्याघातमतिवर्तसे।

यच्चेदमुच्यते त्वया परिकल्पिताः सत्तादिशब्दा इति, तदपि न, परिकल्प्य-विषयानभिधानात्। [४]परिकल्प्यस्य विषयोऽतथाभूतस्य तथाभाविभिः सामान्ये सत्यध्यारोपिततद्धर्मणः प्रधानार्थप्रतिपत्तिः, यथा स्थाणौ पुरुष इति। यदि चामी सत्तादिशब्दाः परिकल्पिता भवन्ति, प्रधानमेषां वाच्यम्। न हि निष्प्रधानं [५]परिकल्प्यं पश्याम इति।

---

१. इत्युच्यत इति C २. सिद्धान्ते C ३. चाकृत्वा त्वन्नयो C ४. परिकल्प्यस्य च C ५. पश्याम इति om C

यत्पुनरेतत् भेदार्थैरभिन्नविभक्तिकत्वादिति, तन्न, समानार्थापरिज्ञानात्। न ब्रूमः सत्तादिशब्देन द्रव्यशब्दस्य सामानाधिकरण्यम्, अपि तु सत्तायाः प्रधान-साधनवाचिना सच्छब्देन द्रव्यगुणकर्माण्यभिधीयन्ते [१]द्रव्यगुणकर्मशब्दैरपीतरेतर-विशेषणविशेष्यभावापन्नैस्तान्येव। एवं सति युक्तं सामानाधिकरण्यम्, उभयोः सद्द्रव्यशब्दयोरेकविषयत्वात्। यदा पुनरयं सत्ताशब्दः सत्ताप्रधान एवाङ्गभूतं साधनमभिधत्ते, न तदा सामानाधिकरण्यम्, द्रव्यस्य सत्तेति भवति। तस्मात् सामानाधिकरण्यानुपपत्तिरदोषः। विभक्तिभेदनियमाद् गुणगुण्यभिधायिनोः सामाना-धिकरण्यस्यासिद्धिः सद्द्रव्यशब्दयोरित्येतदनेन प्रत्युक्तम्।

एतेन संबन्धो व्याख्यातः। कथमिति? न सच्छब्देन संबन्धोऽभिधीयते, अपि तु संबन्धशब्देनैव, संबन्धश्च गुणः। [२]तच्छब्दो गुणशब्दः। न च गुणशब्देन द्रव्यवाचिनः शब्दस्य सामानाधिकरण्यमस्तीति। यत् पुनरेतत्, आनन्त्यात् न जातिशब्दो भेदानां वाचक इति स्वयंप्रक्लृप्तां वाचोयुक्तिं भवान् प्रतिषेधति। कश्चैवमाह जातिशब्दो भेदानां वाचक इति? यदि तर्हि जातिशब्दो न भेदानां वाचकः कथं सच्छब्देन द्रव्यगुणकर्माण्यभिधीयन्ते? नायं भोः सच्छब्दो जाति-शब्दः, अपि तु भेदशब्द एवायम्। भेदशब्देन च भेदा अभिधीयन्त इति न किञ्चिद् बाध्यते। कथं न बाध्यते? यदा सच्छब्द एको भेदानामानन्त्यं तदवस्थमेव। न चैकस्यानेकेन संबन्धः शक्य आख्यातुम्। न चानाख्याते शब्दार्थसंबन्धे शब्दादर्थ-प्रतिपत्तिर्युक्तेति। न, केवलानामनभिधानात्। यो हि सच्छब्देन निर्विशेषणानि द्रव्यगुणकर्माण्यभिधीयन्त इत्यभिधत्ते, तं प्रत्येष दोषः। अस्माकं तु द्रव्यगुणकर्माणि सत्ताविशेषणान्यभिधीयन्ते। यत्र यत्र सत्तां पश्यति तत्र तत्र सच्छब्दं प्रयङ्क्ते। एका च सत्ता। तत्प्रत्ययस्यानुवृत्तेः[३]। तस्माद् भेदानामानन्त्यं न दोषः। कश्चायमेवंभूतः साध्यसाधनभावः, शब्दं पक्षयसि आनन्त्यादिति वस्तुधर्मं हेतुत्वेनाभिधत्स इति।

---

१. द्रव्य॰ om C २. न सच्छब्दो C ३. ॰स्याव्यावृत्तेः C

अथ भेदा एव जातिधर्मवाच्यत्वेन पक्षीक्रियन्ते, तथापि नान्वयी न व्यतिरेकी दृष्टान्तोऽस्तीत्यहेतुरानन्त्यादिति। अथाप्येकदेशान् पक्षीकृत्यानन्त्यादिति हेतुः शेष एकदेशो दृष्टान्त इति। अयमपि न, विरोधात्। एवं च सति न कश्चित् पदार्थो वाच्यः, न कश्चित् शब्दो वाचक इति वाच्यवाचकभावनिवृत्तौ विशेषणमनर्थकम्, एते न वाच्याः, एते न वाचका इति।

यत् पुनरेतद् व्यभिचारादिति। न, व्यभिचारविषयापरिज्ञानात्। व्यभिचारी हि नाम स ज्ञेयो यः स्वविषयतज्जातीयवृत्तित्वे सत्यन्यत्र वर्तते। न पुनरयं सच्छब्दः स्वविषयव्यतिरेकेणासति वर्तते। तस्मादस्थान इयं व्यभिचारचोदनेति। हेतुभावानभ्युपगमाच्च। केन चात्र हेतुरभिधीयते द्रव्यं गुणः कर्म वा सत्त्वादिति। तस्मादयुक्तमेतदपि। भेदवाचकत्वप्रतिषेधात् सद्द्रव्यशब्दयोः सामानाधिकरण्यमिति न वक्तव्यं व्याघातात्। न च कश्चित् शब्दो द्रव्यवाचकः द्रव्यसच्छब्दयोश्च सामानाधिकरण्यमिति व्याहतम्।

यत् पुनरेतत् न तद्वतोऽस्वतन्त्रत्वादिति। न किल सच्छब्देन तद्भेदा घटादयो गम्यन्ते, [१]तद्गतघटादिभेदानाक्षेपात् सामानाधिकरण्याभाव इति? तन्न, उक्तोत्तरत्वात्। उक्तोत्तरमेतत्, सद्द्रव्यशब्दयोरेकविषयत्वात् सामानाधिकरण्यमिति, तद्गतघटादिभेदानाक्षेप इति च न युक्तं सच्छब्देन सत्तासाधनानां द्रव्यगुणकर्मणामाक्षेपात्। सत्ताशब्देन द्रव्यगुणकर्माणि नाक्षिप्यन्ते न पुनः [२]सच्छब्देन शक्यं वक्तुं सत्ताशब्देनापि गुणभूतानि गम्यन्त इति। सदिति चायमभिधानशब्दः[३], कस्तस्याभिधेयः? योऽस्मात्[४] प्रतीयते, स तस्यार्थ इति। कोऽस्यार्थः? स **विभज्यते**। सत्ता तद्योगोऽर्थान्तरमिति त्रयोऽर्थाः। तत् प्रधानोपसर्जनभावस्या**नियमेन**[५] विवक्षायां प्रधानं साधनं गम्यते, अङ्गं सत्ता तद्योगश्च। किंकृतः **प्रधानाङ्गभावः**? अर्थकृतः। [६]यदा सता किञ्चित् कुर्विति, तदा सत्ताविशेषणं पदार्थमुपादाय किञ्चित् करोति, येन

१. तद्वद्भ॰ C २. सत् om C ३. अभिधान॰ om J ४. यस्मात् C ५. अनियमेन om C ६. यदा सत्ता किञ्चित् कुरुते C

करोति[१] तत्प्रधानम्,[२]अङ्गमप्रधानं प्रत्ययहेतुत्वात्। यस्मात् सत्तया पदार्थो विशिष्यते, अङ्गहीने प्रत्ययनिवृत्तेः यत्र तदङ्गं सत्तादिकं नास्ति, तत्र न सदिति प्रत्ययः। तदेवं [३]तद्गतघटादिभेदानाक्षेपादित्ययुक्तम्।

यत् पुनरेतत् सच्छब्दः सत्तायां प्राधान्येन वर्तते, तत्र वर्तमानस्तद्वत्युपचर्यत इति। तन्न, सच्छब्दविषयापरिज्ञानात्। न भवता सच्छब्दस्य विषयो व्यज्ञायि। क एवमाह सच्छब्दः सत्तायां प्राधान्येन वर्तत इति? यथा च सच्छब्दस्य द्रव्यगुणकर्माणि सत्तासाधनभावात् विषय इति तथोक्तम्। एतेन भेदानामानन्त्यं प्रत्युक्तम्। सच्छब्दस्य विषयः [४]सत्तासाधनम्। विषयश्च सत्तासाधनभूत एक एवेति।

यत् पुनरेतत् तद्वति च न गुणसारूप्यात् प्रत्ययसंक्रान्तिः यथा स्वामिशब्दस्य भृत्य इति। अस्यार्थः स्वाम्यर्थकारित्वात् भृत्ये स्वामिशब्द इति। एतत् तु न बुध्यामहे प्रत्ययानां संक्रान्तिरिति। यदि स्वामिप्रत्ययविषयत्वम्, तन्न प्रत्यय-संक्रान्तिः। न हि स्वामिप्रत्ययो भृत्यस्य भवति। केवलं गुरुतां वा प्रियतां वा पश्यन् स्वामिशब्दं गुणभूतं तत्र प्रयुङ्क्ते। यथा च भृत्यः स्वाम्यर्थकारित्वात् [५]स्वामीत्युच्यते, न पुनरेवं सत्ताशब्दः कदाचिदपि द्रव्यादिषु वर्तत इति। यदा तु सतां भावः सत्तेति तदा सतां सत्ताविशेषकत्वात् गुणभूतानां सत्ताशब्देनाभिधानम्, विशेषकत्वमुपचारः[६]। एतेनैव गुणोपरागात् यथा नीलः स्फटिक इति प्रत्युक्तम्।

यत् पुनरेतत् क्रमवृत्त्यभावाद् युगपदसंभवाच्चेति। अस्यार्थः सत्ताशब्दः किल सत्तायां वर्तित्वात् तद्वति वर्तत इति। न चैवं पश्यामः। युगपदपि न संभवति। सत्ताप्रत्ययश्च द्रव्यप्रत्ययश्च न युगपद् भवतः। एतदपि न, उक्तोत्तरत्वात्। उक्तोत्तरमेतत्। नात्र क्रमो न युगपत्प्रत्ययः। सत्प्रत्ययस्य साधनविषयत्वात्। एतेनायथार्थज्ञानोत्पत्तिप्रसङ्गादिति प्रत्युक्तम्। एवं हि कुहेतुप्रताननिरासाद् व्यव-स्थितं[७] व्यक्त्याकृतिजातयः पदार्थ इति।

---

१. येन करोति om C   २. अङ्ग॰ सत्ताप्रधानप्र॰ C   ३. तद्वद्घटा॰ C   ४. सत्ता-साधनम्। विषयश्च om J   ५. भृत्यः स्वामीत्युपचर्यते C   ६. उपकारः J   ७. एवं स्थितं कुहेतुदोषनिरासात् J

न जातिशब्दो भेदानां वाचक इति विशेषणानर्थक्यम्। न हि कश्चित् शब्दो भवता भेदानां वाचकत्वेनाभ्युपगम्यते। विशेषणं हि नाम विशेष्ये सति, सामान्य-प्रतिपत्तौ च। न चास्य किञ्चिद् विशेष्यमस्ति। न च जातिशब्दस्य कश्चित् पदार्थो वाच्योऽभ्युपगम्यते। तस्मात् विशेषणानर्थक्यम्।

विरोधाच्च। यदि चायं जातिशब्दो भेदानां वाचकोऽभविष्यत्, अपि तर्हि जातिशब्द एव नाभविष्यत्। न ह्यन्यपदार्थवाचकानां शब्दानां तच्छब्दत्वं संभवति। कथं च भेदवाचकत्वे सति जातिशब्द इत्युच्यते? यच्चोच्यते न जातिशब्दो भेदानां वाचक इति तथा तत्। को हि स्वस्थात्मा जातिशब्दवाच्यान् भेदानभ्युपैति? यदि च जातिशब्दवाच्या भेदा न भवन्ति, अन्यशब्दवाच्यास्तर्हि भेदाः प्राप्नुवन्ति। अथान्यशब्दवाच्या अपि भेदा न भवन्ति, तेन न जातिशब्दवाच्या नान्यशब्दवाच्या इत्युभयथा अवाच्यत्वे किमस्य विशेषणस्य सामर्थ्यं न जातिशब्दो भेदानां वाचक इति? अत एवं वक्तव्यम्, अवाच्या भेदा अवाचकाः शब्दा इति।

अथ मन्यसे परमतव्यपेक्षयैतदुच्यते, न जातिशब्दो भेदानां वाचक इति। न, अनभ्युपगमात्। न हि नः कश्चित् तान्त्रिकोऽस्ति यो जातिशब्दवाच्यान् भेदान् प्रतिपद्यते। जातेरप्यवाचकत्वे व्याघातो जातिशब्द इति। न हि यो यस्यावाचकः स तच्छब्द इति शक्यं वक्तुम् न जातिशब्दो भेदानां वाचक इति। कस्य तर्हि वाचकः? भेदवाचकत्वप्रतिषेधादन्यवाचकत्वमायातम्। अथान्यवाचकत्वमपि नेष्यते, व्यर्थं विशेषणं जातिशब्दो भेदानां न वाचक इति। सर्व एव च शब्दा अर्थानामवाचका इति युक्तं वक्तुम्।

अथावाचकाः शब्दा अवाच्याः पदार्था इति। अयुक्तं चैतत्, व्याघातात्। अवाचकाः शब्दा भवन्ति। अवाचकत्वं च शब्दानां शब्दैरेव प्रतिपाद्यत इति। अवाचकत्वे च शब्दानां प्रतिज्ञाहेत्वोर्व्याघातात्। न जातिशब्दो भेदानां वाचक इति प्रतिज्ञा, हेतुरानन्त्यादिति। उभयं च वचनात्मकमिति। उभयस्यावाचकत्वाद् व्याघातः। शब्दांश्चावाचकान् प्रतिपद्यमानेन लौकिकप्रतिपादनोपायोऽन्यो वक्तव्यः।

अन्यथाभ्युपगम्यत इति चेत्? अथ मन्यसे, न मया अवाचकाः शब्दा अभ्युपगम्यन्ते, नाप्यर्था अवाच्याः। अपि तु यो भवद्भिर्वाच्यवाचकन्यायोऽभ्युपगम्यते, सोऽस्माभिर्निराक्रियते। अस्माकं तु शब्देनान्यापोहलक्षणा जातिरभिधीयत इति। विशिष्य वक्तव्यं यदि अन्यथा शब्दा अर्थानां वाचका भवन्ति। विशिष्य वक्तव्यम् अस्मत्प्रक्लृप्तजात्यादिव्यतिरेकेण जात्यादिशब्दा जात्यादीनां न वाचका इति।

स्वरूपानभिधानाच्च। न च समानप्रत्ययकारणताव्यतिरेकेण जातेः स्वरूपं निर्देष्टुं शक्यम्। न चानुवृत्तिप्रत्ययः प्रत्याख्यातुं [१]शक्यः। न च विशेषप्रत्ययेनाकस्मात् शक्यं भवितुम्, यतोऽयं प्रत्ययः सा जातिरिति [२]नाम्नि विवाद एवं तावद् यथाश्रुति वाक्ये दोषः। अथ जातिशब्दावाच्यत्वेन भेदा [३]एव पक्षीक्रियन्ते? एतस्मिन्नपि प्रतिज्ञार्थे यावन्त एते वाक्यदोषास्ते सर्वे प्रसज्यन्त इति। एवमेकदेशपक्षीकरणेऽपि विशेषणविशेष्यभावानुपपत्तेः पूर्वदोषानुवृत्तिः।

यदपीदमुच्यते सद्द्रव्यशब्दयोः सामानाधिकरण्यमिति, तदपि न, व्याघातात्। द्रव्यसच्छब्दयोश्च सामानाधिकरण्यम्, न च भेदवाचकाः शब्दा इति व्याहतम्। उपचारतो न व्याघात इति चेत्? अथ मन्यसे सद्द्रव्यशब्दाविति उपचारतोऽभिधीयते[४]। कथमिति? द्रव्यशब्देनाद्रव्यव्युदासः, सच्छब्देनासद्व्युदासः। तावेतावसद्द्रव्यव्युदासरूपेण प्रवर्तमानौ एकमर्थं ब्रूत इति समानाधिकरणावित्युच्यते। मुख्यतस्तु न कश्चिद् विधानतः शब्दो वाचक इति। न, मुख्यासंभवात्। मुख्यतः सद्द्रव्यप्रयोगे सति तेन सामान्यादतथाभूते उपचार इति युक्तं वक्तुम्। न त्वेवंवादिनां प्रधानमस्ति। न च प्रधानमन्तरेणोपचारः संभवति। न चान्यापोहपक्षे उपचारो युक्तः, उभयोः प्रधानशब्दत्वात्। यथा सिंहशब्दः सिंहे वर्ततेऽसिंहरूपव्युदासेन, तथा माणवकेऽपीति [५]तुल्यरूपत्वात्। तस्मात् नोपचार इति।

---

१. युक्तः for शक्यः J २. नास्ति for नाम्नि C ३. अपि for एव C ४. शब्दावेतौ ..... धीयेते C ५. तुल्यवृत्तित्वात् C

यत् पुनरेतद् अन्यशब्दार्थापोह[१] शब्दार्थ इति। तदप्ययुक्तं विधानतः शब्दार्थासंभवे सत्याद्याप्रतिपत्तेः[२]। यदि विधानतः शब्दार्थो भवति, ततो विधीयमान-शब्दार्थप्रतिपत्तौ सत्यां तस्यान्यत्र प्रतिषेध इत्युपपन्नः प्रतिषेधः। यस्य पुनर्विधीयमानः पदार्थो नास्ति तस्याद्यां प्रतिपत्तिमन्तरेण कथं प्रतिषेधः? यावच्चेतरत् न प्रतिपद्यते, तावदितरत् न प्रतिषेधतीति। यथा गौरिति पदस्यार्थोऽगौर्न भवति। यावच्चागां न प्रतिपद्यते, न तावद् गवि प्रतिपत्तिर्युक्ता यावच्च गां न प्रतिपद्यते, न तावद-गवीत्युभयप्रतिपत्त्यभावः।

यश्चायमन्यापोहः अगौर्नभवतीति गोशब्दस्यार्थः स किं भावोऽथाभाव इति? यदि भावः, किं गौरगौरिति? यदि गौर्नास्ति विवादः। अथागौः, गोशब्द-स्यागौरर्थः इत्यहो शब्दार्थकौशलम्। अथाभावः, तन्न युक्तम्, प्रैषसंप्रतिप-त्त्योरविषयत्वात्। न हि गोशब्दश्रवणादभावे प्रैषो न वा संप्रतिपत्तिः। शब्दार्थश्च प्रतिपत्रा[३] प्रतीयते। न च गोशब्दादभावं कश्चित् प्रतिपद्यत इति।

अन्यापोहश्च शब्दार्थ इत्ययुक्तम्, अव्यापकत्वात्। यत्र द्वैराश्यं भवति, तत्रेतरप्रतिषेधादितरत् प्रतीयते। यथा गौरिति पदे गौः प्रतीयमानः, अगौ प्रति-षिध्यमानः। न पुनः सर्वपदे एतदस्ति। न ह्यसर्वं नाम किञ्चिदस्ति, यत् सर्वशब्देन निवर्त्येत। एकादिव्युदासाद् व्यापकत्वमिति चेत्? अथ मन्यसे एकाद्यसर्वं तत् सर्वशब्देन निवर्त्यते? तन्न, स्वार्थापवाददोषप्रसङ्गात्। एवं सत्येकादिव्युदासेन प्रवर्तमानः सर्वशब्दोऽङ्गस्य प्रतिषेधादङ्गव्यतिरिक्तस्य चाङ्गिनोऽनभ्युपगमाद् अनर्थकः स्यात्। एवं सर्वे समुदायशब्दा एकदेशप्रतिषेधरूपेण प्रवर्तमानाः समुदायिव्यतिरिक्तसमुदायानभ्युपगमाद् अनर्थकाः प्राप्नुवन्ति। द्व्यादिशब्दानां च समुच्चयविषयत्वादेकादिप्रतिषेधे प्रतिषिध्यमानानामसमुच्चयत्वात् द्व्यादिशब्दानाम-नर्थकत्वम्।

---

१. °शब्दान्तरार्थापोहः J  २. विधानशब्दार्थसंभवे सत्याद्या प्रतिपत्तिः C  ३. प्रति-पत्त्या C

क्रियारूपत्वाच्चापोहस्य विषयो वक्तव्यः। अगौर्न भवतीति अयमपोहः किं गोविषयः, अथागोविषय इति। यदि गोविषयः, कथं गोर्गव्येवाभावः? अथागोविषयः, कथमन्यविषयादपोहादन्यत्र प्रतिपत्तिः? न हि खदिरे छिद्यमाने पलाशे छिदा भवति। अथागोर्गवि प्रतिषेधः, अगौर्गौर्न भवतीति। केन गोरगोत्वं प्रसञ्जितं[१] यत् प्रतिषिध्यते? कथं चागवि गोः प्रतिपत्तिमन्तरेण प्रतिषेधः? न ह्युत्तरपदार्थप्रतिपत्तिमन्तरेण प्रतिषेधं पश्याम इति। उक्तं चात्र आद्या प्रतिपत्तिर्न प्राप्नोतीति। आदिप्रतिपत्तिं चान्तरेण न प्रतिषेध इति।

इतश्च न युक्तोऽपोहोऽर्थः, विकल्पानुपपत्तेः। योऽयमपोहो गवि स किं गोर्व्यतिरिक्त आहोस्विदव्यतिरिक्त इति। यदि व्यतिरिक्तः, किमाश्रितोऽनाश्रितो वेति? यद्याश्रितः, आश्रितत्वाद् गुण इति गोशब्देन गुणोऽभिधीयते न गौरिति, गौस्तिष्ठतीति सामानाधिकरण्यं न प्राप्तम्। अथानाश्रितः, केनार्थेन षष्ठी गोरपोह इति? अथाव्यतिरिक्तः, गौरेवासाविति न किञ्चित् कृतं भवति।

अयं चापोहः प्रतिवस्त्वेकोऽनेको वेति वक्तव्यम्। यद्येकः, अनेकगोसंबन्धी च, गोत्वं तदिति। अथानेकः, ततः पिण्डवदानन्त्यात् आख्यानानुपपत्तेरर्थप्रत्ययोऽपि न युक्तः।

इदं च तावत् प्रष्टव्यो भवान् किमयमपोहो वाच्योऽथावाच्य इति। यदि वाच्यः, अनैकान्तिकः शब्दार्थः अन्यापोहः शब्दस्यार्थ इति। अनवस्था वा। यद्यनपोहव्युदासरूपेणाभिधीयतेऽपोहः, तस्याप्यन्य इत्यनवस्था। अथावाच्यः, अन्यशब्दान्तरार्थापोहं करोतीति व्याहतम्। यदि च शब्दस्यापोहो नाभिधेयोऽर्थः[२], अभिधेयार्थव्यतिरेकेण स्वार्थो वक्तव्यः। अथ स एवास्य स्वार्थः, तथापि व्याहतम्। [३]अन्यशब्दान्तरार्थापोहं स्वार्थे कुर्वती श्रुतिरभिधत्त इत्युच्यत इति। अस्य वाक्यस्यायमर्थः तदानीं भवति, अन्यदनभिदधानोऽभिधत्त[४] इति।

१. प्रसक्तं C २. न om J ३. °न्तरा° om C ४. भवति, अभिदधाना अभिधत्ते J

अनेकमिति चास्य पदस्य द्व्यादिविषयत्वात् सामान्यगतौ विशेष आश्रयितव्यः। न ह्यसति विशेषाश्रयणे सामान्यशब्दाद् विशेषप्रतिपत्तिर्युक्तेति। नीलोत्पलशब्दयोश्च प्रधानत्वात् विशेषणविशेष्यभावानुपपत्तौ विशेषणस्य पूर्वनिपात इत्युभयोः प्रधानत्वात् न प्राप्तः। एतेन राजपुरुषशब्दौ व्याख्यातौ। समानाधिकरणार्थश्च अन्यापोहवादिना वाच्यः। यस्य चान्यापोहः शब्दार्थः, तेनानीलानुत्पलव्युदासौ कथं समानाधिकरणाविति वाच्यम्। यस्य पुनर्विधीयमानः शब्दार्थः तस्य जातिगुणविशिष्टं नीलोत्पलशब्दाभ्यां द्रव्यमुच्यते, जातिगुणौ च द्रव्ये वर्तेते, न पुनरनीलानुत्पलव्युदासौ। तस्मात् समानाधिकरणार्थो नास्तीति। तदेवमयमन्यापोहो यथा यथा विकल्प्यते, तथा तथा प्रमाणवृत्तं बाधत इति॥६६॥

**व्यक्तिर्गुणविशेषाश्रयो मूर्तिः॥२।२।६७॥**

कथं पुनर्ज्ञायते नाना व्यक्त्याकृतिजातय इति। अधिगतत्वात् प्रश्नानुपपत्तिरिति चेत्? अधिगता व्यक्त्याकृतिजातयो याशब्दादिसूत्रैः। अधिगतत्वात् प्रश्नोऽनुपपन्नः। न निमित्तत्रैविध्ये सति तद्विशेषविषयज्ञापनार्थत्वात् प्रश्नस्य। गोशब्द उच्चार्यमाणः प्रधानोपसर्जनभावेन निमित्तत्रयं प्रतिपादयतीति याशब्दादिसूत्राणामर्थः। एवं च सति तद्विशेषविषयज्ञापनार्थं युक्तः प्रश्नः, कतमात्र व्यक्तिः, कतमाकृतिः, कतमा जातिरिति। व्यक्त्याकृतिजातीनां भेदो लक्षणभेदात्। किं पुनर्व्यक्तेर्लक्षणमिति व्यक्तेर्लक्षणप्रतिपादनार्थं

**व्यक्तिर्गुणविशेषाश्रयो मूर्तिः।**

इति सूत्रम्। तत्र व्यज्यत इति व्यक्तिः इन्द्रियग्राह्येति। यद् द्रव्यमुपलब्धिलक्षणप्राप्तं स्पर्शपर्यन्तानां गुणानामाश्रयः, तत् मूर्च्छितावयवत्वात् मूर्तिरिति चोच्यते व्यक्तिरिति च। एतत् तु न बुद्ध्यामहे किमिदमवयविद्रव्यस्य लक्षणम्, आहो पदार्थत्वेन त्रयाणां प्रसक्तानां जात्याकृतिव्यवच्छेदकं व्यक्तिलक्षणमिति।

वयं तु ब्रूमः, नात्रावयवी व्यवच्छेद्योऽपि तु जात्याकृतिपदव्यतिरिक्तस्य व्यक्तिपदस्यार्थो वक्तव्य इति। सा च व्यक्तिर्या नाकृतिर्न जातिः। तस्या अनेन सूत्रेण संग्रहः व्यक्तिर्गुणविशेषाश्रयो मूर्त्तिरिति। गुणविशेषाश्च तदाश्रयश्च। अत्र तच्छब्दलोपाद् गुणविशेषाश्रयशब्देन द्रव्यमुच्यते। कर्मापि गुणविशेषशब्दात् लभ्यते। गुणेभ्यो विशेषो गुणविशेष इति। गुणविशेषग्रहणं किमर्थम्? गुणशब्देन संगृहीताया आकृतेर्निराकरणार्थम्। आकृतिः संयोगविशेषः। सा च गुणग्रहणेन [१]गृह्यते, तन्निराकरणार्थं गुणविशेषग्रहणम्। गुणविशेष इति चात्र द्विरूपो विग्रहः। गुणाश्च ते विशेषाश्चेति च, गुणेभ्यश्च विशेषा इति च। आश्रयसमानाधिकरणो मूर्तिशब्दो द्रव्ये, मूर्च्छत इति मूर्तिशब्देन द्रव्यमुच्यते। एवं च प्रतिपदं व्यक्तिलक्षणं सिध्यति। एवं च रूपाद्याकाशाद्यवरोधः। यदि प्रतिपदमेतत् व्यक्तिलक्षणं भवति, ततो रूपादयश्चाकाशादयश्च व्याप्यते। अन्यथा तु लक्षणमव्यापकं स्यात्। अथ वा गुणविशेषाणामाश्रय इति गुणाश्च विशेषाश्च गुणविशेषाः, तेषामाश्रयो द्रव्यम्। तत्र मूर्च्छत रूपादयोऽपि मूर्तिः॥६७॥

## आकृतिर्जातिलिङ्गाख्या॥२।२।६८॥

जातिर्जातिलिङ्गानि च प्रख्यायन्ते यया तामाकृतिं विद्यात्। सा च नान्या सत्त्वावयवानां तदवयवानां च नियताद् व्यूहात् नियतावयवव्यूहाः खल्ववयवा जातिमनुमापयन्ति। शिरःपाण्यादिमदाकारसामान्येन गोत्वं व्यज्यते। शिरःपाण्यादीनां चावयवानामवयवविशेषदर्शनेन। कदाचित् पुनरियमाकृतिः पदार्थत्वं जहाति। क्व पुनर्जहाति? यत्राकृतिव्यङ्ग्या जातिर्न भवति। यथा मृत्सुवर्णं रजतमिति आकृतौ नियमो न जातौ। सर्वाकृतिर्जातिलिङ्गमिति[२] न पुनः सर्वा जातिराकृत्या लिङ्ग्यते॥६८॥

---

१. संगृहीतेति C   २. जातिं लिङ्गयति J

**समानप्रसवात्मिका जातिः ॥२।२।६९॥**

यया भिन्नान्यनेकानि वस्तूनि इतरेतरतोऽनुवृत्तिव्यावृत्तिप्रत्ययहेतुभावेन व्यवतिष्ठन्ते सा जातिः। यथेमानि [१]कुण्डानीत्यनुवर्तन्ते, नेमानि कुण्डानीति व्यावर्तन्ते, तदेकं सन्निमित्तमनुवृत्तिव्यावृत्तिकारणं यत् तत् सामान्यविशेषः सा जातिरिति समानप्रत्ययोत्पत्तिकारणं जातिरिति जातौ नियमो न समानप्रत्ययोत्पत्तौ, जातिमन्तरेणापि[२] दृष्टत्वात्। जातिमन्तरेणापि समानप्रत्ययो दृष्टः, यथा पाचकादिषु। तस्माद् व्यवस्थितं व्यक्त्याकृतिजातयः पदार्थ इति। गवादिष्वनुवृत्तिप्रत्ययो दृष्टः पिण्डव्यतिरिक्तात् निमित्तात्[३] भवति विशेषवत्त्वात् नीलादिप्रत्ययवदिति। गोतोऽर्थान्तरं गोत्वं भिन्नप्रत्ययविषयत्वाद् रूपस्पर्शप्रत्ययवत्। गोतोऽर्थान्तरं गोत्वं व्यपदेशशब्दविषयत्वात् चैत्राश्ववत्। गोर्गोत्वानुवृत्तिप्रत्ययो भिन्ननिमित्तः विशेषवत्त्वाद् रूपादिप्रत्ययवदिति ॥६९॥

॥शब्दशक्तिपरीक्षाप्रकरणम्॥

संशयस्य प्रमाणानां विचारस्तद्व्यवस्थितिः।
शब्दस्य तत्त्वं प्रामाण्यं पदार्थाश्चेह कीर्तिताः॥

॥इति औद्द्योतकरे न्यायवार्त्तिके द्वितीयाध्यायस्य द्वितीयाह्निकम्॥

॥द्वितीयाध्यायः समाप्तः॥

१. ॰त्यनुवर्तन्ते बुद्धिः नेमानि J २. अन्यथापि J ३. लिङ्गात् for निमित्तात् C

# तृतीयाध्याये प्रथमाह्निकम्

## [ इन्द्रियभेदप्रकरणम् ]

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥३ ।१ ।१ ॥**

आनन्तर्यात् प्रमेयपरीक्षा। यद्विषयोऽहङ्कारः संसारं प्रतनोति यद्विषयं च सम्यग्ज्ञानं संसारनिवृत्तिहेतुर्भवति तदानन्तर्यात् परीक्ष्यते। तच्चात्मादीत्यात्मा विचार्यते। किं पुनरस्य विचार्यम्? किं शरीरेन्द्रियमनोबुद्धिव्यतिरिक्त आहो नेति। न, धर्म्यप्रसिद्धेः। व्यतिरेकाव्यतिरेकावात्मधर्मौ। सति धर्मिणि धर्मौ भवत इति। धर्मी चात्राप्रसिद्धः। न चाप्रसिद्धे धर्मिणि धर्मयोर्विचारो युक्तः। तस्माद् धर्म्येव तावद् प्रतिपाद्यतामिति। न, इच्छादिसूत्रादात्मप्रसिद्धेः। इच्छादिसूत्रे आत्मसद्भावः प्रतिपादितः। प्रतिपादितत्वादनन्तरो धर्मविचारो युक्त इति। अविप्रतिपत्तेश्च। न हि कश्चिद् वादी आत्मसत्त्वे विप्रतिपद्यते, किं तु विशेषे प्रतिपद्यत इति। शरीरमात्रमात्मा, इन्द्रियमात्रमात्मा,[1] बुद्ध्यादय आत्मा, संघात आत्मा, तद्व्यतिरिक्त आत्मेति। इयं च धर्मविशेषे विप्रतिपत्तिरप्रतिपन्नात्मसत्त्वानां न युक्तेति युक्तो धर्मविचारः। असत्त्वप्रतिपादकप्रमाणासंभवाच्च। न चात्मासत्त्वप्रतिपादकं प्रमाणमस्तीत्यतश्च सद्भावे न विप्रतिपद्यत[2] इति। न, नास्त्यजातत्वादित्येके। नास्त्यात्मा अजातत्वात् शशविषाणवदिति। तत्र नास्त्यात्मेति पदे तावद् व्याहते[3]। नास्तिशब्दसमानाधिकरणोऽयमात्मशब्दो नात्मनोऽसत्त्वं प्रतिपादयति। किं कारणम्? आत्मेति [4]वस्त्वभिधीयते। नास्तीति तस्य प्रतिषेधः। यच्च यत्र प्रतिषिध्यते तत् तस्मादन्यत्रास्तीति। यथा नास्तिना समानाधिकरणो घटशब्दो न घटाभावं प्रतिपादयितुं

१. इन्द्रियमात्रमात्मा om C २. सद्भावो न प्रतिपाद्यते J ३. व्याहन्येते C
४. सत्त्वमभि॰ C

शक्नोति। अपि तु देशकालविशेषे प्रतिषेधः नास्ति घट इति। देशविशेषे वा प्रतिषेधो गेहे नास्तीति। कालविशेषे वा प्रतिषेध इदानीं नास्ति, प्राङ् नास्ति, ऊर्ध्वं नास्तीति।

सर्वश्चायं प्रतिषेधो नानभ्युपगतघटसत्त्वस्य युक्तः तथा नास्त्यात्मेति। किमयं देशविशेषे प्रतिषिध्यते, उत कालविशेष इति? यदि तावद् देशविशेषे प्रतिषेधः स आत्मनि न युक्तः अदेशत्वादात्मनः। न च देशविशेषप्रतिषेधादात्मा प्रतिषिद्धो भवति। अथायं भवतामभिप्रायः शरीरमात्मा न भवतीति? कस्य वा शरीरमात्मा, यं प्रति प्रतिषेधः? शरीरे नास्त्यात्मेत्येवं प्रतिषेध इति चेत्? कस्य वा शरीरे आत्मा, यं प्रति प्रतिषेध इति। क्व तर्हि अयमात्मा? न क्वचिदात्मा किमयं नास्त्येव? न नास्ति, विशेषप्रतिषेधात्। केयं वाचोयुक्तिः न शरीरम् न च शरीरे, न चान्यत्र, न च नास्ति? एषैषा वाचोयुक्तिः, यद्, यथाभूतं तत् तथा निर्दिश्यत इति। न चायमात्मा क्वचिदपीति तस्मात् तथैव निर्देशः। न च कालविशेषप्रतिषेधोऽपि युक्तः, आत्मनि त्रैकाल्यस्यानभिव्यक्तेः। न ह्यात्मनि त्रैकाल्यमभिव्यज्यते, नित्यत्वात्। नित्य आत्मेत्युपरिष्टात् पूर्वाभ्यस्तसूत्रे प्रतिपादयिष्यामः। तस्मात् न कालविशेषप्रतिषेधोऽप्यस्तीति।

आत्मप्रतिषेधं च कुर्वाणेनात्मशब्दस्य विषयो वक्तव्यः। न ह्येकं पदं निरर्थकं पश्यामः। अथापि शरीरादिविषयमात्मशब्दं प्रतिपद्येथाः, एवमप्यनिवृत्तो व्याघातः। कथमिति? नास्त्यात्मेत्यस्य वाक्यस्य तदानीमयमर्थो भवति शरीरादयो न सन्तीति। अथ यं भवन्त आत्मानं कल्पयन्ति स नास्तीति? न वयमात्मानं कल्पयामः। कल्पना हि नामातथाभूतस्य तथाभाविभिः सामान्यात् तद्धर्माध्यारोपेण तत्प्रत्ययः[१]। न चात्मानमेवंभूतं प्रतिपद्यामहे। यं भवन्त आत्मानं कल्पयन्तीति ब्रुवाणो भवान् प्रष्टव्यो जायते, कथं वयमात्मानं कल्पयाम इति, किं सत्त्वेनाथासत्त्वेन वा? यदि सत्त्वेन, किमसतः सता साधर्म्यं येन कल्पनाविषय आत्मा, आत्मसामान्यं

१. °प्रत्ययविषयत्वम् C

चानात्मनो ब्रुवता आत्मा अभ्युपगतो भवति। न ह्यसतः सता सामान्यमस्ति।

अथ शरीरादिविषयमहङ्कारमात्मनि कल्पयित्वा विपर्येति[१]? एवं च शरीरादिव्यतिरिक्ताहङ्कारविषयसत्त्वाभ्युपगमादनिवृत्तो व्याघातः। अथ मन्यसे एकपदस्य नावश्यमर्थेन भवितव्यमिति यथा शून्यं तम इति च? तन्न, व्याघातानिवृत्तेः। शून्यशब्दस्य तावदयमर्थः, यस्य रक्षिता द्रव्यस्य न विद्यते, तद् द्रव्यं श्वभ्यो हितत्वात् शून्यमित्युच्यते। तमःशब्दस्यानुपलब्धिलक्षणप्राप्तानि द्रव्यगुणकर्माणि विषयः। यत्र यत्रासन्निधिस्तेजसः, तत्र तत्र द्रव्यादि तमःशब्देनाभिधीयते। तमः शब्दश्चानर्थक इति ब्रुवाणः स्वसिद्धान्तं बाधते, चतूर्णामुपादानरूपत्वात्[२] तमस इति। तस्मात् नानर्थकमेकं पदमिति।

नास्त्यात्मेति चैवं ब्रुवाणः सिद्धान्तं बाधते। कथमिति? रूपं भदन्त नाहम्, वेदना संज्ञा संस्कारो विज्ञानं वा भदन्त नाहमिति। एवमेतद् भिक्षो रूपं न त्वम् वेदना संज्ञा संस्कारो विज्ञानं वा न त्वमसीति। त एते स्कन्धा रूपादयोऽहङ्कारविषयत्वेन प्रतिषिद्धा। विशेषप्रतिषेधश्चायं न सामान्यप्रतिषेधः। आत्मानमनभ्युपगच्छता सामान्यमेव प्रतिषेद्धव्यम्, नाहं नैव त्वमसीति। अथैकशः प्रतिषेधेन समुदायविषयोऽहङ्कार इति? तथापि रूपादिस्कन्धपञ्चकव्यतिरेकेण समुदायो वक्तव्यः, योऽहङ्कारविषयः। तद्व्यतिरिक्तं च समुदायमहङ्कारविषयमभ्युपगच्छता संज्ञा भिद्यते, आत्मा समुदाय इति। अथाव्यतिरिक्तः, एकप्रत्ययो न प्राप्नोत्यहमिति। न हि बहुष्वेकप्रत्ययं पश्याम इति। न च रूपादयः स्कन्धा एकशः समुदिता वा आत्मान इत्यहङ्कारप्रत्ययः अतस्मिंस्तदिति प्राप्तः। भवतु मिथ्याप्रत्ययः किं नो बाध्यत इति? कथं न बाध्यते यदा सम्यक्प्रत्ययानुकारेण मिथ्याप्रत्यया भवन्ति? न चात्मानमनभ्युपगच्छता **ताथागतदर्शन**मर्थवत्तायां शक्यं व्यवस्थापयितुम्—न चेदं वचनं नास्ति **सर्वाभिसमयसूत्रे**ऽभिधानात्। तस्मात् नास्त्यात्मेत्येवं ब्रुवाणः सिद्धान्तं बाधत इति। तथा च

---

१. विपर्यस्यति C　　२. उपादेय॰ C

भारं च वो भिक्षवो देशयिष्यामि भारहारं च। भारश्च पञ्चस्कन्धाः, भारहारश्च पुद्गल इति। यश्चात्मा नास्तीति ब्रवीति स मिथ्यादृष्टिको भवति।

इति सूत्रम्।

योऽप्ययं हेतुरजातत्वादिति, अयमपि राश्यन्तरव्यवच्छेदहेतुत्वाद् विरुद्धः। जातमजातमिति च वस्तुधर्मावेतौ। किं पुनर्जातम्? किं वा अजातमिति? यस्य कारणवतः सत्ता तज्जातम्। यस्याकारणवतः सत्ता तदजातमिति। किं कारणम्? नञो जन्मप्रतिषेधविषयत्वात्। अयं खलु नञ् प्रवर्तमानो जन्मनः प्रतिषेधं करोति, नास्य जन्म विद्यत इति। तदिदमजात इत्यात्मनः प्रतिषेधो न भवति। यथा अनुदकः कमण्डलुरिति। अथायं भावप्रतिषेध एवाजातमिति, तथापि प्रतिज्ञाहेत्वोरेकत्वम्। अजातत्वमिति चायं धर्मः, न च धर्मः स्वतन्त्रो युक्तोऽन्यत्र समवायात्। यत्तन्त्रोऽयं धर्मः स आत्मेति विरुद्धो हेतुः। अथ धर्मोऽस्ति न धर्मीति? तथाप्यनिवृत्तो व्याघातः, स्वतन्त्रस्य धर्मस्यादर्शनादिति। कश्चायमर्थोऽजातत्वादिति? यदि तावदयमर्थो नास्य जन्म विद्यत इति। ततोऽसिद्धो जन्मवानात्मा। किं पुनरात्मनो जन्म? शरीरेन्द्रियबुद्धिवेदनाभिर्निकायविशिष्टाभिरपूर्वाभिरभिसंबन्धः। अथाजातत्वमकारणत्वम्, तथापि न किञ्चिद् बाध्यते। विरुद्धश्च हेतुः। अकारणस्य नित्यत्वादसत्त्वं साधयतो नित्यत्वमापद्यत इति विरुद्धो हेतुः। प्रतिज्ञाहेत्वोश्च विरोधः। प्रतिज्ञाया विषयो नास्त्यात्मेति। हेतोर्विषय आत्यन्तिकसत्तासंबन्धः। तावेतौ प्रतिज्ञाहेतू असतः सद्विषयत्वाद् विरुद्धौ। एतेन निर्हेतुकत्वात् जन्महेत्वनुपादानादकार्यत्वादकारणत्वादित्येवमादयस्तुल्यदोषा इति प्रत्युक्ताः।

यदपीदमुच्यते शशविषाणवदित्ययमप्यसिद्धो दृष्टान्तः, कथमिति? शशविषाणशब्दस्य संबन्धविषयत्वात् संबन्धप्रतिषेधो न विषाणप्रतिषेधः। शशविषाणसंबन्ध उदाहरणं भविष्यतीति सोऽपि न युक्तः, कदाचिद् विषाणेन शशस्य संबन्धोपपत्तेः। लोकविरोध इति चेत्? अथ मन्यसे यदि शशे विषाणमस्ति, ननु लोको विरुध्यत इति। न विरुध्यते कार्यकारणभावप्रतिषेधद्वारेण लोकप्रवृत्तेः।

लोकस्तावत् कार्यं कारणं वा शशस्य विषाणं नास्तीत्येवं प्रतिषेधति। यथा गोर्विषाणस्य च कार्यकारणभावः, नैवं शशस्य विषाणस्य च कार्यकारणभावः, न च कार्यकारणभावप्रतिषेधादसत्त्वम् न हि यद् यस्य न कार्यं न कारणं तत् नास्ति यथा देवदत्तस्य पट इति। इदं च शशविषाणं नास्तीति ब्रुवाणः प्रष्टव्यः किमयं सामान्यप्रतिषेधोऽथ विशेषप्रतिषेध इति। यदि सामान्यप्रतिषेधः, तन्न युक्तमशक्यत्वात्। शशस्य विषाणं नास्तीति गवादिविषाणान्यपि शशस्य न सन्तीति प्राप्तम्। एतच्चाशक्यम्। न हि तानि न सन्तीति। अथ विशेषप्रतिषेधः, किंचिद्विषाणं शशस्य प्रतिषिध्यते, यस्य शशो न कार्यम्; यच्च शशस्य न कारणमिति। सोऽयं कार्यकारणसंबन्ध एव प्रतिषिध्यते। कार्यकारणसंबन्धस्त्वन्यत्र दृष्ट इह प्रतिषिध्यत इति नात्यन्तासत्त्वप्रतिपादने दृष्टान्तो भवति। एतेन खपुष्पाद्यसत्त्वं व्याख्यातं वेदितव्यम्।

नास्त्यात्मा अनुपलब्धेरिति चेत्? अत्रापि प्रतिज्ञादोषः, दृष्टान्तदोषश्च पूर्ववत्। यदप्यनुपलब्धेरिति तदप्ययुक्तम्। साप्यनुपलब्धिरसिद्धा प्रत्यक्षादिप्रमाणविषयत्वादात्मनः। प्रत्यक्षेण तावदात्मा उपलभ्यते। कथं प्रत्यक्षेण? लिङ्गलिङ्गिसंबन्धस्मृत्यनपेक्षं विषयस्वभावभेदानुविधाय्यहमिति विज्ञानं रूपादिविज्ञानवत् प्रत्यक्षम्। यच्चापि भवान् मुक्तसंशयं प्रत्यक्षं प्रतिपद्यते, तस्य कुतः प्रत्यक्षत्वमित्यवश्यं भवता ज्ञानमेव लिङ्गादिसंबन्धनिरपेक्षं स्वात्मसंवेद्यं प्रतिपत्तव्यम्। अथ मन्यसे अस्त्ययमहंप्रत्ययो न पुनरस्यात्मा विषयः, हन्त तर्हि निर्दिश्यतां विषयः। रूपादिर्विषय इति चेत्? अथ मन्यसे रूपादय एवाहङ्कारस्य विषयः। तथा चोक्तम्, अहङ्कारालम्बनोत्पत्तिनिमित्त्वादात्मेत्युच्यत इति। तन्न प्रतिषेधादसत्त्वाच्च। प्रतिषिद्धोऽहङ्कारो रूपादिषु

रूपं नाहम्। एवमेतद् भिक्षो रूपं न त्वमसि।

तस्माद् रूपादय एव तावदहङ्कारस्य विषया न भवन्ति। न चायमहङ्कारो रूपादिषु कदाचिदपि दृष्टः। न हि कदाचिदपि भवति अंह रूपम् अहं वेदनादय इति।

ननु भवत्यहं गौर अहं कृष्ण इति? न भवतीति ब्रूमः। कथम्? न ह्येतस्य द्रष्टुर्यदेतन्मम रूपं गौरमेतदहमिति प्रत्ययो भवति। केवलं मतुब्लोपं कृत्वा अहं गौर इति षष्ठ्यर्थं निर्दिशति। एवमेतत् न तत्त्वत इति। कुत इति चेत्[१]? अथ मन्यसे मतुब्लोपादयं षष्ठ्यर्थव्यपदेशो न तत्त्वत इति, अत्र को हेतुरिति? ममप्रत्ययसमानाधिकरणस्य निर्देशाद् यस्मिन्नर्थे ममप्रत्ययोऽस्य भवति, तत्रैवायमहङ्कारोऽपीति। ममप्रत्ययसामानाधिकरण्याद् गम्यते मतुब्लोप इति। ममप्रत्ययसमानाधिकरणश्चायमहङ्कारोऽन्यत्वे दृष्ट उपकारकत्वात्। उपकारके वस्तुनि ममप्रत्ययसमानाधिकरणोऽहंप्रत्ययो दृष्टः योऽयं सोऽहमिति। उक्तं चात्र

रूपादिस्कन्धेष्वहङ्कारोऽतस्मिंस्तदिति प्रत्यय

इति! तदेवमहङ्कारविषयत्वादात्मा तावत् प्रत्यक्षः। अनुमानेनापि यथा आत्मा उपलभ्यते, तथोक्तमिच्छादिसूत्र इति। आगमोऽप्यस्त्येव। तान्येवं त्रीनि प्रमाणान्येकविषयतया प्रतिसन्धीयमानानि आत्मानं प्रतिपादयन्ति। न च प्रमाणान्तरं विप्रतिपत्तिहेतुरस्तीति। तस्मात् अनुपलब्धेरित्यसिद्धो हेतुः।

सन्दिग्धश्चानुपलब्धेस्त्रिकारणत्वात्। अनुपलब्धिकारणानि त्रीणि, उपलब्धा उपलम्भनम् उपलभ्यमिति तत्रेयमनुपलब्धिर्भवन्ती कस्याभावाद् भवतीति संदिह्यते? यदि ब्रूषे उपलभ्यस्याभावादिति? नन्वयं प्रतिज्ञार्थ एव, न च प्रतिज्ञा प्रतिज्ञार्थं साधयतीत्यनुपलब्धिरहेतुः। या चेयमनुपलब्धिरात्मासत्त्वप्रतिपादनायोपादीयते, तस्याः क आश्रयः? यद्यात्मानं प्रतिपद्यसे, व्याहतं भवति, आश्रयश्च नास्ति चेति। अथानाश्रया, कः साधनार्थः? न हि अनाश्रयो धर्मः साध्यं साधयितुं शक्नोति। अथानुपलब्धिरपि नास्ति, कः साधनार्थोऽनुपलब्धेरिति? न ह्यसत्साधनं भवितुमर्हतीति। अथ कल्पितस्यानुपलब्धिर्धर्म इति? कथं कल्पितस्येति वाच्यम्, किं सत्त्वेन अथासत्त्वेन? यदि सत्त्वेन, नानुपलब्धिस्तस्य धर्मः। न हि स्थाणोः पुरुषतया कल्पितस्य स्थाणुधर्माः प्रत्यवभासन्ते। अथासत्त्वेन कल्पितस्यानुपलब्धिर्धर्मः,

---

१. न तत्त्वत इति चेत् J

सिध्यत्यनुपलब्धिर्धर्मो व्यर्था तु कल्पना। किं कारणम्? कल्पनाया अतथाभावात्। कल्पना हि नामातथाभावः। असत्त्वेन चात्मा कल्पित इति असत्त्वेनात्मा नास्ति। असत्त्वेन चेत् नास्ति, व्यर्था कल्पना। किमर्थं चायमात्मा असत्त्वेन कल्प्यते? यदि हेत्वर्थम्, उपपन्नो हेतुर्यदर्थमुपात्तः स पुनरर्थो न सिध्यति[१]। न हि यः पुरुषे स्थाणुधर्मानध्यारोप्य हेतुत्वेन व्यपदिशति[२] तस्यासौ स्थाणुः स्यादिति। तदेवमप्यनुपलब्धिरहेतुः।

रूपादिस्कन्धवाचकशब्दविषयव्यतिरिक्तविषय आत्मशब्दः रूपादिशब्देभ्योऽन्यत्वे सति एकपदत्वाद्, घटशब्दवदिति। एतेनाहंप्रत्ययो व्याख्यातः। असिद्धो दृष्टान्त इति चेत्? अत्रोक्तम्, यथा गुणव्यतिरिक्तो गुणीति। तमःशब्दादिभिरनैकान्तिक इति चेत्? अथ मन्यसे यथा रूपादिशब्देभ्योऽन्यत्वे सति एकपदत्वे च तमःशब्दस्यार्थान्तराविषयत्वम्, एवमात्मशब्दस्यापीति। तन्न, विरोधात् तमःशब्दो निर्विषय इति ब्रुवाणः सिद्धान्तं बाधते, उपादायरूपत्वात् तमसः। न चैतदस्माभिरभ्युपगम्यते तमःशब्दो निर्विषय इति। तमःशब्दस्य सविषयत्वे सूत्रव्याघातः

द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद् भाभावस्तमः[३]।

इति। न, सूत्रार्थापरिज्ञानात्। निराकृततेजःसंबन्धीनि द्रव्यगुणकर्माणि तमःशब्देनाभिधीयन्ते। तस्मात् न सूत्रव्याघातः।

**अपरे** तु जीवच्छरीरं निरात्मकत्वेन पक्षयित्वा सत्त्वादित्येवमादिकं हेतुं ब्रुवते। तन्न, विकल्पानुपपत्तेः। निरात्मकमिति कोऽर्थः? यदि तावदात्मनोऽनुपकारकमिति, न दृष्टान्तोऽस्ति। न हि किञ्चिदात्मनोऽनुपकारकमस्ति। अथात्मप्रतिषेधः, निरात्मकं शरीरम्[४], आत्मा शरीरं न भवतीति। कस्य वात्मा शरीरम्? उत्तरपदविषयत्वाच्च निसः किं सात्मकमिति वाच्यम्। न ह्यसत्युत्तरपदे निसः प्रयोगं पश्यामः। यथा निर्मशकमिति। अथ शरीरे आत्मा प्रतिषिध्यते, सिद्धं साधयति। कस्य वा शरीर आत्मा विद्यते? अथ शरीरमात्मसंबन्धि न भवति,

१. न हि सिद्धः J २. अपदिशेत C ३. द्र:वै.सू. (च) ५.२.२१ ४. निरात्मकं शरीरम् om C

पुनर्दृष्टान्तो नास्ति। सर्वे चैते विशेषप्रतिषेधाः। विशेषप्रतिषेधाच्च सामान्यमवगम्यते। एवं च सति यत्प्रतिषेद्धव्यं तदभ्यनुज्ञातं भवति। अथात्मशब्दोऽनित्यविषयः, वर्णात्मकत्वात्, तथापि नित्यशब्देनानैकान्तिकम्। शरीरादीनां चात्मशब्दवाच्यत्वात् सिद्धसाधनम्। अथ शरीरादिव्यतिरिक्तविषय आत्मशब्दोऽनित्यविषयः, तथापि [१]रूपादिव्यतिरिक्तविषयाभ्युपगमाद् विरोधः। तदेवं यथा यथात्मासत्त्वे प्रतिज्ञा क्रियते[२], तथा तथा न्यायं न सहत इति।

परार्थाश्चक्षुरादयः संघातत्वात् शयनासनादिवदिति। संघाताः संघातान्तरार्था इति चेत्? अथ मन्यसे, सत्यं संघाताः परार्था भवन्ति ते तु संघातान्तरार्थाः। यथा शयनादय इति। न, संघातस्याभ्युपगमे विरोधात्। न हि रूपादिस्कन्धव्यतिरिक्तं संघातं भवन्तः प्रतिपद्यन्ते। न चासति संघातान्तरे संघातानां संघातान्तरार्थता सिध्यति[३]। अथ प्रतिपद्यते, व्याहतं भवति। अनिष्टप्रसङ्ग[४] इति चेत्? अथ मन्यसे मया संघातान्तरं प्रतिपद्यते, अपि त्वस्मिन् हेतौ सति इदमनिष्टं प्राप्नोतीति[५] परार्थस्य संघातान्तराविनाभावित्वात्। यावत् परार्थं भवति, सर्वं तत् संघातान्तरार्थं दृष्टमिति। न, विरोधादनभ्युपगमाच्च। न हि कश्चिद् व्यतिरिक्तात्मवादिनः संघातः संघातस्य परस्यार्थं करोति, तदुभयपक्षे संप्रतिपन्ने[६] नानिष्टापादनं दृष्टमिति। विरोधाच्च। यदि विवक्षितार्थव्यतिरेकेणानुमानस्याविवक्षितमपि विषयः, नन्वेतस्यां प्रकल्पनायां सर्वमनुमानं व्याहन्यते। कथमिति? यदिष्टमनुमानत्वेन तदपि ते नानुमानं प्राप्तम्[७]। यथा शब्दानित्यत्वे कृतकत्वम्। किं कारणम्? यथा कृतकत्वमनित्यत्वेनाविनाभूतमनित्यत्वं साधयति, एवं दुःखशून्यानात्माद्यपि साधयति। अनात्मादिवदश्रावणत्वमपि साधयिष्यति[८]। न श्रोत्रग्राह्यः शब्दः कृतकत्वाद् घटादिवदिति। अथानुमानेन बाध्यतेऽयं प्रतिज्ञार्थ इत्यतो न हेतुः। नन्वयमपि संघातान्तरार्थाश्चक्षुरादय

---

१. शरीरादिव्य॰ C २. ॰सत्त्वं विचार्यते C ३. भवति C ४. ॰ष्टसाधक J ५. भवति C ६. ॰पक्षसिद्धे J ७. प्राप्नोति C ८. ॰शून्यानात्मकत्वमपि साधयति दुःखशून्यानात्मकत्ववदश्रोत्रग्राह्यत्वमपि साधयिष्यति C

इति आगमेनानुमानेन च बाध्यत इति। यच्चापि भवान् संघातान्तरं प्रतिपद्यते, तत्राप्यनिवृत्तं संघातत्वमिति तेनापि संघातान्तरार्थेन[१] भवितव्यमिति। एवं चानवस्था। न चैनां शक्तः कश्चित् प्रतिपादयितुमिति यत एषा निवर्तते तदसंहतम्। अथासंहतं नैवास्ति? असंहतानभ्युपगमे संघातानुपपत्तेर्व्याघातः। न हि कदाचिदसंहतप्रतिषेधे संघातः सिध्यतीति।

अथानुमानं नैवास्तीति **परः** प्रतिपद्येत? स कथं प्रतिपद्यत इति प्रष्टव्यः। यद्यनुमानबाधितत्वादनुमानं नास्ति, अतिन्यायोऽयम्, अनुमानेन च बाध्यतेऽनुमानं च नास्तीति। अतीन्द्रियार्थाधिगतिश्च कथम्? यद्यनुमानं नास्ति कथमतीन्द्रियार्थोऽधिगम्यते? आगमादतीन्द्रियार्थाधिगतिर्भविष्यतीति न युक्तमागमव्यतिरिक्तविषयत्वात्। कस्मात्? अनुमानस्यागमव्यतिरिक्तो विषयः। यथा स्तनयित्नुशब्दस्य हेतौ। न हि तत्र प्रत्यक्षं नागम इति।

तदेवमात्मास्तीति समधिगतम्। तस्मिन् व्यपदेशस्योभयथासिद्धेः संशयः। कः पुनरयं व्यपदेशः? क्रियाकरणयोः कर्त्रा संबन्धाभिधानं व्यपदेशः। दर्शनं क्रिया, करणं चक्षुः। करणस्य च क्रियायाश्च कर्त्रा संबन्धः चक्षुषा पश्यतीति। स चायं व्यपदेशो द्वेधा भवति। अवयवेन समुदायस्य, यथा मूलैर्वृक्षस्तिष्ठतीति। अत्र समुदायशब्देन अवयवी वृक्षोऽभिधीयते। एकदेशेन चैकदेशान्तराणाम्। यद् भिन्नजातीयैरारभ्यते, तत्र ह्येकदेशदर्शनादेकदेशान्तराणि प्रतिपद्यन्ते, तत्रापि व्यपदेशस्तम्भैः प्रासादो ध्रियत इति। अन्येन चान्यस्य व्यपदेशः। परशुना वृश्चतीति। परशुः करणम् व्रश्चनं क्रिया। ताभ्यां कर्तुरभिसंबन्धः परशुना वृश्चतीति। अस्ति चायमिहापि व्यपदेशः चक्षुषा पश्यतीति। तत् किमयमन्येनान्यस्य व्यपदेशः, अथावयवेनावयविनः, अथैकदेशेनैकदेशान्तराणामिति? क्रियाकरणकर्मणां वा कर्त्रा संबन्धो व्यपदेशः। चक्षुषा वृक्षं पश्यतीति क्रियाकरणकर्मणां कर्त्रा संबन्धः। अस्ति चायमिहापि व्यपदेशः शरीरेण सुखदुःखमनुभवति। तत्र न ज्ञायते

१. °न्तरार्थ C

किं तत्त्वमिति। अन्येनायमन्यस्य व्यपदेश इत्येतत् तत्त्वम्। कथम्?

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्।**

दृश्यतेऽनेनेति दर्शनं चक्षुः। स्पृशत्यनेनात्मा स्प्रष्टव्यमर्थमिति स्पर्शनं त्वगिन्द्रियमुच्यते। दर्शनेन दृष्टमर्थं स्पर्शनेन प्रत्यभिजानाति यमहमद्राक्षं तं स्पृशामि यमस्प्राक्षं तं पश्यामीति एकविषयावेतौ प्रत्ययौ प्रतिसन्धीयेते। प्रतिसन्धानं च नाम स्मृत्या सहैकविषयत्वम्। दर्शनस्पर्शनप्रत्यययोर्घटादिविषयत्वादसंबन्ध इति चेत्? अथ मन्यसे यावेतौ दर्शनस्पर्शनप्रत्ययौ तौ घटादिविषयौ, अतो न व्यतिरेकमात्मनो व्यधिकरणत्वाद् गमयत इति। न, सूत्रार्थापरिज्ञानात्। दर्शनस्पर्शनप्रत्ययावेककर्तृकाविति सूत्रार्थः। यदि चानुषक्तं गुणव्यतिरेकमपि एकविषयत्वेन साधयतो न कश्चिद् दोषः। गुणव्यतिरेकोऽसिद्ध इति चेत्? उक्तमत्र यथा गुणव्यतिरिक्तो गुणीति। कार्यकारणभावात् प्रतिसन्धानमिति चेत्? उक्तोत्तरमेतत् इच्छादिसूत्र इति। अकार्यकारणभूतानां च प्रतिसन्धानादनेकान्तः।

भावस्य भवित्रपेक्षत्वाच्चेति सूत्रार्थः। दृष्टिर्दर्शनं स्पृष्टिः स्पर्शनमिति भावरूपावेतौ प्रत्ययौ भवितारं प्रतिपादयतः। न हि भावमनाधारं पश्याम उत्पत्तिवदिति। कर्माधारो भविष्यतीति न युक्तम्, कर्मण्यसति दर्शनात् असत्यपि कर्मणि स्मृतेर्भावो भवति। न तु विनष्टं कर्म भावस्याधारो युक्तः ततो यदाधारो भावः, स आत्मा दर्शनस्पर्शनग्रहणयो रूपस्पर्शविषयत्वात् न घटादिविषयत्वम्? न, रूपस्पर्शानुपलब्धौ तद्विशिष्टप्रत्ययदर्शनात्। यदायमनुलभ्यमानरूपादिकं वस्तूपलभ्यते, तदास्य तद्विशिष्टः प्रत्यय उपजायते। यथा नीलाद्युपहिते[1] स्फटिके प्रत्ययो रूपाद्यनुपलब्धौ भवति। रात्रौ च बलाकायां शुक्लरूपाद्यग्रहणात् पक्षिप्रत्ययः। तस्मात् रूपस्पर्शव्यतिरिक्तनिमित्तो घटप्रत्ययः[2]। प्रतिसन्धानाच्च व्यतिरिक्तनिमित्तत्वम्। न हि नानाविषयौ प्रत्ययौ प्रतिसन्धीयेते। अस्ति च प्रतिसन्धानं यमद्राक्षं तं स्पृशामि, यं चास्प्राक्षं तं पश्यामीति तस्मादकेविषयत्वम्। संघातकर्तृकौ

१. °द्युपरिस्थिते C २. °व्यतिरिक्ते घट° C

दर्शनस्पर्शनप्रत्ययौ भविष्यत इति न युक्तम्, संघातस्य नानात्वाबाधनात्। संघातः संहन्यमानतन्त्रो भवति। संहन्यमानं चानेकम्। अनेकं च प्रतिसन्धानप्रत्ययकारणं न युक्तम्, नानाकर्तृकाणां नानाविषयाणां च प्रत्ययानामप्रतिसन्धानात्। एकेन्द्रियकर्तृकाविति चेत्? अथ मन्यसे यदेवेन्द्रियं दर्शनप्रत्ययस्य कारणं तदेव स्पर्शनप्रत्यस्यापीति? तन्न, अविषयत्वात् चक्षुषः। चक्षुः खलु स्वविषयग्रहणं प्रतिसन्धातुमर्हति, यमद्राक्षं स एवायमर्थ इति। न पुनरिन्द्रियान्तरविषयग्रहणमविषयत्वादिति। इन्द्रियान्तरवैयर्थ्यं वा। अथैकैकमेवेन्द्रियमनेकविषयग्रहणं प्रतिसन्धत्ते, इन्द्रियान्तरोपादानं व्यर्थम्[1] ॥१॥

न विषयव्यवस्थानात् ॥३।१।२॥

चेतनानीन्द्रियाणि विषयव्यवस्थानात्। विषयव्यवस्थानादित्यस्यायमर्थः करणविषयनियमादिति। सति चक्षुषि रूपग्रहणं भवत्यसति न भवति। यच्च यस्मिन् सति भवत्यसति च न भवति, तस्य तत्। सति च चक्षुषि रूपग्रहणं भवति। तस्माद् रूपग्रहणं चक्षुषः। एवं शेषेष्विति।

एवं च सति किमन्येन चेतनेनेति चेत्? न, सन्दिग्धत्वादहेतुः। किमयमिन्द्रियाणां विषयनियमः चेतनत्वात्, आहो चेतनोपकरणत्वादिति सन्दिह्यते। चेतनोपकरणत्वेऽपि सतीन्द्रियाणामेतद् भवितुमर्हति। यथा प्रदीपस्य सद्भावे रूपग्रहणं भवति, असति न भवति। न च रूपग्रहणं प्रदीपस्य। विपर्ययप्रसाधकश्चायं हेतुर्विषयव्यवस्थानादिति ॥२॥

तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥३।१।३॥

विपर्ययसाधकत्वज्ञापनार्थं च।

---

१. ०न्तरोत्पादो व्यर्थः। C

तद्व्य...षेधः। इति सूत्रम्। यस्मादेवैतानि इन्द्रियाणि व्यवस्थितविषयाणि, अत एवान्येनात्राव्यवस्थितविषयेण भवितव्यम्। यदि हि किञ्चिदेकमिन्द्रियमनेकार्थग्राह्यव्यवस्थितविषयं स्यात्, कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात्? चैतन्यं तु आत्मनः स्वातन्त्र्ये सत्यव्यवस्थानात् चक्षुरादिवदिति। नाचेतन आत्मा, अस्वातन्त्र्यप्रसङ्गात् चक्षुरादिवदिति। अन्वयाभावादयुक्तमिति चेत्? अथ मन्यसे आत्मनश्चैतन्यसाधनस्याव्यवस्थानस्य नान्वयोऽस्ति, न चान्वयमन्तरेण हेतुः सिध्यतीति? न, विपर्ययसंबन्धस्याव्यभिचारात् नायमन्वयहेतुः, अपि तु व्यतिरेक-हेतुः। [१]व्यतिरेकहेतोश्च विपर्ययसंबन्धाव्यभिचारः सामर्थ्यम्। यच्चाचेतनं तत् सर्वं व्यवस्थितविषयं दृष्टमिति। पृथिव्यादिनित्यत्वसाधने गन्धवत्त्वादिप्रसङ्ग इति चेत्? अथ मन्यसे यदि व्यतिरेकी हेतुर्भवति अन्वयमन्तरेण, अथ पृथिव्यादिनित्यत्वे साध्ये गन्धवत्त्वं कस्मात् न हेतुः? न हेतुरुभयव्यावृत्तेः। यस्माद् गन्धवत्त्वं नित्याच्चानित्याच्च व्यावर्तते, न पुनरव्यवस्थानमेवम्, तस्मादव्यवस्थानं हेतुर्न गन्धवत्त्वमिति ॥३ ॥

॥इन्द्रियभेदप्रकरणम्॥

## [शरीरव्यतिरेक्यात्मप्रकरणम्]

शरीरदाहे पातकाभावात् ॥३ ।१ ।४ ॥

इतश्च शरीरादिव्यतिरिक्त आत्मा, न शरीरादिसंघातमात्रम्,

शरीरदाहे पातकाभावात्।

शरीरग्रहणेन शरीरेन्द्रियबुद्धिवेदनासंघातः प्राणिभूतो गृह्यते। शरीरं प्राणिभूतं दहतः प्राणिहिंसाकृतं पापं पातकमित्युच्यते। तस्याभावोऽकर्तुः फलेन संबन्धः

---

१. तत्र च व्यतिरेकसम्बन्धा॰ C

कर्तुश्चासंबन्ध इति। कस्मात्? अनभ्युपगतार्थान्तरात्मनोऽन्यः शरीरेन्द्रियबुद्धिवेदनासंघातः कर्ता, अन्यश्च तत्फलस्य भोक्तेति। तदेवमकृताभ्यागमकृतनाशदोषप्रसङ्गः। अनिष्टश्चायम्। तस्माद् यः कर्ता भोक्ता च य स आत्मेति।

तदिदं सूत्रं यस्यात्मा नास्ति तस्यायं दोष इति दोषप्रतिपादनार्थं न साधनार्थमिति हेतुफलभावात् स्मृतिवत् कर्तृभोक्तृव्यवहार इति चेत्। यथा हेतुफलभावेन व्यवस्थितायां सन्ततौ यस्यामेव भावनोपजायते, तस्यामेव सन्ततौ स्मृतिर्भवति। एवं यत्कायचित्तसन्तानप्रभवं कर्म तत्कायचित्तसन्तानप्रभवं फलमिति नास्त्यकृताभ्यागमकृतनाशदोषः[1]। स च कथं स्यात्? यद्यन्यस्यां सन्ततौ कृतं कर्मान्यस्यां फलं दद्यात्, यदि च भवानेनमर्थं प्रतिपादयितुं शक्नुयात् य एव करोति स एव फलं भुङ्क्त इति। उभयं च नास्ति। तस्मात् अकृताभ्यागमादिर्न दोषः। न, उक्तोत्तरत्वात्। न सन्तानो नानात्वं बाधत इत्युक्तोत्तरमेतत्।

यत् पुनरेतत् एकस्मिन्नदर्शनादिति। अत्राप्युक्तम्, एकनिमित्तानां प्रत्ययानां प्रतिसन्धानादिति। शाल्यादिबीजवदिति चेत्? अथ मन्यसे, यथा शालिबीजादङ्कुर उपजायते, [2]अङ्कुरोपमर्दोत्तरकालं नालकाण्डादिभावेन महाभूतानुग्रहवशात् शालिबीजं प्रादुर्भवति। न च तत्रैकं किञ्चिदनुबद्धं निमित्तमस्ति। अथ च नियमः शालिबीजपूर्वकादङ्कुरात् शालिबीजम्, एवं च सति हेतुफलभावेन व्यवस्थितायां सन्ततावान्तरे चेतसि परिणामविशेषप्राप्तात् कर्मणः फलमिति तन्न, बीजावयवानुवृत्तेः शालिबीजवदित्ययमसिद्धो दृष्टान्तः। तत्रापि हि ये बीजावयवास्ते पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यन्ते। व्यूहान्तरापत्तौ च पृथिवीधातुरब्धातुना संगृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्तयति। स रसः पूर्वावयवसहितोऽङ्कुरादिभावमापद्यते। तस्माद् बीजावयवानुवृत्तेरसिद्धमिदमुच्यते यथा शालिबीजाद् विनष्टादङ्कुर उत्पद्यते। अथ च प्रतिसन्धानमिति।

---

१. ०नाशप्रसङ्गः C २. शालिबीजाव० C

परमाण्ववस्थत्वाद् बीजावयवानां यथोक्तदोषापत्तिरिति चेत्? अथ मन्यसे यस्यापि बीजावयवा पूर्वव्यूहं जहति व्यूहान्तरं वापद्यन्ते, तस्यापि परमाण्ववस्थत्वाद् बीजस्य परमाणुमात्रं शिष्यत इति। न च परमाणुष्वपरजातयो विद्यन्त इति[१]। न हि शालिबीजपरमाणूनां यवबीजपरमाणूनां च कश्चिद् विशेषः। यथानुपजातविशेषाः परमाणवः कार्यकारणभावनियमात् तत्पूर्वकतया शाल्यङ्कुरमभिनिर्वर्तयन्ति, तथा ममापि कार्यकारणभावात् नियम इति। न, अनभ्युपगमात्। परमाण्ववस्थानि बीजानि भवन्तीत्येतत् न प्रतिपद्यामहे सर्वावस्थोपलब्धेः। यस्मात् [२]शालिबीजमुच्छूनावस्थामादिं कृत्वा यावदुपान्त्यं शालिबीजकार्यं तावत् न कदाचित् परमाण्ववस्थं भवति। यदि च स्यात् कदाचित् नोपलभ्येत। यदि तर्हि आपरमाणोर्विभागो नास्ति कल्पादावुत्पत्तिर्न प्राप्नोति, परमाण्ववस्थत्वात् जगतः। परमाण्ववस्थे च जगति न शाल्यादिजातिव्यक्तिरस्तीति। पुनरुत्पादे जातिव्यक्तिहेतवः परमाणव एवेत्यभ्युपगन्तव्यम्, यथा च कल्पादावेवं परमाण्ववस्थे बीजेऽपि इति। न, अनेनैवोक्तोत्तरत्वात्। अनेनैव सर्वावस्थोपलब्धेरित्युक्तोत्तरमेतत्। सर्गादौ च शालिजातिव्यक्तिहेतुरदृष्टविशेषः, येनादृष्टेन प्राणिनामुपभोगाय शाल्यादयो निर्वर्त्यन्ते, तमदृष्टविशेषमपेक्षमाण ईश्वरस्तांस्तान् परमाणून् तथा तथा संघातयति, यथा यथा शाल्यादिजातिव्यक्तिरिति। एतेन घटादिपाको व्याख्यातः।

नापरमाण्वन्तो विभागः सर्वावस्थोपलब्धेरिति। आ मध्यात् पाकानुपपत्तिरिति चेत्? अथ मन्यसे यदि कार्यकारणद्रव्ये पच्येते, आ मध्यात् पाको न प्राप्नोति पाचकेन तेजसा अप्राप्तत्वात्। नाप्रतिबन्धात्। भवेदप्येष दोषो यदि तेजसोऽनुप्रवेशमवयवी प्रतिबध्नीयात्। स तु न प्रतिबध्नाति। अप्रतिबद्धं तेजोऽनुप्रविशतीति। न प्रतिबध्नातीति न हेतुरस्तीति? न नास्ति परिस्रवादिमतो घटस्योपलब्धेः। यस्मात् परिस्रवादिमतो घटस्य द्रवत्वप्रतिबन्धो न दृष्टः, अप्रतिबन्धेन द्रवत्वं परिस्नुतिं करोति। तच्च प्रत्यक्षत उपलभ्यते। यदि चायमवयवानुप्रवेशो

१. °परजातिभेदो विद्यते C २. शाल्यादिबीज° C

द्रव्यस्य विनाशकः स्यात्, न परिस्रवादिमान् घट उपलभ्येत। परिस्रवणाच्च भाजनगतानामपामवस्थानमेव न स्यात्। विनाशे च कार्यद्रव्याणां व्यवहिताव्यवहितयोस्तुल्योपलब्धिप्रसङ्गः। यदि चानुप्रविश्य द्रव्यं द्रव्यान्तरं व्यतिभिनत्ति, तेन चाक्षुषस्य रश्मेरनुप्रवेशात् स्फटिकादि विनष्टमिति व्यवहिते चाव्यवहिते च तुल्योपलब्धिः प्राप्नोति। तस्मात् शालिबीजमदृष्टान्तः।

यस्य च पूर्वस्कन्धनिरोधसमकालानि स्कन्धान्तराणि प्रादुर्भवन्ति, तस्य तेषां स्कन्धान्तराणामकर्मनिमित्तः सर्गः प्राप्नोति। अकर्मनिमित्तेन सत्त्वसर्गेण शुभाशुभफलप्राप्त्यर्था क्रिया न प्राप्नोति। सुखी स्यामिति तत्क्रियेति चेत्? अथ मन्यसे स्वयं कर्माणि करोति कथमहं सुखी स्याम्, दुःखी न स्यामिति? तन्न, अननुभूतत्वात्। येन सुखमनुभूतं सुखसाधनसंबन्धानुस्मृतिश्च यस्य स तत्साधनमुपादत्ते। यस्य पुनः प्रतिक्षणप्रध्वंसिनः संस्काराः, तस्य सुखसाधनसंबन्धानुस्मृतेरभावात् सुखी स्यामिति क्रियानुपपत्तिः। मुक्त्यर्थश्च प्रयासो नोपपद्यते, अयत्नसिद्धत्वात्। जातमात्र एवायं मुच्यत इति मुक्त्यर्थो ब्रह्मचर्यवासो व्यर्थः। परिपृच्छा च न प्राप्नोति। **तथागतेन** भिक्षवः परिपृच्छ्यन्ते कच्चिद् यूयं मया विनीता इति? ते चाहुरङ्ग विनीताः स्मेति। अतीतानागतवर्तमानानामनुपकार्यत्वात् ये तावदनागताः संस्काराः, ते तावदसत्त्वात् नोपक्रियन्ते, येऽप्यतीतास्तेऽप्येवम्। ये तु वर्तमानास्तेषु संस्काराधानमशक्यम्, वर्तमानलक्षणस्यानुपकार्यत्वात्। न हि तस्यावस्थानकालोऽस्ति यस्मिन्नुपक्रिया स्यात्। संस्कार्यसंस्कारकयोः सहोत्पादात् [१]युक्तमिदमिति चेत्? न, संस्कार्यसंस्कारकयोः सहोत्पादे नियमानुपपत्तेरिति। इदं संस्कारकमिदं संस्कार्यमिति नियमो नोपपद्यते। अथ संस्कारकमपेक्षमाणं संस्कार्यं विलक्षणं कार्यं करोति, विलक्षणकार्योत्पादश्च संस्कार इत्युच्यते? न, संस्कार्यार्थानभिधानात्। इदं संस्कारकमिदं संस्कार्यमित्येतत् कथम्? न हि यो यस्य विशेषं नाधत्ते स तत्संस्कारक इति वा संस्कार्य इति वा[२] शक्यं व्यपदेष्टुम्।

१. युक्तमिदम्...संस्कारकयो om J	२. तत्संस्कारकः, तत्संस्कार्यमिति च शक्यम् C

अथाप्युपदेशेन संस्काराणामनागतानामनुत्पत्ति: क्रियते? न, अनागतानामनुत्पत्ते: सत्त्वात्। यासावनागतानां संस्कार्याणामनुत्पत्तिर्नासौ कदाचित् नास्तीति किं तस्या: क्रियते? तस्मात् मुक्त्यर्थो ब्रह्मचर्यवास-इत्यनुपपन्नम्। तदेवमनभ्युपगतार्थान्तरात्मनो दोष इति ॥४॥

## तदभाव: सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥३।१।५॥

यस्याप्यात्मा नित्य: तस्यापि हिंसाफले न प्राप्नुत:। हिंसा तावन्न प्राप्नोति नित्यत्वात्। फलमप्यात्मनो न युक्तमनुपकार्यत्वात्। अस्य चार्थस्य ज्ञापिकां कारिकामुदाहरन्ति—

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयो: फलम्।
चर्मोपमश्चेत् सोऽनित्य: खतुल्यश्चेदसत्फल:॥

तदेवमेकस्मिन् पक्षे हिंसा निष्फला, एकस्मिंस्तु पक्षेऽनुपपन्ना, निष्फला चेति। इयं तु हिंसा **सांख्य**पक्षे संभवति, बुद्धे: परिणामित्वात्। कार्यकारणसंघात:[१] परिणामित्वादुच्छिद्यते, स एव च तत्फलानि भुङ्क्ते तत्फलस्य तत्र व्यक्तेरिति। न, पूर्वावस्थापरित्यागात्। यथैवात्मा पूर्वावस्थां न जहातीति तत्र फलं नेष्यते, तथा बुद्धिरपि नित्यत्वात् पूर्वावस्थां न जहातीति तत्र फलं नेष्यते[२]। अथ मन्यसे पूर्वावस्थां जहातीति नित्यत्वं विरुध्यते, पूर्वावस्थापरित्यागेन बुद्धिनित्यत्वं विरुद्धम्। अथाप्यवस्था भिद्यत इति मन्यसे, तथाप्यनिवृत्तो व्याघात:, अवस्थाभ्योऽवस्था-वतोऽनन्यत्वात् न ह्यवस्थाभ्योऽवस्थावानन्य इति। अवस्थाभेदेऽवस्थावान् भिद्यत इति, य एव **बौद्ध**स्य प्रतिक्षणं ध्वंसिषु संस्कारेषु दोष:, स एव प्रतिक्षण-विपरिणामिष्वपीति। ऋजुवक्रतादिवदिति चेत्? अथ मन्यसे ऋजुवक्रतादिभेदे यथाङ्गुलिद्रव्यं न भिद्यते न चाङ्गुलितोऽन्ये ते, तथावस्थाभेदे बुद्धेरभेद इति? न,

---

१. °कारणभाव: C २. तत्र फलं नेष्यते om C

अन्यत्वात्। अन्ये ऋजुवक्रते। युक्तं च यदन्यभेदेऽन्यस्याभेद इति। न पुनरवस्थातोऽवस्थावतोऽन्यत्वम्। तस्मादसमो दृष्टान्तः। कि पुनर्वक्रत्वं ऋजुत्वं वा? गुणः, आकुञ्चनजं वक्रत्वं प्रसारणजम् ऋजुत्वम्। गुणश्च गुणिनोऽर्थान्तरमिति प्रतिपादितमेतत्।

बुद्धेरप्येवमिति चेत्? अथ मन्यसे, बुद्धेरपि ये ते अवस्थे भिद्येते, तयोर्भेदे बुद्धिर्न भिद्यत इति? अन्यावस्थातो बुद्धिः। तन्न, सिद्धान्तविरोधात्। न भवतां पक्षे धर्मधर्मिणोर्भेद इति। भेदं चाभ्युपगच्छता सिद्धान्तस्त्यक्तो भवति। तस्माद् यथात्मनित्यत्वे सुखदुःखानुपभोगो दोष इति, न तत्र सुखदुःखे कल्प्येते तथा बुद्धिनित्यत्वे इति, बुद्धावपि न कल्पनीये समानं नित्यत्वमिति। अथात्मनो नित्यस्य पुण्यपापाभ्यां किं क्रियत इति? सुखदुःखे पुण्यपापाभ्यामात्मनो नित्यस्य क्रियेते। अथ ताभ्यां सुखदुःखाभ्यामात्मनः किं क्रियते? प्रत्ययः[१]। ये आत्मनि सुखदुःखे तद्विषयः प्रत्यय आत्मनि भवतीत्येतावत् क्रियते, स च प्रत्ययो भोगः।

यत् पुनरेतद् वर्षातपाभ्यां किं व्योम्न इति, यदेव चर्मणः। चर्मणो वर्षातपाभ्यां यत् क्रियते तदेव व्योम्नः। अथ चर्मणः किं क्रियते? संबन्धः। यथा चर्म वर्षातपाभ्यां संबध्यते, तथा व्योमापि। वर्षातपसंबन्धात् चर्मवदनित्यं व्योमेति चेत्? अथ मन्यसे, यथा चर्म वर्षातपसंबन्धाद् विक्रियते, तथा व्योम वर्षातपसंबन्धाद् विकरिष्यते। नानेकान्तात्। वर्षातपसंबन्धी परमाणुरथ च नित्य इत्यनेकान्तः। चर्मणश्चानित्यत्वं किं वर्षातपसंबन्धादथ कारणविभागादथाश्रयविनाशादिति? वयं तु ब्रूमः कारणवतस्तद्विभागात् तद्विनाशाच्च युक्तो विनाशः। न पुनराकाशस्य कारणमस्तीत्यत उभयाभाव इति। तद्वतां चावस्थानान्न संबन्धो विनाशहेतुः। यदि चायं संबन्धो विनाशहेतुरभविष्यत् न तद्वतामवस्थानमभविष्यत्। अवतिष्ठन्ते तु भावास्तावत् यावन्न विनाशकारणसन्निपात इति।

१. किं क्रियते सुखदुःखे। ताभ्यां किं क्रियते? प्रत्ययः C

अथ मन्यसे वर्षातपाभ्यां चर्मणः सङ्कोचविकाशौ भवतः। न त्वाकाशस्येति? तन्न, विकल्पानुपपत्तेः। संकोचविकाशौ चर्मण इति कोऽर्थः। किं तावदल्पत्वमहत्त्वे उत संयोगविभागाविति? तत्र तावत् संकोचविकाशावल्पत्वमहत्त्वे, यावद्द्रव्यभावित्वात् परिमाणस्य, यावद्द्रव्यं हि परिमाणम्। तत् सति द्रव्ये न निवर्तितुमर्हति। अथ चर्मणः संयोगविभागौ संकोचविकाशाविति? तदपि न युक्तमेकत्वात्,न ह्येकस्य संयोगविभागौ संभवत इति। कथं तर्हीदमुच्यते चर्मणः संकोचश्चर्मणो विकाश इति? चर्मकारणानामविनश्यत्कार्याणाम्[१] अवयवानामातपसंबन्धापेक्षाणां याः परस्परेण प्राप्तयः आरब्धकार्याणां द्रव्यान्तरानारम्भिकास्ता इतरेतरोपश्लेषेणावयवेषु वर्तमानाः तदेकार्थसमवायिनि चर्मण्युपचर्यन्ते। तदपेक्षं चेदमुच्यते चर्मणः संकोचो न पुनश्चर्म संकुचतीति। एतेन तदवयवानामेवोदकसंबन्धापेक्षाणामविनश्यत्कार्याणां परस्परतो विभागो विकाश इति। विक्रियायां च दृष्टान्ताभावः। तदेव वस्त्वविनश्यद् विक्रियामापद्यत इति न दृष्टान्तोऽस्ति। विक्रिया तु पदार्थान्तरोत्पादः यथा पूर्वरूपादिनिवृत्तौ रूपाद्यन्तरोत्पादे विकृतो घट इति। यद्येवंभूतो विकारः, आत्मन्यपि विकारोऽस्ति[२]। तत्रापि सुखनिवृत्तौ दुःखप्रादुर्भाव इति सुखप्रत्ययनिवृत्तौ दुःखप्रत्यय इति। तस्मात् नित्यस्यात्मनः सुखदुःखोपभोग इति सिद्धम्।।५।।

## न कार्याश्रयकर्तृवधात् ।।३।१।६।।

नित्यत्वादात्मनो हिंसादिदोषोऽपरिहार्यः? न, अन्यथा तदुपपत्तेः। आत्मनित्यत्वेऽप्यन्यथा हिंसा भवति। अस्यार्थस्य ज्ञापनाय

**न...धात्।** इति सूत्रम्। न ब्रूमो नित्यस्य सत्त्वस्य वधो हिंसेति। अपि तु अनुच्छित्तिधर्मकस्य सत्त्वस्य यत् शरीरं यानि च सुखदुःखसंवित्तिसाधनानि

१. अविनश्यत्कार्याणां om J  २. ॰न्यपि चकास्ति C

इन्द्रियान्यसाधारणानि, तेषां पीडा वैकल्यं प्रमापणं वा हिंसेति। कुत एतत् प्रतिपत्तव्यमिति। हिंसाया: फलभोगस्य चोभयपक्षसंप्रतिपन्नत्वात्। हिंसाफलोपभोगश्चोभयपक्षसंप्रतिपन्न:। सेयं हिंसा एकस्मिने[१] पक्षे संभवति, यस्य तावत् प्रतिक्षणविनाशिन: संस्कारास्तस्य किं हिंस्यते निर्हेतुकत्वात् विनाशस्य कस्य व्यापारोऽस्ति। अथ विलक्षणोत्पत्तिनिमित्तत्वेन व्यवतिष्ठमान: परो हिनस्तीत्युच्यते? ननूपचारो भवति, न भवत: प्रधानमस्ति येन शरीरोत्पादक उपचर्यते। न, समानत्वात्। भवतामपि पक्षे न प्रधानं न हिंस्यमिति[२]? सत्यम् ममापि कार्याश्रयकर्तृवधो हिंसेति तुल्यम्। अयं तु विशेष:। एतस्मिन्[३] पक्षे य एवायमात्मा शरीरादिसाधन: कर्म करोति, स एव तत्फलमुपभुङ्क्ते इति अकृताभ्यागमदोषो नास्ति। भवतां त्वकृताभ्यागमकृतप्रणाशश्चेति। परिशेषादात्मनित्यत्वे हिंसेति व्यवस्थितम्।

तत्र कार्याश्रयशब्देन शरीरमुच्यते, तन्निमित्तत्वादुपभोगस्येति। कतृणीन्द्रियाणि तत्साधनत्वात्। अथ वा समानाधिकरणसमासात् शरीरमेव कार्याश्रयकर्तृशब्दाभ्यामुच्यत इति कर्ता भोक्ता चात्मा। किं पुनरिदं कर्तृत्वं किं वा भोक्तृत्वमिति ज्ञानचिकीर्षाप्रयत्नानां समवाय: कर्तृत्वम्। सुखदु:खसंवित्समवायो भोक्तृत्वम्। एतच्च न शरीरे तन्निमित्तत्वात् तु कर्तृ शरीरमुच्यते ॥६॥

॥शरीरव्यतिरेक्यात्मप्रकरणम्॥

## [ चक्षुरद्वैतप्रकरणम् ]

**सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥३।१।७॥**

इतश्च देहव्यतिरिक्त आत्मा

१. एतस्मिन् J २. हिंस्यत इति C ३. ०शो यत एकस्मिन् C

**सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्।**

सव्येन चक्षुषा दृष्टमर्थमितरेण प्रत्यभिजानातीति सूत्रार्थः। तच्च प्रत्यभिज्ञानं स्मृतिपूर्वकत्वात् प्रतिसन्धानम्[१]। प्रतिसन्धानाच्चैककर्तृकत्वं प्रत्ययानां सिध्यतीति।

सिद्धत्वादनारम्भ इति।

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्**

इत्येतस्मिन् प्रकरणे सिद्ध आत्मव्यतिरेकः। सिद्धत्वादनारभ्यं प्रकरणमिति। इन्द्रियव्यतिरेकज्ञापनार्थमित्**येके**। एके इदं प्रकरणमिन्द्रियव्यतिरेकज्ञापनार्थं वर्णयन्ति। तन्न, तत एव सिद्धेः पूर्वप्रकरणेनैवेन्द्रियशरीरव्यतिरेकः सिद्ध इति। समुच्चयार्थमित्**यपरे**। अपरे तु समुच्चयार्थं सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति हेतुं ब्रुवते। युक्तोऽन्यः[२] समुच्चयः अयं तु न युक्तो विरोधात्। सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति हेतुं ब्रुवाणो युक्तिं बाधते। का पुनरियं युक्तिबाधा? अनेकत्वादिन्द्रियस्य युगपदधिष्ठानासंभवः। अणु मनोऽनेकं चक्षुः। न चाणोर्मनसो युगपदनेकेन चक्षुषा संबन्धः संभवति। अथासंबद्धमपि द्वितीयं चक्षुरर्थानालोचयति? एवं च सति द्वितीयचक्षुर्वदितरचक्षुरपि मनसानधिष्ठितमेव प्रवर्तिष्यत इति व्यर्थं मनः प्राप्तम्। अनधिष्ठितं च प्रवर्तमानमिन्द्रियं करणत्वं बाधते। न हि करणमनधिष्ठितं प्रवर्तमानं दृष्टमिति। समग्रासमग्रचक्षुषोश्च तुल्योपलब्धिप्रसङ्गः। न ह्यनधिष्ठितमिन्द्रियं प्रवर्तत इत्यणुत्वात् मनसः नित्यमिदमेकेनैव[३] संबध्यत इति विकलाविकलयोस्तुल्योपलब्धिः प्राप्ता[४] प्रकरणविरोधश्च

इन्द्रियार्थपञ्चत्वात्[५]।

इति इन्द्रियपञ्चत्वप्रतिपादकं प्रकरणं विरुध्यत इति ॥७॥

१. तच्च प्रतिसन्धानं प्रत्यभि....त्वात् प्रत्यभिज्ञानस्य C २. अन्यः om J ३. मनसा नित्यमेकमेव C ४. प्राप्नोति C ५. इन्द्रियपञ्च० C

**नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥३।१।८॥**

यदि तर्ह्येकमिन्द्रियम्, कथं द्वित्वोपलब्धिः? द्वित्वोपलब्धिप्रतिपादनार्थम् **नैक...नात्।** इति सूत्रम्। एकमिन्द्रियद्रव्यं द्व्यधिष्ठानमभिन्नम्। कोऽधिष्ठानार्थः? तैजसस्य चक्षुषः पार्थिवेन कृष्णसारेण उपकारविकारभेदानुविधानम्[१]। यस्मात् कृष्णसारे उपक्रियमाण उपक्रियते, विक्रियमाणे विक्रियते, तिष्ठति तिष्ठति[२], नश्यति नश्यतीति[३], तस्मादस्य कृष्णसारमधिष्ठानमित्युच्यते। एतच्च व्याख्यातं शरीरसूत्रे। तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतो यथा दीर्घस्य द्रव्यस्य मध्ये व्यवहितस्यान्तावुपलभ्यमानौ द्वित्वाभिमानं प्रयोजयत इति॥८॥

**एकविनाशे द्वितीयाविनाशान्नैकत्वम्॥३।१।९॥**

एकस्मिन् विनष्टे उद्धृते वा द्वितीयमवतिष्ठते विषयग्रहणलिङ्गम्। न, अन्यथा तदुपपत्तेः। द्वितीयमवतिष्ठत इति नैतत् कस्यचित् प्रत्यक्षम्। प्रत्ययमात्रं तु विनष्टेऽप्येकस्मिन्नधिष्ठाने यदवतिष्ठते तेन भवति। न चाधिष्ठानमिन्द्रियम् अपि तु यत् तदनुविधायि तदेकमनुविधत्त इति। यथा बहुवातायनस्य वेश्मन एकपिधाने इतरेण ग्रहणमिति ॥९॥

**अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः॥३।१।१०॥**

**अपरे** त्ववयवविनाशेऽप्यवयव्युपलब्धेरहेतुरिति परिहारं वर्णयन्ति ॥१०॥

१. उपकार°विकार° om J २. तिष्ठति पश्यतीति C ३. नश्यति नश्यतीति om C

**दृष्टान्तविरोधादप्रतिषेधः ॥३।१।११॥**

तस्योत्तरम्

**दृष्टा...षेधः**। इति सूत्रम्। अस्यार्थः। न कारणद्रव्यविनाशे कार्यद्रव्यमवतिष्ठत इति। यदि नावतिष्ठते, कथं कारणद्रव्यविनाशे कार्यमुपलभ्यत इति? क एवमाह उपलभ्यत इति? अपि तु बहुष्ववयविषु यस्य कारणानि विभक्तानि तद्विनष्टम्, यस्य न विभक्तानि तदुपलभ्यत इति शेषं **भाष्ये** ॥११॥

**इन्द्रियान्तरविकारात् ॥३।१।१२॥**

अनुमीयते चायं देहादिव्यतिरिक्तश्चेतनः

**इन्द्रियान्तरविकारात्।**

कस्यचिदम्लस्य फलस्य गृहीतसाहचर्ये रूपे गन्धे वा केनचिदिन्द्रियेण गृह्यमाणे रसनेन्द्रियविकारः। कः पुनर्विकारः? रसानुस्मृतौ रसगर्द्धिप्रवर्तितः, गर्द्धिस्तृष्णा रसतृष्णाप्रवर्तितो दन्तान्तरपरिश्रुताभिरद्भी रसनेन्द्रियस्य संबन्धः संप्लवो विकार इत्युच्यते। सा चेयं स्मृतिरिन्द्रियचैतन्ये न प्राप्नोति। न च प्रतिक्षणविनाशिषु संस्कारेषु अन्यानुभूतस्यान्येनास्मरणादिति। इन्द्रियान्तरविकार इन्द्रियान्तरधर्मः। स कथं व्यधिकरणत्वादात्मव्यतिरेकं प्रतिपादयति? नेन्द्रियान्तरविकार आत्मव्यतिरेकप्रतिपत्तिकारणम्, अपि तु स्मृतिः। न ह्येकमनुभवितारमन्तरेण स्मृतिः प्राप्नोति। स्मृतिश्च भावत्वाद् भवित्रपेक्षा उत्पत्तिवदिति न्यायः। न च स्मृतिमन्तरेण इन्द्रियविकारः संभवतीति प्रत्यक्ष इन्द्रियान्तरविकार उपादीयते। अननुभूतरसस्येन्द्रियान्तरविकाराभावादिति व्यतिरेकहेतुः ॥१२॥

**न स्मृतेः स्मर्तव्यविषयत्वात् ॥३।१।१३॥**

स्मृतिर्नाम धर्मः, तस्याः स्मर्तव्योऽर्थो विषयः। सेयं स्मर्तव्यार्थसन्निधानादुपजायमाना अपरिदृष्टसामर्थ्यं न स्मर्तारं प्रतिपादयिष्यति। न हि स्वकारणसन्निधानात् प्रादुर्भवन्नङ्कुरोऽपरिदृष्टसामर्थ्यं स्तम्भादिकमर्थं प्रतिपादयति॥१३॥

**तदात्मगुणसद्भावादप्रतिषेधः ॥३।१।१४॥**

न स्मर्तव्यमात्रात् स्मृतिरुत्पद्यत इति। यदायमतीतमर्थं स्मरति तदा स्मृतिरनाधारा प्राप्नोति। न चेयमनाधारा युक्ता गुणत्वात्। न हि कश्चिद् गुणोऽनाधारो दृष्ट इति। न चेयमिन्द्रियेषु संभवत्यननुभूतत्वात्। न विषये तस्यासत्त्वात्। न शरीरे शरीरगुणानां प्रत्यक्षाणां स्वात्मपरात्मप्रत्यक्षत्वात्। न चेयमनाधारा गुणत्वादित्युक्तम्। न चेयं नास्ति। न चात्मन्यसति अस्याः सद्भावो युक्त इति। तेभ्योऽन्यस्य तदुत्पत्तौ सामर्थ्यं गम्यते। कथमित्येतदनेनैव प्रत्युक्तम् अस्त्यात्मनः सामर्थ्यं स्मृतेराधारभावः। न चेयमनाधारा कार्यत्वात्। सर्वं कार्यमाधारवत् क्षीरनीरादि दृष्टमिति। एतेन

न तच्चक्षुषि नो रूपे नान्तराले तयोः स्थितम्।
न तदस्ति न तन्नास्ति यत्र तन्निष्ठितं भवेत्॥

इति प्रत्युक्तम्। न तदस्ति न तन्नास्तीति च व्याहतम्। न चानया कारिकया विज्ञानस्याश्रयभावः प्रतिषेद्धुं शक्यः। कि कारणम्? विशेषप्रतिषेधात् न चक्षुषि नो रूप इत्येवमादिर्विशेषप्रतिषेधः। अथानाश्रितमेव विज्ञानम्, व्यर्थं वाक्यम्, न तच्चक्षुषि नो रूप इति। कस्य वा चक्षुषि रूपे वा विज्ञानं वर्तत इति सिद्धम्[1], यं प्रति प्रतिषेधः। अयं च विज्ञानस्याश्रयाश्रयिभावप्रतिषेधो विचार्यमाण आत्मसत्तां

१. इति सिद्धम् om C

प्रतिपादयति। न हि [१]विज्ञानस्यात्माश्रितत्वमन्तरेण वाक्यमेतदर्थवत्तायां व्यवतिष्ठत इति।

अथ वैकस्यानेकविषयोपलब्धिप्रतिसन्धानमनेन सूत्रेण प्रदर्श्यत इत्युक्त-न्यायम्। शेषं **भाष्य** इति[२] ॥१४॥

॥चक्षुरद्वैतप्रकरणम्॥

## [ आत्मनो मनोव्यतिरेकित्वप्रकरणम् ]

**नात्मप्रतिपत्तिहेतूनां मनसि संभवात्॥३।१।१५॥**

य एते भवता आत्मप्रतिपादका[३] हेतव उपदिष्टाः, सर्व एते मनसि संभ-वन्ति। एवं च न मनोव्यतिरिक्त आत्मा सिध्यति॥१५॥

**ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्॥३।१।१६॥**

यथा ज्ञातारमभ्युपगच्छता ज्ञानस्य साधनानि चक्षुरादीनि प्रतिपद्यन्ते, तथा मन्तारं प्रतिपद्यमानेन मतिसाधनमभ्युपेयम्। यच्च तन्मतिसाधनं तन्मन इति संज्ञाभेदमात्रम्। अथायं मन्ता निःसाधनो मतिं करोति? एवमयं ज्ञाता निःसाधनो [४]ज्ञप्तिं करिष्यतीति सर्वेन्द्रियविलोपप्रसङ्गः[५] ॥१६॥

**नियमश्च निरनुमानः॥३।१।१७॥**

योऽयं नियम आश्रीयते मतिरसाधना न पुनर्ज्ञप्तिरिति। नियमोऽयं निरनु-

१. आत्मसत्त्वमन्त॰ C २. C adds अपरिसंख्यानाच्च स्मृतित्रिषयस्य। ३. आत्म-व्यतिरेक॰ प्रति॰ J ४. ज्ञानं C ५. विलोपः J

मानः, ज्ञप्तिवन्मतेर्न निःसाधनत्वेऽनुमानमस्ति, अस्ति तु ससाधनत्वे[१]। सुखादयश्च रूपादिभ्यो विषयान्तरमिति तद्विषयाया[२] उपलब्धेः साधनेन भवितव्यम्। न हि किञ्चित् सविषयं विज्ञानमसाधनं दृष्टं रूपादिविज्ञानवदिति। निरनुमानः नियमश्च सुखादिविज्ञानानि निःसाधनानि भवन्तु मा भूवन् रूपादिविषयाणीति। यदि सर्वं विज्ञानं ससाधनमुत्पद्यते[३] मनस्यपि करणान्तरं प्राप्नोति विषयत्वात्, ओमित्युच्यते। अस्ति मनसि करणम्। किं पुनस्तत् येन मनोऽधिगम्यते। केन पुनर्मनोऽधिगम्यते? अयुगपज्ज्ञानोत्पत्त्या। यस्य तु मनः प्रत्यक्षं भवति तस्य च योगजधर्मानुगृहीत आत्ममनःसंयोगः करणम् योगिधर्माणां चाचिन्त्यत्वात् कथं ते मनो गृह्णन्तीत्यविचारणीयमेतत्। एतेन आत्मविज्ञानं प्रत्युक्तम्, आत्ममनः-संयोगस्य करणभावादिति। एंव तावदात्मनोऽस्तित्वव्यतिरेकौ सिद्धौ। बहुत्वं चात एव

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्**

नान्यदृष्टमन्यः स्मरतीति,

**शरीरदाहे पातकाभावात्**

इति च। तेन सर्वा व्यवस्था शरीरिभेदे सति संभवतीति॥१७॥

॥आत्मनो मनोव्यतिरेकित्वप्रकरणम्॥

## [ आत्मनित्यत्वप्रकरणम् ]

### पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः ॥३।१।१८॥

किं पुनरयं देहादिसङ्घातादन्यो नित्योऽथानित्य इति एतस्मिन्नर्थे

१. ज्ञप्तिवत्तु मतेः ससाधनत्वेऽनुमानमस्ति। C २. ॰विषयत्वाद् C ३. ॰मुच्यते C

उभयथा दृष्टत्वात् [द्रः वै. सू. (च) २.२.२२]

इति संशयमुपपादयति। अनुपपन्नरूपश्चायं संशयः। आत्मास्तित्वव्यतिरेकहेतुभिः शरीरभेदेऽप्यभेद आत्मनि सिद्धः। सिद्धत्वात् प्रकरणमनारभ्यम्। न अनारभ्यम्। कथम्? जन्मप्रभृति यावत् प्रायणमित्येतस्मादेकः सिध्यति। न पुनः शरीरविनाशादूर्ध्वं भवतीत्येवं सिध्यतीति। एतस्यार्थस्य ज्ञापनार्थं

**पूर्वा...पत्तेः**। इति सूत्रम्। अस्यार्थः। जातः खल्वयं कुमारको विषयावगमासमर्थेषु इन्द्रियेषु हर्षभयशोकान् संप्रतिपद्यमानो दृष्टः स्मितकम्परुदितानुमेयान्[१]। ते च स्मृत्यनुबन्धादुत्पद्यन्ते। स्मृत्यनुबन्धश्च नान्तरेण पूर्वशरीरमिति। तत्र जन्म निकायविशिष्टाभिरपूर्वाभिः शरीरेन्द्रियबुद्धिवेदनाभिः संबन्धः। अभिप्रेतविषयप्रार्थनाप्राप्तौ सुखानुभवो हर्षः। अनिष्टविषयसाधनसन्निपाते तज्जिहासोर्हानाशक्यता भयम्। इष्टविषयवियोगे सति तत्प्राप्त्यशक्यप्रार्थना शोकः। तदनुभवः संप्रतिपत्तिः। एकविषयानेकविज्ञानोत्पादोऽभ्यासः, एकाकारविषयो वा। यथा शालयोऽनेन अभ्यस्ता इति। प्रत्यक्षबुद्धिनिरोधेन तदनुसन्धानविषयः प्रत्ययः स्मृतिः। तदनुगृहीतस्तदनुसन्धानविषयः प्रत्ययस्तद्भावविषयः प्रत्यभिज्ञानम्। अनुबन्धो भावनाख्यः स्मृतिहेतुः संस्कारः[२]। इष्टविषयानुस्मरणात् नयनादिप्रसादः स्मितम्। अनिष्टविषयानुस्मरणात् तत्साधनजिहासानुष्ठानलक्षणो हस्तादिविक्षेपवतोऽश्रुविमोचनसहचरितः शब्दविशेषो रुदितम्।

स्मितरुदिते व्यधिकरणत्वादसाधनम्। अथ मन्यसे, स्मितरुदिते बाल्यावस्थायां भवतः। न च बाल्यावस्था आत्मनः। तस्माद् व्यधिकरणत्वादसाधनमिति? न, शोकादिमदात्मवत्या[३] बाल्यावस्थायाः साध्यत्वात्। शोकादिवदात्मवती बाल्यावस्थेति साध्यम् स्मितरुदितादिमत्त्वादिति बाल्यावस्थाया धर्मो[४] यौवनावस्थावत्। एतेन स्मृतिसंस्कारानुभवपूर्वशरीरसंबन्धवदात्मवत्त्वं व्याख्यातम्। कथमिति?

---

१. स्मिते रुदितानुमेयात् J २. संस्कार इति। J ३. °वतीति C ४. बाल्यावस्था वयोधर्मः C

यथा स्मितरुदितवत्त्वेन शोकादिमदात्मवती बाल्यावस्था साध्यते, एवं शोकादिमदात्मवत्त्वेन स्मृतिमदात्मवती बाल्यावस्था साध्या। तथा स्मृतिमदात्मवत्त्वेन संस्कारवदात्मवती बाल्यावस्था साध्या[1]। संस्कारवदात्मवत्त्वेन पूर्वानुभववदात्मवती, पूर्वानुभववदात्मवत्त्वेन पूर्वशरीरसंबन्धवदात्मवतीति। सर्वत्र पूर्वानुभववदात्मवत्त्वेन पूर्वशरीरसंबन्धवदात्मवती साध्या[2]। सर्वत्र यौवनावस्था दृष्टान्तः। सा हि स्मितरुदितवती भवतीति शोकादिमदात्मवती चेति सर्वत्र योज्यम्॥१८॥

## पद्मादिषु प्रबोधसंमीलनविकारवत्तद्विकारः॥३।१।१९॥

अनित्येऽपि विकारदर्शनादनेकान्त इति सूत्रार्थः। कः पुनरयं प्रबोधः, किं वा संमीलनमिति? पद्मपत्रावयवविभागोऽविनश्यत्कार्यः प्रबोधः। पद्मपत्रावयवानामेवारब्धकार्याणां याः पुनः परस्परेण प्राप्तयस्ताः[3] संमीलनमिति। न, विकल्पानुपपत्तेः। पद्मादिषु प्रबोधसंमीलनविकारादिवत् तद्विकार इति किमयं दृष्टान्तः साधनपक्षे उतानैकान्तिकपक्ष इति? यदि साधनपक्षे न हेतुरस्ति[4], न च हेतुमन्तरेण दृष्टान्तमात्रं साधकमित्यसाधनं दृष्टान्तः। अथ दूषणम्, तत् किं दृष्टकारणप्रत्याख्यानम्, अथ कारणान्तरोपपादनम्, अथात्मनि उत्पत्तिनिरोधकारणानुमानम्, अथाकस्मिकत्वमिति? तद् यदि तावद् दृष्टकारणप्रत्याख्यानम्? तन्न युक्तम्, दृष्टेन विशेषितत्वात्। यौवनाद्यवस्थासु स्मितरुदितवत्त्वं शोकादिमदात्मवत्त्वं च दृष्टम्। दृष्टेन स्मितरुदितवत्त्वेन शोकादिमदात्मवत्त्वं बाल्यावस्थायां गम्यत इति न दोषः। अथ कारणान्तरोपपादनम्? तदपि न युक्तम्। अत एव दृष्टेन विशेषितत्वादिति। अथात्मन उत्पत्तिनिरोधकारणानुमानम्, तन्न युक्तम्। द्रव्यस्य सतः सर्वदा अमूर्तत्वादकारण आत्मा आकाशवदिति। आत्मानं च कृतकं प्रतिपद्यमानेन

१. बाल्यावस्था साध्या om J २. सर्वत्र... साध्या om J ३. ॰स्तत् C ४. न हेतुरस्ति om C

कारणमस्य वाच्यम्। कुतः? कार्यस्य कारणवत्त्वात्। सर्वं कार्यं कारणवद् दृष्टमिति ॥१९॥

**नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥३।१।२०॥**

अथ पद्मादिप्रबोधसंमीलनविकारोऽकस्माद् भवतीति? तत्

**नोष्ण...णाम्।** नायमाकस्मिकः पद्मादिषु प्रबोधसंमीलनविकार इति सूत्रार्थः। एवं च सति न किञ्चिद् दृष्टान्तेन प्रतिषिध्यते। पञ्चात्मकविकाराणामिति, न पञ्चात्मकानि पद्मादीनि, अपि तु पञ्चानां भूतानामनुग्रहे सति भवन्तीति पञ्चात्मकानीत्युच्यन्ते। मुख्यतस्तु न किञ्चित् पञ्चात्मकमस्तीत्युपरिष्टाद् वक्ष्यामः॥२०॥

**प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात्॥३।१।२१॥**

जातमात्रस्य वत्सस्य प्रवृत्त्या स्तन्याभिलाषो गम्यते। स्तन्यप्राप्तौ निवृत्तेः प्रवृत्त्यनुमेयः[१] स्तन्याभिलाषः। तेन स्मृतिः। तया संस्कारः। तेनानुभवः। तेन पूर्वशरीरमिति पूर्ववत् प्रयोगः। किमर्थं पुनरिदं सूत्रमारभ्यते, यदायमर्थः पूर्वाभ्यस्तसूत्र एवाधिगतः? सामान्यतोऽधिगतस्य विशेषज्ञापनार्थं सूत्रमित्यदोषः॥२१॥

**अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ॥३।१।२२॥**

प्रवृत्तिमात्रस्यानैकान्तिकत्वज्ञापनार्थम्

**अय...णम्।** इति सूत्रम्। न, विकल्पानुपपत्तेः। किमिदमयसोऽयस्कान्ता-

१. गम्यते तत्र प्रवृत्त्युन्नेयः C

भिगमनं सनिमित्तम्, आहो निर्निमित्तमिति? यदि सनिमित्तम्, तत्केनावगम्यते? नियमेनायोऽयस्कान्तमेवोपसर्पतीति न लोष्टादीन्। न च लोष्टादय उपसर्पन्ति। सोऽयं कार्यनियमः कारणनियमाद्[१] गम्यते। एतेनाकस्मिकत्वं प्रतिषिद्धम्। तदिदमयसामुपसर्पणं किं दृष्टकारणप्रत्याख्यानार्थमुपन्यस्तमथ कारणान्तरोपपादनार्थमथात्मन उत्पत्तिनिरोधकारणानुमानमिति[२] पूर्ववत् प्रसङ्गः॥२२॥

**नान्यत्र प्रवृत्त्यभावात् ॥३।१।२३॥**

आकस्मिकत्वप्रतिषेधार्थं च **नान्य...भावात्** इति सूत्रम्॥२३॥

**वीतरागजन्मादर्शनात्॥३।१।२४॥**

नित्य आत्मा

**वीतरागजन्मादर्शनात्।**

न हि कश्चित् जातमात्रो वीतरागो दृश्यते[३]। वीतरागाणां जन्मादर्शनात् सरागो जायत इति गम्यते। जन्म व्याख्यातम्। ततः किम्? रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः। न च विषयावगमासमर्थेषु इन्द्रियेषु रागः संभवति। न च स्मृतिमन्तरेण [४]पूर्वानुभूतविषयानुचिन्तनं युक्तम्। पूर्वानुभूतविषयप्रार्थना सङ्कल्पः। अदृष्टादिति चेत्? अथ मन्यसे न पूर्वशरीरयोगो रागाद् गम्यते, अपि त्वदृष्टाद् राग इति? नाभिप्रायापरिज्ञानात्। नायमभिप्रायः कारणनियमेन रागः, अपि तु पूर्वशरीरसंबन्धमात्रप्रतिपादनं सूत्रार्थः। न चादृष्टाद्राग इति ब्रुवता तत् प्रतिषिध्यत [५]इति किञ्चिदुक्तम्[६]॥२४॥

---

१. कार्यनियमात् कारणनियमः C २. ॰त्मन्युत्पत्तिनिरोधानुमान C ३. जायते C ४. पूर्वानुभूत॰ om C ५. न for इति J ६. मातृकासु दृष्टं तन्मयत्वाद्राग.... वीरणादिवदित्यर्थचर्चया भाष्यसंगत्या च ३.१.२६ सूत्रवार्तिके सन्निविष्टम्। cf. C, p. 751

**सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः ॥३।१।२५॥**

इति अनैकान्तिकपक्षे सूत्रम्। न, उक्तोत्तरत्वात्। उक्तोत्तरमेतत् ॥२५॥

**न, सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥३।१।२६॥**

अत्रापि पूर्ववत् सङ्कल्पस्मृतिसंस्कारानुभवपूर्वशरीरवदात्मवत्त्वानि योज्यानीति।

तन्मयत्वाद् रागः।[द्रः वै. सू. (च) ६.२.१३]

इति। विषयाभ्यासः खल्वयं भावनाहेतुस्तन्मयत्वमुच्यते।

जातिविशेषाच्च रागविशेषः।[वै.सू. (च) ६.२.१६]

इति। कर्म खल्विदं जातिविशेषस्य निर्वर्तकम्। तादर्थ्यात् ताच्छब्द्यं लभ्यते वीरणादिवत्।

एवं चानादिः संसारोऽपवर्गान्तः सिध्यतीति व्यवस्थितमेतत् अस्त्यात्मा व्यतिरिक्तोऽनेको नित्यश्चेति ॥२६॥

॥आत्मनित्यत्वप्रकरणम्॥

## [ शरीरपरीक्षाप्रकरणम् ]

**पार्थिवं गुणान्तरोपलब्धेः ॥३।१।२७॥**

आत्मानन्तरं शरीरमवसरप्राप्तम्। तत् परीक्ष्यते। अथ वा अनादिश्चेतनस्य शरीरयोग इति शरीरं परीक्ष्यते। तस्मिन् परीक्ष्यमाणे आत्माधिकार एवायं परिसमाप्तो

भवतीति। किं पुनरस्य परीक्ष्यम्? किं घ्राणादिवदेकप्रकृति, उत नानाप्रकृतीति विप्रतिपत्तेः संशयः। श्रूयते खल्वत्र विप्रतिपत्तिः। तत्रेदं तत्त्वम्[१]

**पार्थिवं गुणान्तरोपलब्धेः।**

मानुषं शरीरं पार्थिवमिति। मानुषमिति किमर्थं विशिष्यते? लोकान्तरशरीराणि न पार्थिवानीति युक्तं विशेषणम्। गन्धवत्त्वात् परमाणुवत्। गन्धवान् परमाणुरेकात्मको दृष्टः। गन्धवच्च शरीरम्। तस्मादेकात्मकमिति। एकात्मकमिति[२] एकस्वभावमिति। न त्विदमबादिभिरसंपृक्तया पृथिव्यारब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्प्यत इति भूतसंसर्गोऽविप्रतिषिद्धो मिथः पञ्चानामिति[३] ॥२७॥

**पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ॥३।१।२८॥**

**निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ॥३।१।२९॥**

**गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥३।१।३०॥**

एवं च सति[४]

**पार्थिवाप्यतैजसं तद्गुणोपलब्धेः।**
**निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्।**
**गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्।**

इति प्रत्युक्तम्, तत्र सन्निहितानां तद्गुणोपलब्धेरिति। तदिदमनेकभूतप्रकृति[५] शरीरम्, अगन्धमरसमरूपमस्पर्शं च प्रकृत्यनुविधानात् स्यादिति **भाष्यम्**। तस्य व्याख्यानम्।

---

१. तत्रेदं तत्त्वम् om C २. तस्मादेकात्मकम् C ३. मिथः पञ्चानाम् om C द्र: वै. सू. (च) ४.२.३. ४. एवं तर्हि C ५. °भूत° om J

पृथिव्युदका-भ्यामारभ्यमाणमगन्धं कारणगन्धस्यैकस्यानारम्भकत्वात् पृथिव्यन-लाभ्या-मारभ्यमाणमगन्धं चारसं च कारणगन्धरसयोः केवलयोरनारम्भकत्वात्। पृथिव्य-निलाभ्यामगन्धं चारसं चारूपं च, वायोरगन्धरसरूपत्वात्। पृथिव्याकाशाभ्यामगन्धम-रसमरूपमस्पर्शं च आकाशे गन्धाद्यभावात्। सर्वत्र समानो न्यायः, कारणगुणस्य केवलस्यानारम्भकत्वादिति। जलानलाभ्यामगन्धं चारसं च। जलवायुभ्यामगन्धं चारसं चारूपं च[१]। जलाकाशाभ्यामगन्धमरसमरूपमस्पर्शं च। तेजोऽनिलाभ्यामगन्धं चारसं चारूपं च। अनलाकाशाभ्यामगन्धमरसमरूपमस्पर्शं च। अनिलाकाशा-भ्यामेवमेव। भूजलानलैरगन्धमेव। भूजलानिलैरेवमेव। भूजलाका-शैरेवमेव। पृथिव्यनिलानलैरगन्धमरसं च। पृथिव्यनलाकाशैरेवमेव। पृथिव्यनिलाकाशैर-गन्धमरसमरूपं च। जलानलानिलैरगन्धमरसं च। जलानलाकाशैरेवमेव। जला-निलाकाशैरगन्धं चारसं चारूपं च। अनलानिलाकाशैरेवमेव। पृथिव्युदकतेजो-वायुभिरगन्धम्। पृथिव्युदकज्वलनाकाशैरेवमेव। [२]पृथिवीजलानिलाकाशैरेवमेव, [३]पृथिव्यनलानिलाकाशैरगन्धमरसं च। जलानलानिलाकाशैरेवमेव। पृथिव्युदक-तेजोवाय्वाकाशैरगन्धम्। कारणगुणस्यैकस्यानारम्भकत्वादिति [४]समानम्। एककारण-कत्वे तु [५]सततोत्पत्त्यनुपलब्धिनित्यत्वप्रसङ्ग इत्युक्तम् ॥२८-३०॥

## श्रुतिप्रामाण्याच्च ॥३।१।३१॥

सूर्यं ते चक्षुः स्पृणोमीति अस्य मन्त्रस्यान्ते पृथिवीं ते शरीरमिति, सेयं [६]स्मृतिः कारणात् कार्योत्पत्तिं दर्शयति[७]। सूर्यश्चक्षुषः कारणम्, पृथिवी शरीर-स्येति। अन्त्येष्टिकाले च मन्त्रः सूर्यं ते चक्षुर्गच्छतु पृथिवीं शरीरमिति। अस्यापि

१. जलानिलाभ्यामारब्धमगन्धमरूपमरसं च स्यात् J २. अवनिजला॰ C ३. पृथि-व्यनिलाज्वलना॰ C ४. वाच्यम् C ५. त्यनुत्पत्ती... प्रसङ्गश्चेत्युक्तम् C ६. श्रुतिः J ७. ॰त्पत्तिः। C

मन्त्रस्यार्थो यद् यस्मादायातं तत् तस्मिन्नेव प्रलयं गच्छत्विति। प्रकृतौ विकारस्य प्रलयाभिधानम्। प्रलयशब्देन च कार्यशून्यं कारणमभिधीयते, न पुनः कार्यस्य कारणे लयः प्रलयः। एवं च सति असदुत्पद्यते सन्निरुध्यते इत्ययमर्थ उक्तो भवति ॥३१॥

॥शरीरपरीक्षाप्रकरणम्॥

## [ इन्द्रियभौतिकत्वप्रकरणम् ]

### कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः ॥३।१।३२॥

अथेदानीमिन्द्रियाणि[१] प्रमेयक्रमेण विचार्यन्ते, किमाव्यक्तिकानि, आहङ्कारिकाणि, आहो भौतिकानीति? संशयकारणप्रतिपादनार्थं सूत्रम्[२]

**कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात्[३] संशयः।**

कृष्णसारं भौतिकम्, तस्मिन्ननुपहते विषयोपलब्धिः। कृष्णसारव्यतिरेकेण च विप्रकृष्टदेशावस्थितस्य विषयस्योपलब्धिः। सेयं व्यतिरेकोपलब्धिरभौतिकधर्मः। तदेवमुभयधर्मोपलब्धेः संशय इति। कृष्णसारमेव चक्षुः। तस्मिन् सति भावाद् रूपग्रहणस्य। यस्मादिदं रूपग्रहणं सति कृष्णसारे भवति, असति न भवति। यच्च यस्मिन् सति भवत्यसति न भवति[४] तस्य तदिति, यथा कार्यद्रव्यस्य रूपादय इति।

न, प्रदीपादिभिरनेकान्तात्। प्रदीपे सति रूपोपलब्धिर्भवति[५]। न च प्रदीपस्य रूपोपलब्धिरित्यनेकान्तः। यस्य च कृष्णसारं चक्षुः, तस्य सन्निकृष्टविप्रकृष्टयो-

१. अथेमानीन्द्रि॰ J २. संशय....सूत्रम् om J ३. ॰च्चोपलम्भाच्च J ४. असति न भवति om J ५. भवति om J

स्तुल्योपलब्धिप्रसङ्गः। कृष्णसारं च विषयं न प्राप्नोति, अप्राप्त्यविशेषात् सन्निकृष्टविप्रकृष्टयोस्तुल्योपलब्धिः प्राप्नोति। विषयीभावादिति चेत्? अथ मन्यसे सन्निकृष्टमस्य विषयी भवति विप्रकृष्टमविषयः[१], एवं च न तुल्योपलब्धिरिति? न, उक्तोत्तरत्वात्। उक्तोत्तरमेतत्[२] प्रत्यक्षसूत्र इति ॥३२॥

**महदणुग्रहणात्॥३।१।३३॥**

अभौतिकानीत्यपरे

**महदणुग्रहणात्।**

महदिति महत्तरं महत्तमं चोच्यते। अण्वित्यणुतरमणुतममिति। तदिदमुभयं[३] चक्षुषोपलभ्यमानं भौतिकत्वं चक्षुषो बाधते। भौतिकं हि यावद् भवति तावदेव व्याप्नोति। अभौतिकं तु व्यापकत्वात् सर्वस्य व्यापकमिति[४]। न, भौतिकेषु प्रदीपादिषु दृष्टत्वात्। भौतिकाः प्रदीपादयो महदण्वोः प्रकाशका भवन्तीत्यनेकान्तः, प्रदीपाद्यनभ्युपगमे वा महदणुप्रकाशकत्वं चक्षुष एवेत्यसाधारणत्वादहेतुः, भौतिकाभौतिकयोर्निवृत्तेः। ननु चाभौतिके विज्ञाने महदणुप्रकाशकत्वं दृष्टम्? न दृष्टम्। न हि बुद्ध्या महदणुनी प्रकाश्येते, अपि तु प्रकाशो बुद्धिर्न प्रकाशनमिति। अवधारितस्य त्वर्थस्य हानोपादानोपेक्षाबुद्धीनां साधनं बुद्धिरिति नाभौतिकं महदणुप्रकाशकमस्ति। ननु च मनो विद्यते? सत्यं मनो विद्यते[५], न पुनस्तद्भौतिकं नाप्यभौतिकमिति।

एतेनात्मा व्याख्यातः, नासौ भौतिको नाप्यभौतिक इति। यदि मनो नाभौतिकम् यदुक्तं भौतिकानीन्द्रियाणि, अभौतिकं मन[६] इति तद् व्याहतम् [७]नाभौतिकत्वार्थस्याभूतात्मकत्वपर्यायत्वात्। अभौतिकं मन इति अभूतात्मकं मन इति यावदुक्तं भवति।

१. सन्निकृष्टोऽस्य विषयो....कृष्टो न विषयः C २. उक्तोत्तरमेतत् om C ३. चक्षुष्युप॰ C ४. सर्वव्यापकम् C ५. मनो विद्यते om C ६. द्रः भाष्य १.१.४ ७. ॰तिकार्थस्य...त्मकप॰ C

मुख्यतस्तु मनो न भौतिकं नाप्यभौतिकमिति। नेन्द्रियेऽपि समानत्वात्। इन्द्रियमभौतिकमिति अभूतात्मकमिति यावदुक्तं स्यात्। अभूतात्मकं व्यापकं चेन्द्रियं प्रतिपद्यमान इदं पर्यनुयोज्यः, व्यवहितार्थग्रहणं कस्मात् न भवतीति? किं कारणम्? व्यापकत्वादिन्द्रियस्य कुड्यकटादेरावरणस्य न सामर्थ्यमस्तीति। वृत्तिः [१]प्रतिबध्यत इति चेत्? अथ मन्यसे सत्यं व्यापकमिन्द्रियम् तस्य तु पुरुषार्थेन हेतुना क्षोभ्यमाणस्य महाह्रदाद् बुद्बुदा इव तद्वृत्तयो निश्चरन्ति[२], ताः कुड्यादिभिः प्रतिबध्यन्त[३] इति? न, वृत्तिव्यतिरेकेणेन्द्रियस्य सत्त्वे प्रमाणाभावात्। येयं विषयग्रहणात्मिका वृत्तिः, तां त्यक्त्वा तद्व्यतिरिक्तमिन्द्रियमिति किं प्रमाणम्? न चाप्रमाणकोऽर्थः शक्यः प्रतिपत्तुम्। न च प्रतिबध्यमानाप्रतिबध्यमानयोरेकत्वम्। एकत्वे चानर्थकं वृत्तिः प्रतिबध्यते निश्चरति चेति।

अव्यतिरेकाच्च तदुत्पत्तिविनाशधर्मकत्वम्। यदि च वृत्त्यव्यतिरेकीन्द्रियम्, यथा वृत्तेरुत्पादविनाशावेवम् इन्द्रियस्यापि प्राप्नुतः। वृत्तेर्व्यक्तिर्नोत्पत्तिरिति चेत्? अथ मन्यसे न मया वृत्तेरुत्पत्तिरभ्युपगम्यते, अपि तु व्यक्तिः। न निरोधो विनाशः, अपि तु तिरोभाव इति। नोत्पत्तिविशेषत्वात्। व्यक्तिरुत्पत्तिविशेषः। कथमिति? नानुपजातविशेषस्य व्यक्तिरिति। अथानुपजातविशेषं व्यज्यत इति मन्यसे, नित्यं व्यक्तिः स्यात्।

एतेन विनाशो व्याख्यातः। तिरोभाव इति विद्यमानं न किञ्चित् निवृत्तम्[४]। न ह्यनिवृत्तविशेषस्याग्रहणं संभवतीति। न च सर्वनित्यतावादिनो[५] ग्रहणाग्रहणे युक्ते, विशेषस्यानुपजननात् न ग्रहणम्, विशेषस्यानपचयात्[६] नाग्रहणमिति। नित्यं व्यापकं चेन्द्रियमभ्युपगच्छतः कारणार्थो हीयते। कारणं हि नाम यस्यानन्तरं यद्भवति। कारणं च नित्यं कार्यं च नित्यमिति किं कस्यानन्तरम्? कार्यकारणभावश्च कथमुभयोर्नित्यत्वात्। कारकशब्दार्थश्च वाच्यः। ननु च करोतीति कारकम्? सत्यं

१. प्रतिषिध्यत॰ C २. इव निःस्वरन्त्यः C ३. ॰षिध्यन्त C ४. निरुद्धम् C
५. ॰वादिना C ६. ॰नुप॰ C

करोतीति कारकम्। न पुनर्नित्यवादिनः किञ्चित् कर्तव्यमस्ति। न चासति कर्तव्ये कारकार्थं पश्यामः। व्यक्तौ कारकार्थ इति चेत्? व्यक्तावपि तुल्यम्? व्यक्तिरपि व्यङ्ग्यवत् नित्येति व्यक्तावपि न कारकार्थोऽस्ति। युगपदनेकविज्ञानप्रसङ्गाच्च। यदि च वृत्तिर्वृत्तिमतो नान्या भवति, वृत्तिमतोऽवस्थानात् वृत्तीनामवस्थानमिति युगपदनेकविज्ञानप्रसङ्गः। वृत्त्यनेकत्वे चैकमिन्द्रियमनेकं प्राप्नोति, वृत्तिभ्योऽनन्यत्वात्। अथ मा भूदिन्द्रियभेद इति, वृत्तीनां तर्हि एकत्वं प्राप्नोति, वृत्तिवृत्तिमतोरनन्यत्वात्। अथ मा भूदेष दोष इत्युभयं नेष्यते, भेदस्तर्हि वृत्तिवृत्तिमतोरिति, न चान्या गतिरस्ति। तस्मादयुक्तं व्यापकमिन्द्रियं नित्यं चेति॥३३॥

**रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम् ॥३।१।३४॥**

महदणुग्रहणस्य चान्यथासिद्धेरहेतुः। योऽप्ययं हेतुर्महदणुग्रहणादभौतिकानीन्द्रियाणीति, अयमप्यन्यथासिद्धः। न महदणुग्रहणमात्रादभौतिकत्वं व्यापकत्वं चेन्द्रियाणां शक्यं प्रतिपत्तुम्। कस्मात्? यस्मादिदं

**रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम्।**

यस्माद्रश्म्यर्थसन्निकर्षविशेषात् महदण्वोर्ग्रहणम्। चक्षूरश्मेश्चार्थस्य च सन्निकर्षविशेषात् महदण्वोर्ग्रहणं भवति। तत्र सन्निकर्षमात्रात् सामान्यग्रहणं सन्निकर्षविशेषाद् विशेषग्रहणम्। कः पुनः सन्निकर्षस्य विशेषः? भूयोऽवयवसन्निकर्षानुग्रहः। यस्मादयं सन्निकर्षो विशेषप्रतिपत्तिहेतुः भूयोभिरवयवसंयोगैरनुगृह्यते सोऽयमवयवान्तरसंयोगापेक्षोऽवयवीन्द्रियसन्निकर्ष सन्निकर्षविशेष इत्युच्यते। स च रश्म्यर्थसन्निकर्षविशेषोऽणोर्महतश्च तुल्यो भवतीत्यन्यथा महदण्वोर्ग्रहणं सिध्यति। रश्म्यर्थसन्निकर्षश्चावरणलिङ्गः कुड्यादिव्यवहितानामप्रकाशकत्वात्। अप्राप्यकारित्वे तु न कुड्यादेरावरणस्य सामर्थ्यमस्तीति अस्ति चाक्षुषो रश्मिर्यथा प्रदीपरश्मिरिति॥३४॥

**तदनुपलब्धेरहेतुः ॥३।१।३५॥**

आवरणानुमेयत्वे सतीदमाह

**तदनुपलब्धेरहेतुः।**

न चाक्षुषो रश्मिर्विद्यत इति सूत्रार्थः कथमिति? उपलब्धिलक्षणप्राप्तत्वादनुमानानुपपत्तिः। यत् खलूपलब्धिलक्षणप्राप्तं नोपलभ्यते, तन्नास्ति। यथा घटादि। घटादेर्महदनेकद्रव्यवत्त्वरूपाण्युपलम्भकानि[1] सन्तीत्युपलभ्यन्ते घटादयः। तथा च महदनेकद्रव्यरूपवांश्चाक्षुषो रश्मिः कस्मात् प्रत्यक्षतो नोपलभ्यत इति वाच्यम्। महत्त्वं तावत्

कारणमहत्त्वबहुत्वप्रचयेभ्यः[2]।

अनेकद्रव्यवत्त्वमपि कारणबहुत्वादेव।

रूपस्पर्शवद्धि तेजः[3]।

इति नारूपं तत्। एवमशेषोपलब्धिकारणसन्निधाने सति येन नोपलभ्यते तेन गम्यते नास्तीति ॥३५॥

**नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥३।१।३६॥**

यत् प्रत्यक्षतो नोपलभ्यते तदनुमानेनोपलभ्यमानं नास्तीत्ययुक्तं वक्तुम्, यथा चन्द्रमसः परभागस्य पृथिव्याश्चाधोभागस्येति। [4]यथा चन्द्रमसः पृथिव्याश्च परभागाधोभागावुपलब्धिलक्षणप्राप्तावपि न प्रत्यक्षत उपलभ्येते, न चानुमानेनोपलब्धेस्तौ न स्तः। किं पुनरनुमानम्? अर्वाग्भागवत्त्वमुभयप्रतिपत्तौ। तथा चाक्षुषस्य रश्मेः कुड्याद्यावरणमनुमानं संभवतीति ॥३६॥

१. °रूपवत्त्वानि C   २. द्र:वै. सू. (च) ७.१.१६   ३. द्र: वै. सू. (च) २.१.३
४. यथा चन्द्रमसः....°भागावुपलब्धि° om C

**द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥३।१।३७॥**

**अपरे** तु

महत्त्वादनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः[१]

इत्युपलब्धौ नियमं वर्णयन्ति। नोपलभ्यमान इति किमुक्तं भवति? न ब्रूमो[२] यत्र यत्र महदनेकद्रव्यवत्त्वरूपाणि सन्ति, तत्तदुपलभ्यत इति, अपि तु यद्यदुपलभ्यते, तत्र तत्र महदनेकद्रव्यवत्त्वरूपाणि सन्तीति। एवं तर्हीद सूत्रं नोपलब्धेः कारण-प्रतिपादकं सत्सु अभावादिति। सत्सु महदनेकद्रव्यरूपेषु उपलब्धिर्न भवेदिति नैतान्युपलब्धिकारणानि

**द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः।**

इति। शेषं **भाष्ये**।

कस्मात् तर्हि चाक्षुषो रश्मिर्नोपलभ्यते? उपलब्धिकारणाभावादिति, नैताव-देवोपलब्धिकारणं यदुत महदनेकद्रव्यरूपाणि, अपि तु रूपग्रहणेन रूपविशेषोऽ-भिधीयते न रूपमात्रम्। एवं च सूत्रम्

अनेकद्रव्येण द्रव्येण समवायाद्रूपविशेषाच्च रूपोपलब्धिः[३]

इति। अत्र रूपविशेषग्रहणेन रूपधर्म उद्भवसमाख्यातोऽभिधीयते, न रूपत्वं रूपान्तराद् रूपं विशिनष्टि अपि तु उद्भवो विशेषकत्वाद् विशेष इत्युच्यते। यथा ब्राह्मणविशेष इति। न ब्राह्मणत्वं ब्राह्मणविशेषः। एवं यत् समानजातीयविशेषकं तद् विशेष इत्युच्यते। उद्भवश्च कार्यगम्यः। यस्याभावाद् विषक्तावयवमाप्यं द्रव्यं हेमन्ते न गृह्यते, तैजसं च ग्रीष्मे यस्य च भावात् प्रदीपरश्मिरुपलभ्यते, आदित्य-रश्मिश्च स उद्भवो नाम रूपविशेषः। स तस्मिन् नायने रश्मौ रूपविशेषो नास्तीत्यतश्चाक्षुषो रश्मिर्नोपलभ्यत इति।

---

१. द्रः वैं. सू. (च) ४.१.६ २. न युक्तो C ३. इदं न्यायसूत्रार्थविशदीकरणाय समुपात्तं वैशेषिकसूत्रम् (४.१.९ च), न न्यायसूत्रम्। द्रः विश्वेश्वरानन्दभारतभारतीलेखमाला-४८, पृः २-३; अनेकद्रव्यसम॰ C

दृष्टश्च तेजसो धर्मभेदः। चतुर्विधं च तेजो भवति उद्भूतरूपस्पर्शं यथा आदित्यरश्मिः, उद्भूतरूपमनुद्भूतस्पर्शं यथा प्रदीपरश्मिः, उभयं च प्रत्यक्षं रूपस्योद्भूतत्वात्। उद्भूतस्पर्शमनुद्भूतरूपं यथा वारिस्थं तेजः, अनुद्भूतरूपस्पर्शो यथा नायनो रश्मिः। उभयं चाप्रत्यक्षं रूपस्यानुद्भूतेः ॥३७॥

**कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥३।१।३८॥**

शेषं **भाष्ये**। रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्तार्था। यदि नायनो रश्मिरुद्भूतरूपस्पर्शो भवेत् तेन दृश्यविशेषे अनेकरश्मिसन्निपाते च[१] सति द्रव्यं दह्येत। अनेकरश्मिसन्निपाते च सति व्यवहितत्वाद् द्रव्यस्यानुपलब्ध्या भवितव्यम्। अथ मन्यसे यथा आदित्यरश्मिसंबद्धेऽर्थे नायनो रश्मिर्न व्यवधीयते, एवं रश्म्यन्तरसन्निपातेऽपीति। तत्र, [२]व्यतिभेदादनुग्राहकत्वाच्च। व्यतिभिद्यादित्यरश्मिं तत्संबद्धेन द्रव्येण संबध्यते, उद्भूतरूपस्पर्शवत्त्वे तु चक्षुषो यस्य पूर्वं सन्निपतितं चक्षुः तदितरेणाव्यतिभिन्नमिति[३] नार्थं गृह्णीयात्। अथानेकरश्मिसन्निपाते सति समानजातीयद्रव्येभ्यो द्रव्यान्तरं रश्मिरुत्पद्यत इति। एवं च समग्रासमग्रचक्षुषो रूपोपलब्धिः समाना[४] प्राप्नोति। न चैतदिष्टमनुपलब्धेरिति। तेन सर्वो व्यवहारो न कल्पते[५]। व्यवहारप्रक्लृप्त्यर्थं च नायनस्य रश्मेरनुद्भूतरूपस्पर्शवत्त्वमिति। सर्वद्रव्याणां च विश्वरूपो व्यूहः पुरुषार्थतन्त्रः कर्मकारित[६] इति। कर्म तु धर्माधर्मभूतं चेतनस्योपभोगार्थमिति।

अव्यभिचारी तु प्रतीघातो भौतिकधर्मः। भौतिकं चक्षुः कुड्यादिभिः प्रतीघातदर्शनाद् घटादिवदिति। अप्रतीघातादभौतिकमिति चेत्? अथ मन्यसे यदि

१.सन्निधाने for °सन्निपाते च C २. व्यतिभिद्यार्थग्रा° C ३. व्यवहितमपि C; व्यवहितमिति C var. ४. चक्षुषोस्तुल्योपलम्भः C ५. तेन....न कल्पते om C ६. पुरुषार्थकारित इति C

प्रतीघाताद् भौतिकमप्रतीघातात् तर्हि अभौतिकमिति। दृष्टश्चाप्रतीघातः, काचाभ्रपटलस्फटिकान्तरितोपलब्धेरिति। नानेकान्तात् प्रदीपरश्मिवदिति। भौतिकस्याप्यप्रतीघातः, यथा प्रदीपरश्मेरिति। स्थाल्यादिषु पाचकस्य तेजसोऽप्रतीघातादिति[१] ॥३८॥

**मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥३।१।३९॥**

उपपद्यते चानुपलब्धिः कारणभेदात्

**मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः।**

यथोपलब्धिलक्षणप्राप्तस्य मध्यन्दिने उल्काप्रकाशस्य निमित्तादग्रहणमभिभवात् तथोपलब्धिलक्षणप्राप्तस्य चाक्षुषस्य रश्मेरग्रहणं निमित्ताद् रूपस्यानुद्भूतेरिति ॥३९॥

**न, रात्रावप्यनुपलब्धेः ॥३।१।४०॥**

मध्यन्दिनोल्काप्रकाशो नोपलभ्यते[२] आदित्यप्रकाशाभिभवादित्ययुक्तम्, सर्वरश्मिवत्त्वप्रसङ्गात्[३]। एवं सति सर्वं लोष्टादि रश्मिवत्[४] प्राप्नोति। अथ लोष्टादिरश्मयः कस्मात् नोपलभ्यन्त इत्यत्रानुयुक्तो ब्रुयात् आदित्यप्रकाशाभिभवात् [५]इति। एतदुद्धारकं सूत्रम्

**न, रात्रावप्यनुपलब्धेः।**

यदि लोष्टादिरश्मयः स्युः, दिवा आदित्यप्रकाशाभिभवात् नोपलभ्यन्त इति रात्रौ तर्हि उपलभ्येरन्। रात्रावपि नोपलभ्यन्ते व्यञ्जकाभावादिति चेत्? न हि यद्

१. अप्रतीघातः (?) C २. ॰लभ्यत इति? आदित्यप्रकाशात्। om J ३, ४. रश्मिम॰ J ५. ॰भवादिति, अयुक्तं तत् C

यस्याभिभावकं तत् तस्याभिव्यञ्जकमिति प्राप्तो[1] लोष्टरश्मीनामुपलम्भः। अनुमानतश्च नोपलभ्यते लोष्टे रश्मिरित्यपिशब्दाद् गम्यते, तदेवं सर्वप्रमाणविनिवृत्तेन विद्यते लोष्टे रश्मिः। न पुनरेवं चाक्षुषो रश्मिर्निरनुमानः, कुड्यादेरावरणस्य सामर्थ्यादिति ॥४०॥

**बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥३।१।४१॥**

तस्य विद्यमानस्य

**बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः।**

दृष्टान्तस्थान एवैतत् सूत्रम्। किमुक्तं भवति? यत् खलु बाह्यप्रकाशानुग्रहमपेक्षते तस्यानुपलब्धी रूपस्यानभिव्यक्तित इति। अनुद्भूतेर्यथा विषक्तावयवस्याप्यद्रव्यस्य रूपस्यानुद्भूतेरग्रहणम्, तथा चाक्षुषो रश्मिर्बाह्यप्रकाशानुग्रहमपेक्षते, तस्मादस्यापि रूपस्यानुद्भूतेरग्रहणमिति ॥४१॥

**अभिव्यक्तौ चाभिभवात् ॥३।१।४२॥**

कस्मात् पुनर्नायनस्य रश्मेरनुपलब्धिकारणमभिभवो[2] नोच्यत इति?

**अभिव्यक्तौ चाभिभवात्।**

यदुद्भूतरूपं बाह्यप्रकाशानुग्रहं च नापेक्षते तदभिभूयते यथा मध्यन्दिने उल्काप्रकाशः। अनुद्भूतरूपश्च नायनो रश्मिः, बाह्यप्रकाशानुग्रहं चापेक्षते। यदनुद्भूतरूपं तन्नाभिभूयते यथा तदेव विषक्तावयवमाप्यं द्रव्यम्। यच्च बाह्यप्रकाशानुग्रहापेक्षम्, उद्भूतरूपमपि तन्नाभिभूयते यथा घटादिद्रव्यमिति। सोऽयमुभय-

---

१. कथं न प्राप्नोति for प्राप्तो C  २. °लब्धेरभिभवो न कारणमुच्यते इति C

विषयोऽभिभवो नायनरश्मावनुपपन्न इति। विप्रतिपत्तिविषयः कृष्णसारं रश्मिवत् द्रव्यत्वे सति रूपोपलब्धौ नियतस्य साधनाङ्गस्य निमित्तत्वात् प्रदीपवदिति। अथ वा रश्मिमच्चक्षुः द्रव्यत्वे सति नियतस्य साधनाङ्गत्वे च[1] सति स्फटिकादिव्यवहितार्थप्रकाशकत्वात् प्रदीपवदिति ॥४२॥

**नक्तञ्चरनयनरश्मिदर्शनाच्च ॥३।१।४३॥**

इति दृष्टान्तसूत्रम्। मानुषं चक्षू रश्मिमत् अप्राप्तिस्वभावत्वे सति रूपाद्युपलब्धिनिमित्तत्वात् नक्तञ्चरचक्षुर्वदिति। जातिभेदवदिन्द्रियभेद इति चेत्? अथ मन्यसे विडालत्वं जातिर्वृषदंशे वर्तते न मनुष्ये एवं रश्मिमद् विडालस्यैव चक्षुर्भविष्यति न मानुषस्येति? न, आवरणसामर्थ्यसामान्यात्। सत्येतस्मिन् जातिभेदे यथा वृषदंशप्रभृतीनां कुड्यादिभी रश्मय आव्रियन्ते तथा मनुष्याणामपीति समानमेव।

इतश्च भौतिकानीन्द्रियाणि प्रतिघातित्वात् घटादिवदिति। भूतं श्रोत्रम्, द्रव्यत्वे सति बाह्यार्थप्रकाशकत्वात् घ्राणादिवदिति ॥४३॥

**अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥३।१।४४॥**

रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणमित्ययुक्तम्, अन्यथापि ग्रहणात्[2]।

**अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः।**

तृणादि सर्पद्द्रव्यं काचेऽभ्रपटले वा व्याहन्यते। यदि च चाक्षुषो रश्मिः प्राप्तार्थप्रकाशकः स्यात् काचाभ्रपटलस्फटिकव्यवहितार्थप्रकाशको[3] न स्यात्,

१. नियतत्वे च C २. अन्यथापि ग्रहणात् om J ३. स्फटिकान्तरिते प्रका° C

अस्ति तु। तस्मात् न प्राप्यकारि चक्षुरिति। अत एव चाभौतिकम्। प्राप्यकारित्वं हि भौतिकधर्मः[१] ॥४४॥

**[२]कुड्याद्यन्तरितानुपलब्धेरप्रतिषेधः ॥३।१।४५॥**

अप्राप्यकारित्वे इन्द्रियस्य न कुड्याद्यावरणस्य सामर्थ्यमस्तीत्युक्तम्। शेषं **भाष्ये** ॥४५॥

**अप्रतीघातात् सन्निकर्षोपपत्तिः ॥३।१।४६॥**

न काचोऽभ्रपटलं वा रश्मिं[३] विष्टभ्नाति। सोऽप्रतिहन्यमानो व्यतिभिद्यार्थेन संबध्यते ॥४६॥

**आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् ॥३।१।४७॥**

यच्च मन्येत न भौतिकस्यास्त्यप्रतीघात इति, सर्वं भौतिकं प्रतीघातधर्मकमिति तन्न,

**आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात्।**

न, आदित्यरश्मेरविघातात् स्फटिकान्तरितेऽप्यविघातात् दाह्येऽप्यविघातात्। अविघातादिति च पदाभिसंबन्धभेदाद्[४] वाक्यभेदः। नैकं वाक्यमनेकार्थम्। प्रतिवाक्यं चार्थभेदः। शेषं **भाष्ये**।

१. अत एवाभौतिकं प्राप्यकारित्वं न भौतिकधर्म इति C २. सूत्रात् पूर्वं वार्त्तिके नकारोऽधिकः C ३. प्रतिबध्नाति C ४. ०दिति पदाभिसंबन्धात् C

कोऽयमविघातः? अव्युह्यमानावयवद्रव्यानुप्रवेशः। यस्य द्रव्यस्यावयवा न व्युह्यन्ते, तस्यान्तरावयवैरव्युह्यमानस्य योऽभिसंबन्धः सोऽविघात इति। अन्तर्व्यवस्थितस्य वा द्रव्यस्याव्युह्यमानावयवस्य बहिरवस्थितद्रव्यप्राप्तिः। दृष्टं हि कलसे [१]निषिक्तानामपां बहिः शीतस्पर्शस्य ग्रहणम्। न च गुणस्यास्वतन्त्रस्य[२] गुणिनमन्तरेण बहिर्निर्गमनं युक्तमिति[३]। तत्र प्रस्पन्दः तिर्यग्गमनं परिस्रवः पात इति ॥४७॥

**नेतरेतरधर्मप्रसङ्गात् ॥३।१।४८॥**

इतरधर्म इतरत्र प्रसज्यत इति इतरधर्मश्चेतरत्र। यद्यविघातश्चक्षूरश्मेः, स्फटिकादिभिः [४]कटादिभिरपि प्राप्नोति। कुड्यादिभिर्वा प्रतीघात इति स्फटिकादिभिरपि प्राप्नोति ॥४८॥

**आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ॥३।१।४९॥**

नैष दोषः

**आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः।**

आदर्शोदकयोः प्रसादो रूपविशेषः। स च स्वो भवति नियमात्। कः पुनरयं रूपविशेषः? द्रव्यान्तरासंपृक्तद्रव्यसमवायः। तस्य वा रूपोपलम्भनसामर्थ्यं स्वो धर्मः स च स्वभावः[५]। तस्य या विद्यमानतोदकादिषु तत् स्वाभाव्यम्। प्रसादस्वभावत्वाद् आदर्शोदकादिषु नयनरश्मिः प्रतिहन्यते। स च प्रतिहतः प्रतिनिवृत्य[६]

१. निषक्ताना॰ C २. गुणस्य द्रव्यतंन्त्रस्य C var ३. द्रः वै. सू. (च) १.१.१५
४. कुड्यादिभि॰ C ५. स्वभावतः C ६. प्रतिनिवृत्तौ C

स्वमुखादिना संबध्यते। तस्य चाग्रसंबन्धाद् यदभिमुखमग्रं तदभिमुखं मुखादि पश्यतीति यथाग्रतो व्यवस्थितस्य पुरुषस्येति। आदर्शमुखग्रहणं तु क्रमेण भवदपि[१] आशुभावात् न विभाव्यत इति आदर्शरूपानुग्रहात् तदनुरञ्जितः प्रत्ययः। शेषं **भाष्ये** ॥४९॥

## दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः ॥३।१।५०॥

प्रमाणस्य तत्त्वविषयत्वात्। दृष्टानुमिताः खल्विमे द्रव्यधर्मा यथाभूता भवन्ति तथाभूता एव प्रमाणेन प्रतिपाद्यन्त इति। इमौ च भवता नियोगप्रतिषेधौ देशितौ क्व विषये स्याताम्? न चैतद् युक्तम्। न हि यथा धूमेनाग्निप्रतिपत्तिः, तथोदकप्रतिपत्तिरपि भवत्विति। न चोदकप्रतिपत्तिर्धूमेन न भवतीत्यग्निप्रतिपत्तिरपि न युक्ता। अर्थांश्च नियुञ्जानो भवानुपेक्षणीयः। प्रतिघाताप्रतिघातयोः खलूपलब्ध्य-नुपलब्धी व्यवस्थापिके। व्यवहितोपलब्ध्यानुमीयते स्फटिकादिभिरप्रतिघातः, व्यवहितानुपलब्ध्या च कुड्यादिभिः प्रतिघात इति। यदि प्राप्यकारि चक्षुर्भवति, अथ कस्मादञ्जनशलाकादि नोपलभ्यत इति? न, इन्द्रियेणासंबन्धात्। इन्द्रियेण संबद्धा अर्था उपलभ्यन्ते, न चाञ्जनशलाकादि इन्द्रियेण संबद्धम्, अधिष्ठानस्यानिन्द्रियत्वात्। रश्मिरिन्द्रियं नाधिष्ठानम्, न च रश्मिरञ्जनशलाका-दिसंबद्ध[२] इति। एवं तावद् भौतिकानि इन्द्रियाणीति व्यवस्थितम्[३] ॥५०॥

॥इति इन्द्रियभौतिकत्वप्रकरणम्॥

१. ॰ग्रहणमनुक्रमेण तदपि C २. न रश्मिना अञ्जनशलाका संबद्धा C ३. समर्थितम् for व्यवस्थितम् C; वाक्यमिदं परसूत्रवार्त्तिकपातनिकारूपेणोपात्तम् C

# [ इन्द्रियनानात्वप्रकरणम् ]

## स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥३।१।५१॥

किं पुनरेकमिन्द्रियम्, आहो अनेकमिति? **एके तु**

**स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः।**

[१]स्थानान्यत्वे नानात्वं दृष्टम्, यथा बहूनां घटादीनाम्। एकस्य च नानास्थानत्वम्, यथावयविन इति। अनुपपन्नरूपश्चायं संशयः। कथमिति। यदि तावदेवं क्रियते, स्थानान्यत्वे नानात्वैकत्वदर्शनादिति? तदैकत्वे स्थानान्यत्वस्यादर्शनात् न समानधर्मः। अथ नानास्थानत्वे सत्येकानेकत्वदर्शनात् संशय इति, तदा द्रव्यं नानास्थानमनेकं न किञ्चिद् दृष्टमिति न समानधर्मत्वम्। यत् तु घटाद्यनेकं न तत् नानास्थानम्, अपि तु स्थानान्यत्वं तस्य। सोऽयं संशय उभयथा अनुपपन्न इन्द्रियेषु। स्थानेषु तु युक्तः। किं नानास्थानानि, उत नानास्थानमिति? इन्द्रियेषु तु न स्थाननानात्वात् संभवति नापि नानास्थानत्वादिति।

शरीरव्यतिरेकात् सत्त्वाच्च संशयः। शरीरव्यतिरिक्तमुभयथा दृष्टमेकमनेकं च, यथाकाशं घटादि च। सच्चोभयथा दृष्टमेकमनेकं च। तदेवमुभयं चेन्द्रियेषु शरीरव्यतिरेकश्च सत्त्वं च। तेन संदिह्यत इति॥ ५१॥

## त्वगव्यतिरेकात् ॥३।१।५२॥

एकमिन्द्रियम्। किं पुनस्तत्?

**त्वगव्यतिरेकात्।**

कः पुनरयमव्यतिरेकः? सर्वाधिष्ठानसंबन्धः। न हि किञ्चिदिन्द्रियाधिष्ठानं[२]

१. एके तु स्थाना॰ C    २. इन्द्रियम् C

त्वचा न प्राप्तम्। सति भावो वा। न ह्यसत्यां त्वचि किञ्चिद् विषयग्रहणं भवति। तस्मात् त्वगेकमिन्द्रियम्।

नेन्द्रियान्तरार्थानुपलब्धेरिति लोकविरोधः। एकमिन्द्रियमिति ब्रुवाणो लोकं विरुणद्धि। विद्यमाने त्वगिन्द्रिये स्पर्शोपलब्धिलिङ्गे[1] इन्द्रियान्तरार्था रूपादयोऽन्धादिभिरप्युपलभ्येरन। न तूपलभ्यन्ते। तस्मात् नैकमिन्द्रियमिति। यदप्यव्यतिरेकादिति तदपि न, अनेकान्तात्। अनेकेन चानिन्द्रियेण सर्वाणीन्द्रियाधिष्ठानानि पृथिव्यादिना प्राप्तानीत्यनेकान्तः।

अवयवोपघातादिति चेत्? अथ भवेदेतत् त्वगवयवः कश्चिदुपहतो भवति, तदुपघातादन्धादिभिर्नोपलभ्यन्ते रूपादय इति? यथा त्वगवयवविशेषेण धूमोपलब्धिः, यश्चक्षुषि त्वगवयवविशेषस्तदुपघाताद् धूमस्पर्शानुपलब्धिरिति? न, व्याघातात्। त्वगवयवविशेषणधूमोपलब्धिवद् रूपाद्युपलब्धिं ब्रुवता यदुक्तमेकमिन्द्रियमिति तद् व्याहतं भवति। प्रागेकमिन्द्रियं त्वगित्यभ्युपगम्य इदानीं त्वगवयवविशेषा रूपादिग्राहका इति ब्रुवाणः प्रतिषेध्यमभ्यनुजानातीति। न ह्यवयव्यनतिरिक्ता अवयवा इति। यांश्चावयवान् रूपादिग्राहकान् त्वचो मन्यसे[2], ते किमिन्द्रियात्मका उत नेति? किं चातः? यदीन्द्रियात्मकाः, नैकमिन्द्रियम्। अथेन्द्रियात्मका न भवन्ति, न तर्हि इन्द्रियग्राह्या रूपादय इति॥ ५२॥

**न युगपदर्थानुपलब्धेः ॥३।१।५३॥**

सूत्रेण चाभिसंबन्धः

**न युगपदर्थानुपलब्धेः।**

यस्यैकमिन्द्रियं तस्य युगपदर्थानामुपलब्धिः प्रसज्यते। कथमिति? आत्मा मनसा संबध्यते, मन इन्द्रियेण, इन्द्रियं सर्वार्थैः सन्निहितैरिति आत्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो युगपद् [3]बुद्धयः प्रादुःष्युरिति[4]।

१. ॰ब्धिप्रसङ्गे C २. मन्यन्ते C ३. उपलब्धयः C ४. द्र:वै.सू.(च) ३.१.१३

नैकेन्द्रियग्राह्याणां युगपदुपलब्धिप्रसङ्गात्। यथैकेन्द्रियवादिनो युगपदनेकार्थ-सन्निकर्षे सति युगपदुपलब्धिर्दोषो भवतीति, तथानेकेन्द्रियवादिनोऽपि एकेन्द्रिय-ग्राह्येषु युगपदुपलब्धिप्रसङ्गः। य एवात्र परीहारः स ममापि भविष्यतीति। अथा-यमदुष्टः पक्षः? अचोद्यं तर्ह्येतद् युगपदुपलब्धिप्रसङ्ग इति।

अत्र **केचित्** परीहारं वर्णयन्ति। बुभुत्साभेदात् न युगपदुपलब्धिरिति। ममाप्येवम्। यदि बुभुत्साभेदात् न युगपदुपलब्धिर्लभ्यते, ममापि बुभुत्साभेदो न दण्डवारित इति। सत्यां च बुभुत्सायामयुगपदुपलब्धावन्यो न्यायोऽवधारणीयः।

करणत्वादित्य**न्ये**। अन्ये तु परीहारं ब्रुवते करणत्वादिति। करणस्य किलायं धर्मः, अधिष्ठितमप्यनेकां क्रियां न युगपत् शक्नोति कर्तुम्। अनधिष्ठितं च न प्रवर्तत इति। तुल्यम्, यस्याप्येकमिन्द्रियं तस्यापि करणत्वं न निवार्यत इति। तस्माद् युगपदर्थानुपलब्धिरित्यदोषोऽयमिति। एवं ब्रुवाण एकेन्द्रियवादी विकल्पतः पर्यनुयोज्यः। यत् तदेकमिन्द्रियं सर्वार्थमिति मन्यसे, तत किं प्राप्यकारि, आहो नेति? किं चातः? यदि प्राप्यकारि, किं तदिति वक्तव्यम्। यदि त्वक्, त्वचा अप्राप्तानां रूपाणामग्रहणप्रसङ्गः। अथाप्राप्तं रूपं गृह्णाति, स्पर्शादिष्वप्येवं प्रसङ्गः।

अथ सामिकारीन्द्रियम्, किञ्चित्प्राप्तं गृह्णाति किञ्चित् चाप्राप्तम्। एवं सति करणधर्मातिक्रमः। भवतु करणधर्मातिक्रमः, किं नो बाध्यत इति। एतस्मिन् पक्षे न युगपदुपलब्धिप्रसङ्गादिति सूत्रम्। [१]यश्चानेकेन्द्रियवादिन एकेन्द्रियग्राह्येषु युगप-दुपलब्धिप्रसङ्गे करणत्वादिति परीहारः सोऽस्या[२] न भवति। करणधर्मातिक्रमाभ्यु-पगमात्[३]। व्याहतं चैतत्, करणं प्राप्यकारि चाप्राप्यकारि चेति। असाहचर्याच्च न त्वक्। साहचर्यं नाम यस्यैकं विषयग्रहणं तस्य द्वितीयमपीत्यन्धबधिराद्यभाव - प्रसङ्गः॥ ५३॥

१. यथाने॰ C २. सोऽस्य C ३. अतिक्रमात्। C

## विप्रतिषेधाच्च न त्वगेका[१] ॥३।१।५४॥

शेषं **भाष्ये**। एकोपघाते तद्विनाशे वा सर्वानुपलब्धिप्रसङ्गः। अथैकमिन्द्रियं भवति, तदुपघाते तद्विनाशे वा सर्वानुपलब्धिप्रसङ्गः। आवरणानुपपत्तिश्च। यदि त्वगेकमिन्द्रियं भवति नावरणस्य सामर्थ्यमस्तीति[२] व्यवहितावस्थितरूपोपलब्धिप्रसङ्गः। दूरान्तिकानुविधानं चोपलब्ध्यनुपलब्ध्योर्न स्यात्। अप्राप्यकारित्वे त्वगिन्द्रियस्यान्तिके ग्रहणं दूरे चाग्रहणमित्येतत् न स्यात्॥ ५४॥

## इन्द्रियार्थपञ्चत्वात् ॥३।१।५५॥

प्रतिषेधाच्च नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते प्रतिषेधात् नानात्वं सिध्यतीति न बुध्यामहे। प्रतिषेधादेकत्वसाधनं न स्यात्। नानात्वं तु कथं सिध्यतीति? नासाधना क्रियेति। एकत्वं च कथं प्रतिषेद्धुं शक्यते? प्रतिषेधादेकत्वसाधनमनुमानं निवर्तते, न पुनरेकत्वमनेकत्वं वा निवर्तत इति। कथं तर्हि अयं ग्रन्थो ग्राह्यः, प्रतिषेधात् चानन्तरं नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते, इन्द्रियार्थपञ्चत्वात्। अथ वा प्रतिषेधाच्च नानात्वसिद्धाविति प्रतिषेधहेतुना एकत्वप्रतिषेधे कृते अर्थान्नानात्वं सिध्यतीत्ययमर्थः। कतमः पुनरसौ प्रतिषेधहेतुः? युगपदर्थोपलब्धिप्रसङ्गादित्ययम्, अनेनैकत्वं प्रतिषिद्धम्।

तदेवमवीतसिद्धौ वीतदर्शनार्थमिदमुच्यते

**इन्द्रियार्थपञ्चत्वात्॥**

इति सूत्रम्। अर्थः प्रयोजनमित्येवमादि **भाष्ये**। इदं च सूत्रं न कथञ्चन न्यायेन संबध्यते। कथमिति? विधीयमानोऽर्थः साध्यः पञ्चेन्द्रियाणीति, इन्द्रियार्थपञ्चत्वादि-

१. एका om J  २. विप्रकृष्टावस्थितोप॰ C

त्यसंबद्धम्। अथ प्रयोजनपञ्चत्वम्? तदप्येवमेव। अथ ग्रहणानि पक्षीक्रियन्ते, तत्राप्यैकान्तिको हेतुर्नास्तीति। एतेन विषया व्याख्याताः।

इदं तु सूत्रमेवं स्यात्। रूपरसगन्धस्पर्शशब्देषु नानासाधनक्रियः कर्ता एकविषयावसितौ विषयान्तरसिद्ध्यै[1] करणान्तरापेक्षित्वात्। यस्य कर्तुरनेको विषयः, तस्यान्यतमविषयावसाये विषयान्तरसिद्धौ [2]साधनान्तरापेक्षित्वं दृष्टम्। यथानेकशिल्पपर्यवदातस्य पुरुषस्य रथक्रियावसाये घटादिक्रियायां[3] करणान्तरापेक्षित्वम्, तथा च रूपाद्यन्यतमविषयावसाये विषयान्तरसिद्ध्यै[4] साधनान्तरापेक्षित्वमस्तीति। तस्माद् रूपरसगन्धस्पर्शशब्देषु नानासाधनक्रियः कर्तेति ॥ ५५ ॥

**न, तदर्थबहुत्वात् ॥३।१।५६॥**

अस्य यथाश्रुत्युत्थानम्। अस्य चार्थ इन्द्रियपञ्चत्वविरोधः। न, विरोधात्। अर्थबहुत्वादिन्द्रियबहुत्वं प्राप्नोतीति ब्रुवाणो यदभ्युपगतमेकमिन्द्रियमिति तद् बाधते। नासाधनात्। न मयार्थबहुत्वादिन्द्रियबहुत्वं साध्यते यतो मे विरोधः स्यात्, अपि तु भवता इन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति यत् साधनमुक्तम् तस्य मया विरोधो देश्यते। यदीन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणि भवन्ति, इन्द्रियार्थबहुत्वाद् बहूनीन्द्रियाणीति प्रसज्यत इति॥ ५६ ॥

**गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥३।१।५७॥**

अस्योत्तरद्वारकं सूत्रम्[5]

**गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः।**

१. °सिद्धौ C २. कारणान्तरा° C ३. क्रियावसायात् क्रियायां C ४. °सिद्धौ C
५. उद्धारकं C

इति। गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था गन्धादयो न स्वकरणव्यतिरेकेण करणान्तराणि प्रयोजयन्ति। यावत्सु गन्धत्वं वर्तते, तावतामेकसाधनसाध्यत्वात्। यः पुनरपरजातिभेद इष्टानिष्टोपेक्षणीयत्वादिः, नासौ करणान्तरं प्रयोजयति। एवं सर्वत्र। शेषं **भाष्ये** ॥५७॥

**विषयत्वाव्यतिरेकादेकत्वम् ॥३।१।५८॥**

यदि सामान्यं संग्राहकं प्राप्तमिन्द्रियाणां

**विषयत्वाव्यतिरेकादेकत्वम्।**

अस्याप्यर्थोऽविरोध एव। नोक्तोत्तरत्वात्। इन्द्रियार्थपञ्चत्वादित्यस्यार्थेनोक्तोत्तरमेतत् ॥५८॥

**न, बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥३।१।५९॥**

अस्य चार्थस्य ज्ञापनार्थं

**न, बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः।**

इति सूत्रम्। तत्र बुद्धय एव लक्षणानीत्यस्यार्थो वर्णित इन्द्रियार्थपञ्चत्वादिति। नानेन्द्रियं भिन्नाधिष्ठानत्वात्। यस्याधिष्ठानं भिन्नं तदनेकं दृष्टं यथा घटादि। अधिष्ठानभेदश्चेन्द्रियाणामस्ति। तस्मात् नानेति। अधिष्ठानभेदोऽसिद्ध इति चेत्? नासिद्धोऽन्धबधिराद्यभावप्रसङ्गादिति। यस्य पुनरधिष्ठानभेदः, तस्यैकाधिष्ठानविनाशे अधिष्ठानान्तराश्रयस्येन्द्रियस्यावस्थानमिति न दोषः। गतिभेदादपीन्द्रियभेदो भिन्नगतित्वादिति प्रयोगः पूर्ववत्[1]।

---

१. गतिभेदादित्यस्य भिन्न...प्रयोगः प्रसङ्गः पूर्व॰ C

आकृतिः परिमाणमियत्ता। स्वस्थानप्रमाणानि घ्राणरसनस्पर्शनानि। चक्षुर्बहिर्विनिःसृतं विषयव्यापि तन्महत्। श्रोत्रं त्वाकाशम् तदधिष्ठाननियमेन प्रवर्तते। धर्माधर्मसंस्कृतया[१] इष्टानिष्टोपेक्षणीयशब्दसाधनभूतया कर्णशष्कुल्या य आकाशस्य संबन्धः, तत्संबन्धानुविधाय्याकाशम्, न विवरान्तरेणास्यादिना शब्दमुपलम्भयति[२]। नान्यत्रेति तदुपकारप्रतीकारभेदाद्वोपक्रियते प्रतिक्रियते चेति। न पुनराकाशं नित्यत्वादुपक्रियते न प्रतिक्रियत इति। प्रकृष्टाप्रकृष्टश्रोत्रभेदोऽप्यत एव।

जातिरिति योनिं प्रचक्ष्महे[३]। पञ्च खल्विमा इन्द्रिययोनयः पृथिव्यादीनि भूतानि इन्द्रियाणां योनय इति। योनिस्तादात्म्यं न पुनस्तत्कार्यत्वमाकाशेऽसंभवादिति तन्नित्यत्वात्[४] ॥५९॥

**भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥३।१।६०॥**

कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति? न, उक्तोत्तरत्वात्। नाव्यक्तप्रकृतीनीन्द्रियाणीत्युक्तोत्तरमेतत्।

**भूतगुणविशेषोपलब्धेस्तादात्म्यम्।**

भूतगुणविशेषा गन्धरसरूपस्पर्शशब्दा विशेषकत्वाद् विशेषा इत्युच्यन्ते। यस्माद् गन्धेन[५] पृथिव्यबादिभ्यो विशिष्यते[६], रसादिभिरबादय इति। दृष्टो हि बाह्यानामुभयपक्षसंप्रतिपन्नानां पृथिव्यादिभूतानां स्वगुणाभिव्यक्तिनियमः। अस्ति च घ्राणादिभिरपि गन्धादिव्यक्तिनियमः। तेन भूतगुणविशेषोपलब्धेर्भूतप्रकृतीनीन्द्रियाणीति। किं किमात्मकमिति? येन यद्गुणाभिव्यक्तिः। तत्र पार्थिवं घ्राणं गन्धाभिव्यक्तिहेतुत्वात्, बाह्यपार्थिववदिति। एवं शेषेषु॥ ६०॥

॥इन्द्रियनानात्वप्रकरणम्॥

१. संहितया C २. °लक्षयति C ३. प्रचक्षते C ४. आकाशे संभवति नित्य° C
५. यथा गन्धवत्त्वादिना C ६. भिद्यते C

# [ अर्थपरीक्षाप्रकरणम् ]

**गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः ॥३।१।६१॥**

**अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः ॥३।१।६२॥**

गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टम्। उद्देशश्च नियोगविकल्पसमुच्चयैः समानः। तत्र नियोगः एकैकगुणत्वम्। विकल्पः कस्यचिदेकः कस्यचिद् द्वावित्येवमादिः। समुच्चयः सर्वे सर्वत्र। अतो विशेषणार्थम्

**गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः।**
**अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः।**

नियमार्थे सूत्रे। चत्वारः पृथिव्याः। एकैकशोऽपकर्ष उत्तरेषु स्पर्शपर्यन्तानामिति विभक्तिविपरिणामः। तेन किं कृतं भवति? स्पर्शपर्यन्तानां गुणानां विनियुक्तानां य उत्तरः स आकाशस्येति। आकाशस्योत्तरः शब्दः। उत्तर इत्ययं तरब्निर्देशो न युक्तः, द्वयोर्दृष्टत्वात्। इह पुनः प्रकर्षवाचित्वे सत्युत्तम इति स्यात्। नायं भोस्तरब्निर्देशः, अपि तु पराभिधानमेतत्। यदुक्तं भवति पर इति, तदुक्तं भवत्युत्तर इति। [१]तरब् वा स्पर्शस्य विवक्षिततत्वात्। भवतु वा तरब्निर्देशः। ननूक्तमुत्तम इति प्राप्नोति। न, स्पर्शस्य विवक्षिततत्वात्। गन्धादिभ्यः परः स्पर्शः। परादयं पर इति यावदुक्तं भवति, तावदिदमुक्तं भवति उत्तर इति ॥ ६१-६२॥

**न सर्वगुणानुपलब्धेः ॥३।१।६३॥**

नायं गुणविनियोगः साधुः। कस्मात्? पार्थिवेन घ्राणेन पार्थिवानां गन्धादी-

१. तन्त्रं वेति सार्वत्रिकः पाठोऽसंलग्नत्वात् परित्यक्तः।

नामुपलब्धिप्रसङ्गात्। एवमाप्येन रसनेन त्रयाणाम्। तैजसेन चक्षुषा द्वयो-रिति॥ ६३॥

**एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ॥३।१।६४॥**

कथं तर्हीमे गुणा विनियोक्तव्याः?

**एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः।**

यस्मादेकैकगुणानि भूतानि, तस्मादेकैकगुणग्रहणमिति एकैकश्येनेति सौत्रो निर्देशः। कथं तर्ह्यनेकगुणानि भूतानि गृह्यन्त इति? संसर्गात् त्वनेकगुणग्रहणम्। संसृष्टाबादिभिः पृथिवी। तस्मादनेकगुणा गृह्यत इति। एवं शेषेषु ॥ ६४॥

**विष्टं ह्यपरं परेण ॥३।१।६५॥**

[१]संयोगस्त्वप्रतिषिद्धो मिथः पञ्चानां चेति। नियमस्तर्हि न प्राप्नोति पृथिव्यां चत्वारो नेतरेषु संसर्गस्यानियमादिति? न न प्राप्नोति। [२]कस्मात् ?

**विष्टं ह्यपरं परेण।**

अपरं परेण विष्टमबादिना, नापरेण पृथिव्यादिना परमबादिविष्टम्। विष्टत्वं [३]संयोगविशेष॥६५॥

**न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥३।१।६६॥**

**न...त्वात्** इति। नेति त्रिसूत्रीमनन्तरोक्तामनेन सूत्रेण प्रत्याचष्टे। यस्यैकैकगुणानि भूतानि, तस्य तैजसमेव द्रव्यं रूपवत्त्वात् प्रत्यक्षं प्राप्नोति। न पार्थिवमाप्यं वा अरूप-

१. संसर्गस्त्व॰ C २. यस्मात् J ३. संयोगः J

त्वात्। अस्य सूत्रस्य विकल्पतोऽनेकः सूत्रार्थः [१]प्रकल्पत इति **भाष्ये** वर्णितम्॥ ६६॥

## पूर्वं पूर्वं गुणोत्कर्षात्तत्तत् प्रधानम्॥३।१।६७॥

तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य

**न सर्वगुणानुपलब्धेः**

इति यद् देशितं तत् समाधीयते।

**पूर्वं पूर्वं गुणोत्कर्षात्तत्तत् प्रधानम्।**

तस्मात् न सर्वगुणोपलब्धिः। घ्राणादीनामिन्द्रियाणां पूर्वं पूर्वमिन्द्रियं यस्मात् परस्मात् परस्मात् प्रधानम्। का प्रधानता? चतुर्गुणत्वादिका। को गुणोत्कर्षः? स्वगुणाभिव्यक्तिसामर्थ्यम्। येन गुणेन यद् द्रव्यमुत्कृष्यते स तज्जातीयाभिव्यञ्ज-कत्वादुत्कृष्टो भवति, यथा बाह्यानां द्रव्याणामिति। अस्ति चेन्द्रियाणामपि स्वगुणाभिव्यक्तिनियमः। तस्मात् न सर्वगुणोपलब्धिः। यः पुनर्गन्धगुणत्वाद् घ्राणं गन्धग्राहकमिति प्रतिजानीते, तस्य सर्वगुणोपलब्धिप्रसङ्गः॥ ६७॥

## तद्व्यवस्थानं तु भूयस्त्वात् ॥३।१।६८॥

कस्मात् पुनर्न सर्वं पार्थिवं घ्राणमिति? व्यवस्थानियमज्ञापनार्थम्।

**तद्व्य.....त्वात्।** इति सूत्रम्। किं पुनरिदं भूयस्त्वम्? अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुषसंस्कारकारितो भूयस्त्वम्। दृष्टो हि प्रकर्षे भूयस्त्वशब्दः। यथा लोके प्रकृष्टो विषयो भूयानित्युच्यते। तथा च पृथगर्थ-क्रियासमर्थानि पुरुषसंस्कारोपग्रहाद् विषौषधिमणिप्रभृतीनि द्रव्याणि निर्वर्त्यन्त इति॥ ६८॥

---

१. कल्प्यते C

**सगुणानामिन्द्रियभावात् ॥३।१।६९॥**

स्वगुणान्नोपलभन्त इन्द्रियाणि। कस्मादिति चेत्? केन कारणेन स्वान् गन्धादीन्[१], इन्द्रियाणि नोपलभन्त इति?

**सगुणानामिन्द्रियभावात्।**

सह गुणेन [२]इन्द्रियमिन्द्रियं भवति। निर्गुणं तु नेन्द्रियम्। अतो न गृह्णाति॥ ६९॥

**तेनैव तस्याग्रहणाच्च ॥३।१।७०॥**

यदि पुनरिन्द्रियस्य सहकारी च गन्धः स्याद् ग्राह्यश्चेति?

**तेनैव तस्याग्रहणाच्च।**

यदीन्द्रियं स्वगन्धं गृह्णीयात् ते, नासाविन्द्रियगन्धः। अथेन्द्रियगन्धः? नेन्द्रिय-ग्राह्यः स्यात्। गन्धं च गृह्णदिन्द्रियमात्मानं गृह्णीयात् आत्मा ह्यस्य गन्ध इति। न चात्मसाधनं करणमस्तीति दृष्टविरोधः। न चैतत् प्रत्यक्षं यदुत घ्राणगन्धो घ्राणग्राह्य इति। कस्मात् पुनरिदं न देश्यते घ्राणेन घ्राणं कस्मात् न गृह्यत इति? न देश्यते, अदृष्टत्वात्। न दृष्टं घ्राणेन घ्राणस्य ग्रहणमित्यतो न देश्यत इति। तुल्यं घ्राणेन स्वस्य गन्धस्याग्रहणमिति, एतदप्यदेशनीयम्। स्वगुणान् नोपलभन्त इन्द्रियाणि, कस्मादिति? तुल्यो ह्युभयत्र[३] प्रतिपत्तिहेत्वभावः ॥७०॥

**न शब्दगुणोपलब्धेः ॥३।१।७१॥**

स्वगुणान् नोपलभन्त इन्द्रियाणीत्येतदयुक्तम्। स्वगुण उपलभ्यते श्रोत्रेण[४] शब्द इति ॥ ७१॥

१. स्वानि गन्धादीनि C  २. गुणेन इन्द्रियं भवति C  ३. प्रतिपत्ति॰ om C
४. आकाशेन for श्रोत्रेण C

## तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥३।१।७२॥

सत्यमुपलभ्यते। न पुनः श्रोत्रं सशब्दमिन्द्रियमिति। यथेतराणि सगुणानीन्द्रियाणि नैवमाकाशमिति। कस्मात्? शब्दस्येतरगुणवैधर्म्यात् आकाशस्य [1]चेतरद्रव्यवैधर्म्यात्। अस्यार्थस्य ज्ञापनार्थम्

**तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात्।**

इति सूत्रम्। न शब्दः शब्दस्य व्यञ्जकः। नाकाशं सगुणमिन्द्रियमिति। किं पुनरिदं श्रोत्रम्? आकाशं परिशेषात्। तत्रात्मा तावत् न श्रोत्रम्, कर्तृत्वात्। श्रोता चात्मा न श्रोत्रम्[2]। मनः श्रोत्रं[3] भविष्यतीत्यपि न, मनसः श्रोत्रत्वे बाधिर्याभावः। सर्वविषयत्वाच्च मनसः, सर्वविषयं श्रोत्रं प्राप्नोति। पृथिव्याद्यपि न श्रोत्रम्, घ्राणादिषु[4] विनियोगात्। घ्राणादिषु विनियुक्ताः पृथिव्यादयः। श्रोत्रभावे च घ्राणादीनां तद्वैकल्ये शब्दानुपलब्धिप्रसङ्गः। त्वचः श्रोत्रभावे बधिराभावः सर्वोपघाते च प्रायणम्। दिक्कालयोः श्रोत्रभावे च शब्दस्यान्यगुणत्वादग्रहणप्रसङ्गः। तद्गुणत्वमेवेति चेत्? नाम्नि विवादः। यस्य शब्दो गुणस्तदाकाशम्। [5]भवतां तु संज्ञामात्रं भिद्यते तौ दिक्कालाविति। आकाशप्रत्याख्यानं चान्यगुणत्वात् शब्दस्य। यदि तु शब्दो दिक्कालगुणो भवति आकाशं तर्हि प्रत्याख्यातम्। न हि शब्दमन्तरेण आकाशास्तित्वे लिङ्गमस्ति। यथा दिक्कालयोः परापरादिलिङ्गमिति। न च द्रव्यान्तरं शिष्यते। न च गुणानां श्रोत्रभावो युक्तः, न च कर्मणाम्, न च सामान्यविशेषसमवायानां सामर्थ्यानुपलब्धेः। न चेदं श्रोत्रं नास्ति शब्दोपलब्धिलिङ्गम्। शिष्यते चाकाशम्। तस्मादाकाशं श्रोत्रमिति॥ ७२॥

॥अर्थपरीक्षाप्रकरणम्॥

॥इति औद्द्योतकरे न्यायवार्त्तिके तृतीयाध्यायस्य [6]प्रथमाह्निकम्॥

१. च om C २, ३. श्रवणम् J ४. घ्राणादिभावेन C ५. भवता सं॰ C ६. आद्यम् C

# तृतीयाध्याये द्वितीयाह्निकम्

## [ बुद्ध्यनित्यताप्रकरणम् ]

**कर्माकाशसाधर्म्यात् संशयः ॥३।२।१॥**

परीक्षितानीन्द्रियाण्यर्थाश्च। बुद्धेरिदानीं परीक्षाक्रमः। सा किमनित्या नित्या वेति धर्मविचारः, सत्त्वस्याधिगतत्वात्। तस्यां च संशयमुपपादयति।

**कर्माकाशसाधर्म्यात् संशयः।**

उभाभ्यां साधर्म्यमस्पर्शवत्त्वम्। विशेष [१]उपजनापायधर्मकत्वं विपर्ययश्च बुद्धौ नोपलभ्यते। ततः संशयः ॥१॥

**विषयप्रत्यभिज्ञानात् ॥३।२।२॥**

अनुपपन्नरूपः खल्वयं संशयः, सर्वशरीरिणां प्रत्यात्मवेदनीयत्वात्। सर्वशरीरिणां [२]प्रत्यक्षमेतत् यदुतानित्या बुद्धिरिति। त्रैकाल्यव्यक्तेश्च। बुद्धौ त्रैकाल्यं व्यज्यमानं दृष्टम्, जानामि ज्ञास्याम्यज्ञासिषमिति, न चोपजनापायावन्तरेण त्रैकाल्यव्यक्तिः। न ह्यनुपजनापायधर्मकेषु आकाशादिषु त्रैकाल्यं व्यज्यते। न च विशेषदर्शने सति युक्तः संशयः। तस्मात् संशयप्रक्रियानुपपत्तिरिति। शेषं **भाष्ये**।

दृष्टिप्रवादोपलम्भार्थं तु प्रकरणम्। न बुद्धेरनित्यत्वं प्रतिपाद्यम्, अपि तु परस्य दर्शनं निवर्तनीयमिति। एवं हि पश्यन्तः प्रवदन्ति **साङ्ख्याः** नित्या बुद्धिरिति। साधनं च प्रचक्षते

**विषयप्रत्यभिज्ञानात्।**

---

१. उपजननापाय॰ C    २. प्रत्यात्मवेदनीयमे॰ C

इति। यं पूर्वमज्ञासिषं तमिमं जानामीति ज्ञानयोः समानेऽर्थे प्रतिसन्धानमवस्थिताया बुद्धेरुपपन्नम्। बुद्धिनानात्वे तु प्रत्यभिज्ञानानुपपत्तिः, यथा पुरुषान्तरबुद्धिषु ॥२॥

**साध्यसमत्वादहेतुः ॥३।२।३॥**

यथैव बुद्धेर्नित्यत्वं साध्यं तथा बुद्धेः प्रत्यभिज्ञानमपि साध्यम्। कस्मात्? चेतनधर्मस्य करणेऽनुपपत्तेः। पुरुषधर्मः खल्वयं ज्ञानं दर्शनमुपलब्धिर्बोध इति। चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानाति। तस्यैतस्माद्धेतोर्नित्यत्वं युक्तम्।

क्रियानाधारत्वाच्च करणस्य। न हि करणं क्रियाया आधारो भवति, उपलब्धिश्च क्रिया। सा च न करणे [१]भवितुमर्हतीति। स्वक्रियाधारत्वादयुक्तमिति चेत्? अथ मन्यसे सर्वं कारकं स्वक्रियाया आधारो भवतीत्यतोऽयुक्तं करणं क्रियाया नाधार इति। सत्यम्, भवति स्वक्रियाधारो न पुनः स्वक्रियातः करणव्यपदेशः। स्वक्रियासु सर्वं कारकं कर्तृ भवति, करणभावं चाश्रित्य बुद्धौ विचारः। तस्मादयुक्तमेतत्।

सर्वकर्तृत्वप्रसङ्ग इति चेत्? यदि पुनः स्वक्रियानिमित्तकः कर्तृव्यपदेशः, सर्वं कारकं कर्तृ प्राप्तम्। सत्यमेवमेतत्। नाभ्युपगमा एव दोषत्वेन देश्यन्त इति। कर्तृकरणादिव्यपदेशश्च कथम्? प्रधानक्रियापेक्षः कर्तृकरणादिव्यपदेशः, यदर्थं [२]कारकमुपादीयते सा प्रधानक्रिया। [३]तस्याः साधनभावे सामान्येन विवक्षिते, भेदे चाविवक्षिते कारकमित्यनेन शब्देनाभिलप्यन्ते कर्त्रादयः। यदा तु भेदो विवक्षितः, तदा कर्तृकर्मकरणशब्दवाच्यानीति। कारकशब्देनापि सामान्येनाभिधीयमानेषु कारकेषु यः स्वगतो विशेष इतरेतरव्यावृत्तः, सोऽभिधीयते, अन्यस्यासंभवात्।

प्रधानक्रियाव्यपेक्षं तु कारकाणां कर्त्राद्यभिधानमिति। तत्र यदपराप्रयोज्यमितरकारकप्रयोक्तृ च तत् कर्तृकारकम्। एवं शेषेषु कारकशब्दाः पूर्ववद्[४] वक्त-

---

१. वर्तितुम॰ C  २. करणमु॰ C  ३. तस्यां च C  ४. २.१.१६ भा. वा. टी.

व्या:। यद्यन्यकारकप्रयोज्यत्वं कर्तृत्वम्, नन्वयमपि कारकोपादानेन प्रयुज्यते? न प्रयुज्यते फलस्य प्रयोजकत्वात्। फलं कर्तारं प्रयोजयति, न कारकं करणादि। न च फलं कारकमिति तेषां तन्नान्तरीकमुपादानम्। न हि करणादिकारकोपादानमन्तरेण क्रिया संभवतीति तन्नान्तरीयकत्वात् करणादीण्युपादीयन्त इति। तस्मात् चेतनधर्मः करणे न संभवतीति।

उपेत्य प्रत्यभिज्ञानमन्तःकरणे तस्यैकानेकव्यावृत्तेरसाधारणता। न हि प्रत्यभिज्ञानमेकत्वे दृष्टम्, न नानात्व इति प्रत्यभिज्ञानस्वरूपावधारणे च सति विरुद्धः। यदा चेदं प्रत्यभिज्ञानं निरूप्यते तदा बुद्धिभेदं प्रतिपादयति। कथमिति? प्रत्यभिज्ञानं हि नामाद्यप्रत्यक्षनिरोधे द्वितीयदर्शने प्रागाहितसंस्काराभिव्यक्तौ स्मृतिपूर्वकं तृतीयं दर्शनम्। न च बुद्ध्यभेदवादिनो द्वितीयमपि तावद् दर्शनं संभवति कुतस्तृतीयमिति?

प्रत्ययभेद इति चेत्? अथ मन्यसे, अवस्थिताया बुद्धेः प्रत्ययास्तिरोभवन्ति व्यज्यन्ते च। तत्राद्यदर्शनतिरोभावे प्रत्ययान्तराविर्भावे च प्रत्यभिज्ञानमिति। तन्न युक्तम्, तद्व्यतिरेकेण बुद्धिस्वभावानवधारणात्, यां तां प्रत्ययव्यतिरिक्तां बुद्धिं भवन्तः कल्पयन्ति, तस्याः कः स्वभाव इति वक्तव्यम्। अस्माकं तु प्रत्ययमात्रं बुद्धिः। अर्थग्रहणं हि बुद्धिरिति। दर्शनदृष्टस्य स्पर्शनेन प्रत्यभिज्ञानात् नानात्वे प्रत्यभिज्ञानमिति विरुद्धः प्रदीपान्तरदृष्टस्य च[१] प्रदीपान्तरेणेति।

यदि बुद्धिरध्यवस्यति, अथ बुद्धौ वर्तमानेन ज्ञानेन चेतनः किं करोति? चेतयत इति चेत्? कश्चेतयते? यदि यस्याध्यवसायः स चेतयते, विरुद्धमेतत्। अथात्मा चेतयते? कथं बुद्धौ वर्तमानेन प्रत्ययेनात्मा चेतयते? न ह्यन्यत्र वर्तमानया क्रियया अन्यस्य तद्वत्ता भवति।

अथ पुरुषश्चेतयते, बुद्धिर्जानीत इति? नेदं ज्ञानादर्थान्तरमुच्यते। यावदुक्तं भवति चेतयते, तावदुक्तं भवति जानीत इति। बुद्धिर्ज्ञापयतीति चेत्? अथ मन्यसे

१. च om C

बुद्धिर्ज्ञापयत्यात्मा जानीत इति। अद्धा, जानीते पुरुषो बुद्धिर्ज्ञापयतीति। अध्यवसायचेतनयोश्च स्वभावभेदो वक्तव्य:। भवताप्येकत्वं वक्तव्यम्। देशकाल-स्वभावाभेदात्। यस्मादविदेशमविकालं च बुद्ध्याध्यवसितम् आत्माध्यवस्यतीति। स्वभावाभेदोऽसिद्ध इति चेत्? अथ मन्यसे सत्यम्, अभिन्नकालमभिन्नदेशं च बुद्ध्याध्यवसितमात्माप्यध्यवस्यतीति, न [१]पुन: यैव चेतना स एवाध्यवसाय इति। न, प्रतिशरीरमनेकपुरुषप्रसङ्गात्। यद्यन्यश्चेतयिता अन्यश्चाध्यवसाता भवति, अन्य: प्रतिजानीते, अन्य: पश्यति, अन्य: शृणोति मन्तेत्येवमादिषु[२] पुरुषान्तराणि खल्विमानि द्रष्टा श्रोता मन्तेति, नैकस्यैते धर्मा इति। तत्र भवतां किं वक्तव्यम्? अभिन्नार्था एते शब्दा इत्येतद् वक्तव्यम्। अभिन्नार्थाश्चेत्[३] शब्दा भवन्ति, नन्वत्राप्यर्थो न भिद्यते चेतनोऽध्यवसाता मन्ता बोद्धेति। तस्मादयुक्तमेतत् बुद्धिरध्यवस्यत्यात्मा चेतयत इति।

यदि पुनरिदं प्रत्यभिज्ञानं मनसोऽनित्यत्वसाधनं स्यात्? न युक्तमेवं भवितुम्, मनसो नित्यत्वस्याभ्युपगमात्। अभ्युपगम्यते मनसो नित्यत्वमिति तत्र साधन-मनर्थकम्। अनेकान्ताच्च, न च प्रत्यभिज्ञानात् करणैकत्वं सिध्यति, दृष्टं करणभेदेऽपि प्रत्यभिज्ञानं ज्ञातुरेकत्वात्। दर्शनदृष्टस्य स्पर्शनेन प्रत्यभिज्ञानात्, प्रदीपदृष्टस्य च प्रदीपान्तरेणेति ॥३॥

**न, युगपदग्रहणात् ॥३।२।४॥**

यच्चेदं मन्यते बुद्धेरवस्थिताया यथाविषयं वृत्तय: प्रादुर्भवन्ति। वृत्तिश्च वृत्तिमतो नान्येति। एतच्च

**न, युगपदग्रहणात्।**

वृत्तिमतोऽवस्थानाद् वृत्तेरवस्थानमिति सूत्रार्थ:॥४॥

---

१. पुनरचेतनात्मैवाध्य॰ C २. शृणोतीत्येवमा॰ J ३. ॰र्थास्तदेते C

**अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥३।२।५॥**

वृत्तीनामपगमे वृत्तिमतोऽप्यपगम इति सूत्रार्थः ॥५॥

**क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥३।२।६॥**

अविभु चैकं मनः पर्यायेणेन्द्रियैः संबध्यत इति

**क्रमवृत्तित्वादयुगपद्ग्रहणम्।**

वृत्तिवृत्तिमतोर्नानात्वादिति सूत्रार्थः। वृत्तिवृत्तिमतोरेकत्वे प्रादुर्भावतिरोभावयोरभाव इति ॥६॥

**अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥३।२।७॥**

**अ .... त्** इति वृत्तिवृत्तिमतोर्भेदे सति उपपद्यत इति, एकत्वे त्वनर्थको व्यासङ्ग इति ॥७॥

**न, गत्यभावात् ॥३।२।८॥**

[१]विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियैः संयोगः

**न, गत्यभावात्।**

व्याप्तान्यन्तःकरणेनेन्द्रियाणीति सूत्रार्थः। व्यापित्वे युगपदनेकेन्द्रियसंबन्धाद् युगपद्ग्रहणप्रसङ्गो दोषः।

अणावपि मनस्येकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्ग इति चेत्? करणत्वात् न युगपद्ग्रहणम्। ममाप्येवं कस्मात् न परिहारः? न [२]करणभेदे दृष्टत्वात्। यानि

१. परपक्षे दोषमाह J margin २. कारण॰ C

खलु भिन्नानि [१]करणानि तान्येकेनैवाधिष्ठायकेनाधिष्ठितानि युगपत्प्रवर्तमानानि दृष्टानि। यथोभयहस्ताधिष्ठिते वास्यौ प्रवर्तेते, तथा चेन्द्रियाणि व्यापकेनान्तःकरणेनाधिष्ठीयन्त इति युगपत् प्रवृतिः प्रसक्ता। तत्प्रसक्तौ च युगपद्ग्रहणप्रसङ्ग इति।

गत्यभावाच्च विभुनोऽन्तःकरणस्य प्राप्त्यर्थस्य गमनस्याभावात्। [२]नायुगपत्प्रययोत्पत्तौ प्रमाणमस्ति येन प्रमाणेन प्रतिषिद्धमपि [३]प्रत्ययायौगपद्यं प्रतिपद्येत। [४]यथा किञ्चित् प्रतिषिद्धमपि प्रतिपद्यते। यथा चक्षुषो गतिः प्रतिषिद्धा केनचित् सन्निकर्षविप्रकर्षयोस्तुल्यकालग्रहणात्। यस्मात् सन्निकृष्टं पाणिं विप्रकृष्टं च चन्द्रमसमेकस्मिन् काले चक्षुषा प्रतिपद्यते तस्मान्न गतिमच्चक्षुरिति। प्रतिषिद्धापि सती गतिर्व्यवधानप्रतिघातेनानुमीयत इति। न च युगपत् प्रत्ययोत्पत्तौ प्रमाणमस्ति।

सोऽयं नान्तःकरणे विवादो न तस्य नित्यत्वे। क्व तर्हि विवादः? तस्य विभुत्वे। तच्च प्रमाणतोऽनुपलब्धेर्नास्ति। न ह्यन्तःकरणस्य विभुत्वप्रतिपादकं प्रमाणमस्ति, एकमन्तःकरणं नाना चेमाश्चक्षुर्विज्ञानाद्यात्मिका वृत्तय इति एतच्च वृत्तिवृत्तिमतोरेकत्वे अनुपपन्नम्। यस्य पुनर्वृत्तिवृत्तिमतोर्नानात्वं तस्यान्तःकरणसाधनश्चक्षुरादिसाधनश्चात्मा अर्थानुपलभत इति युक्तम्। एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः पुरुषो जानीते नान्तःकरणमिति। कः पुनरयं व्यासङ्गः? अभीष्टविषयोऽनेकविज्ञानोत्पादः स च पुरुषस्य नान्तःकरणस्य। यः पुनरयं सन्निधानासन्निधानलक्षणोऽन्तःकरणस्य व्यासङ्गः सोऽनुज्ञात इति ॥८॥

## स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः ॥३।२।९॥

एकमन्तःकरणं नाना वृत्तय इति नैतत् न्यायवित्संचक्षाणकः प्रतिपत्तुमर्हति। यथैवान्तःकरणमेकं तथैवैका वृत्तिरिति। दृष्टविरोध इति चेत्? अथ मन्यसे यदि

१. कारण॰ C २. न वा युग॰ C ३. प्रत्ययायौग॰ C ४. यथाकथञ्चित् C var

चान्तःकरणात् न वृत्तिर्भिद्यते न तु दृष्टं विरुध्यते रूपं रसो गन्धः स्पर्श इति दृष्टः प्रत्ययभेदो न स्यात्? न न स्यात्, विषयभेदानुविधानात्। वृत्तिरभिन्नापि विषयभेद-मनुविधीयमाना भिन्नेव ख्याति। यथोपधानभेदमनुविधीयमानं स्फटिकादिद्रव्यं भिन्नमिव प्रकाशते। अस्य चार्थस्य ज्ञापनार्थम्

**स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः।**

इति सूत्रम्। न, अनेकान्तात्। उभयथा खल्वयं नानात्वाभिमानो दृष्टः, नानाभूतेषु च गन्धादिषु, अभिन्ने च स्फटिक इति।

यथाश्रुति सूत्रे हेत्वभावो दृष्टान्तमात्रत्वात्। दृष्टान्तमात्रमेतत्, नात्र हेतुरस्ति इति विकल्पानुपपत्तेश्च। यश्चायं दृष्टान्तः स्फटिकवदिति, विकल्पोऽत्र किमयं स्फटिक उपधानभेदेन भिद्यते उत नेति? किं चातः? यदि भिद्यते न दृष्टान्तः। अथ न भिद्यते, नानात्वाभिमानः कथम्? यद्युपधानभेदात्, भिन्नमुपधानमिति कथं प्रतिपद्यते? यदि प्रत्ययभेदात् व्याघातः। अभिन्ना वृत्तिः, प्रत्ययश्च भिन्न इति व्याहतं प्रत्ययपर्यायत्वाद् वृत्तेः।

अथ भवतां वृत्तीनां भेदे किं प्रमाणम्? ज्ञानानां क्रमेणोपजनापायदर्शनम्। क्रमेण ज्ञानान्युपजायन्त अपयन्ति चेति दृश्यते। एकानेकविषयत्वाच्च प्रत्यय-नानात्वाभिमानस्य एकानेकविषयाधिगतिः कथम्? एकस्मिंश्च विषये नानात्वा-भिमानः स्फटिके दृष्टः। नानाभूतेषु च गन्धादिषु नानात्वाभिमानो दृष्टः। तेन नानात्वाभिमानस्योभयथा दृष्टत्वादिदमेकमिदमनेकमिति न युक्तः प्रत्यय इति। यश्चायमभिन्ने स्फटिके भेदप्रत्ययः, सोऽपि प्रत्ययभेदमन्तरेण न युक्तः। न हि प्रत्ययाभेदवादिनः स्फटिके नीलादिप्रत्ययभेदो युक्त इति। स्फटिके नीलादि-प्रत्ययोऽसंबन्धात् न युक्तः। न हि नीलं द्रव्यं चक्षुःसन्निकृष्टमिति। अथ सन्निकृष्टम्, तदेव नीलं न स्फटिक इति स्फटिकसमानाधिकरणः स्फटिके नीलप्रत्ययो न युक्तः। न, नैरन्तर्यदर्शनात्। नैरन्तर्येणावस्थिते स्फटिकनीलद्रव्ये

चक्षुषा सन्निकृष्येते। ततः सन्निकर्षात् नीलगुणाध्यारोपेण स्फटिके मिथ्याप्रत्ययो नील इति यथा सान्तरेष्वन्तरालादर्शनात् संयुक्तप्रत्यय इति।

यस्य च प्रत्ययो न भिद्यते तस्य त्रीणि प्रमाणानीति शास्त्रं व्याहन्यते। न हि प्रत्ययाभेदे प्रमाणभेदः संभवति। विषयभेदात् त्रित्वमिति चेत्? अथ मन्यसे विषयस्त्रेधा भिन्नः, तेनानुरञ्जितः प्रत्ययस्त्रेधैव भवति? तन्न युक्तम्, प्रमाणाभेदे विषयभेदानधिगतेः। न हि प्रमाणभेदमन्तरेण विषयभेदोऽधिगन्तुं शक्यत इति। विषयतादात्म्यादिति चेत्? अथ मन्यसे विषय एवासौ तथा व्यवस्थितः तादात्म्यात् तथा ख्यातीति? तन्न, प्रमाणवैयर्थ्यप्रसङ्गात्। एवं च सति व्यर्थं प्रमाणम्। न विषयभेदं प्रमाणभेदोऽवगमयति। विषयस्तु तादात्म्यात् तथावतिष्ठत इति।

यथाध्यवस्यति तथा चेतयत इति च व्याघातः, अप्रकारवत्त्वात्। प्रकारवत्येतद् युक्तम्, अप्रकारे न युक्तम्। बुद्धिस्तं प्रत्ययमुपलभत इति च विरोधोऽधिकरणाधेययोरभेदात्। यः प्रत्ययः सा बुद्धिरित्यधिकरणाधेययोरभेदः। एवं च सति बुद्धिस्थं प्रत्ययमुपलभत इति व्याहतम् ॥९॥

॥बुद्ध्यनित्यताप्रकरणम्॥

## [ औपोद्घातिकं क्षणभङ्गप्रकरणम् ]

### स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः ॥३।२।१०॥

स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमान इत्येतदमृष्यमाणः क्षणिकवाद्याह

**स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः।**

स्फटिकस्याभेदेनावस्थितस्यान्यत्वाभिमान इत्ययुक्तं क्षणिकत्वाद् व्यक्तीनाम्। क्षणिकत्वमुपचयापचयप्रबन्धदर्शनात्। यस्मात् शरीरादिषु पक्तिनिर्वृत्तं रसद्रव्यं

प्रतिक्षणमुपचीयते चापचीयते च, उपचयाद् व्यक्तीनामुत्पादः अपचयाद् व्यक्तिनिरोधः, तौ चोत्पादनिरोधावस्य कालान्तरेण दृष्टौ। अतोऽवगम्यते प्रतिक्षणमुपचीयते चापचीयते च शरीरमिति।

यस्य खलु प्रतिक्षणमुपचयापचयौ न दृष्टौ तस्य कालान्तरेणापि न भवतो यथा भूमेरपच्यमानायाः पाकजानामिति। पच्यमानभूमिपाकजवच्च प्रतिक्षणं विशेष इति। अस्य प्रयोगः, प्रतिक्षणं शरीरमन्यच्चान्यच्च भवति। बाह्यप्रत्ययाभेदे सत्यन्ते विशेषदर्शनात् पच्यमानभूमिपाकजवत्, अपच्यमानभूमिपाकजवच्चेति ॥१०॥

## नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा ॥३।२।११॥

तदिदमुपचयापचयप्रबन्धदर्शनं शरीरे दृष्टत्वात् शरीरस्यान्यत्वं साधयतु, न पुनरनुपलभ्यमानोपचयापचयविशेषाणां स्फटिकादीनामेतस्मादन्यत्वं सिध्यतीत्यहेतुः। यत्रोपलब्धिस्तस्यान्यत्वमिति चेत्? अथ मन्यसे नैवास्माभिरुपचयापचयप्रबन्धदर्शनेन सर्वभावानां क्षणिकत्वं साध्यते, अपि तु यत्र तदस्ति तस्मिन् क्षणिकत्वमिति? सत्यम्, यस्य यस्योपचयापचयप्रबन्ध उपलभ्यते, तस्य तस्यान्यत्वमिति, न तु क्षणिकत्वम्। उपचयापचयप्रबन्धदर्शनं चान्यथाभवदहेतुः क्षणिकत्वे। कथमन्यथा पूर्वशरीरावयवसहिता आहारावयवाः[१] पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यमानाः शरीरान्तरमुत्पादयन्तीति युक्तो भेद इत्यहेतुरेषः। तुल्यं पक्षप्रतिज्ञानमिति चेत्? अथ मन्यसे अपूर्वाहारावयवोपयोगे[२] सति शरीरावयवाः शरीरान्तरमारभन्ते पूर्वव्यूहपरित्यागेन, न पुनः क्षणिकत्वादन्यत् जातमित्यत्र को हेतुरिति? नासाधनात् न मया आहारावयवोपयोगात्[३] शरीरस्यान्यता साध्यते, अपि तु भवता विशेषदर्शनात् शरीरस्यान्यत्वमभ्यधायि। ततश्च क्षणिकत्वमिति

१. पूर्वावयवाः आहारावयवसहिताः C  २. °वोपचयोपयोगे C  ३. आहारोपचयापचययो° C

विशेषदर्शनं क्षणिकत्वसाधनम्। तदस्माभिर्विशेषदर्शनमन्यथाभवत् क्षणिकत्वे न साधनमित्येतावन्मात्रमुच्यते। न साधनमभिधीयत इति ॥११॥

## नोत्पत्तिविनाशकारणोपलब्धेः ॥३।२।१२॥

अथावश्यं साधनं वक्तव्यम्, इदं ब्रूमः

**नोत्पत्तिविनाशकारणोपलब्धेः।**

उत्पत्तिकारणं विनाशकारणं चोपचयापचयौ वल्मीकघटादीनां दृष्टाविति तदुभयं क्षणिकत्वे न स्यात्। उपचय इति वृद्धिः [१]अवर्धत गौरिति, अपचय इति ह्रासः अपचितो गौरिति। उभयं चैतदवस्थितवस्तुविषयम्। न ह्यपूर्वं जायमानं वर्धत इत्युच्यते, नापि विनश्यदपचितमित्युच्यते। उपचयापचयोत्पत्तिविनाश-कारणोपलब्धेरिति सूत्रार्थः।

अथवा कारणमित्याधारोऽभिधीयते, कार्यमित्याधेयम्। न च क्षणिकत्वे आधाराधेयभावः संभवति। न चाधाराधेयभावमन्तरेण कार्यकारणभावः तस्मात् कार्यकारणभावोपलब्धेरक्षणिकत्वमिति। अस्य प्रयोगः। कार्यकारणे एककालानु-भाविनी आधाराधेयभावात् क्षीरकुण्डवदिति। क्षीरं कुण्डे वर्तते, तच्च कुण्डकाल-मनुभवति। तथा च कार्यं कारणे वर्तत इति। तस्मात् तदपि कारणकालमनुभवति। [२]न, आधाराधेयभावस्यासिद्धत्वादिति चेत्? अथ मन्यसे असिद्धः कार्यकारण-योराधाराधेयभावः, कार्यस्यानाधारत्वात्। नैव हि नः किञ्चित् कार्यमाधारवद् दृष्टमिति। नानेकान्तात्। नायमेकान्तः, सर्वं कार्यमनाधारमिति। यथोभयपक्षसंप्रति-पत्त्या रूपं कार्यं चाधारवच्च, स्पर्शस्तदाश्रय इति व्याघातः। यदि च रूपमनाश्रितं भवति, स्पर्शस्तदाश्रय इति व्याहतम्। अनेन च रूपदृष्टान्तेन यावत् समानकालतया साध्यते सर्वं तदेककालानुभावि भवतीति सिद्धः कार्यकारणभावः क्षणिकेष्वपि।

---

१. उपचितः C २. न om J

नाशोत्पादयोरेककालत्वात् तुलान्तनामोन्नामवदिति[१] चेत्? अथ मन्यसे कार्यकारणभावः क्षणिकेष्वपि संभवति, कारणविनाशसमकालं कार्यभावात्। यदा कारणं विनश्यति तदा कार्यमुत्पद्यत इति विनश्यच्च कारणमस्ति। कारणविनाशेन चाभिन्नकालः कार्योत्पादो यथा तुलाया अन्तयोर्नामोन्नामाविति? न, हेत्वर्थापरिज्ञानात्। न ब्रूमः क्षणिकेषु[२] कार्यकारणभावो नास्ति, अपि तु [३]क्षणिकेष्वाधाराधेयभावो भिन्नकालत्वात् कार्यकारणयोर्न युक्तः। कार्यं चानाधारमिति न दृष्टान्तोऽस्ति। अस्मत्पक्षे कार्यमाधारवदित्यस्ति दृष्टान्तो रूपादि। तुलाधारस्य च कर्मणो[४] नामोन्नामभावेनानभ्युपगमात्[५] युगपद्भावानुपपत्तिरेकत्वात्, यदि तावत् तुलामधिकृत्य ब्रवीषि तदैकं कर्म भ्रमणाख्यम् एकत्वाच्च युगपद्भावो न युक्तः। न ह्येकं युगपद् भवतीति। अथावयवकर्मणी, तयोरपि कार्यकारणभावेनानभ्युपगमात् किं केन संबध्यते? अथ युगपद्भावमात्रं विवक्षितमिति? युगपद्भावः कारणयौगपद्यात्। यावतामर्थानां कारणानि यौगपद्येन भवन्ति, तावतामेकस्मिन् काले भाव इति नामोन्नामावसंबद्धौ। कारणयौगपद्यं तु गुरुत्वप्रयत्नसंयोगा उन्नतेः, अवनतेरपि गुरुत्ववद्द्रव्यसंयोगानुगृहीतो रज्जुतुलासंयोगः। अथ न कर्मान्तरं संयोगं वा परः प्रतिपद्यते? तस्याप्युक्तमुत्तरं संयोगोऽर्थान्तरमिति, संयोगकारणत्वेन च कर्माप्यर्थान्तरमिति। यथा च भावानामुत्पत्तिविनाशकारणमुपलभ्यते नैवं स्फटिकस्य। न चानुपलभ्यमानं शक्यमभ्यनुज्ञातुमिति ॥१२॥

**क्षीरविनाशकारणानुपलब्धिवद् दध्युत्पत्तिवच्च तदुपपत्तिः ॥३।२।१३॥**

यथा क्षीरस्य विनाशकारणमनुपलभ्यमानमभ्यनुज्ञायते दध्नश्चोत्पत्तिकारणम्, एवं स्फटिकादिव्यक्तीनामनुलभ्यमाने उत्पत्तिविनाशकारणे अभ्यनुज्ञेये इति ॥१३॥

१. तुलान्तयोरुन्नमनावनमनवदिति C २. क्षणिकत्वे C ३. क्षणिकेषु om C
४. व्यापारस्य for कर्मणः C ५. ०भावानभ्युप० C

## लिङ्गतो ग्रहणान्नानुपलब्धिः ॥३।२।१४॥

यल्लिङ्गत उपलभ्यते न तन्नास्तीति। विपर्ययस्तु स्फटिकादिषु। न हि स्फटिकादिव्यक्तीनामपरापरोत्पत्तौ लिङ्गमस्तीति। न नास्ति, शीतोष्णस्पर्शभेदस्य नानात्वसाधनत्वात्। शीतोष्णस्पर्शभेदो नानात्वे दृष्टः, यथाग्रावुदके च। अस्त्ययं शीतोष्णस्पर्शभेदः स्फटिके, स तु निमित्तान्तराद् भवति। किं पुनर्निमित्तम् ? अप्तेजोऽवयवानुप्रवेशः। उदकावयवानुप्रवेशात्[१] शीतः, तेजोऽवयवानुप्रवेशाच्चोष्ण इति।

अप्तेजोऽवयवानुप्रवेशो न युक्तः। अल्पतरबहुतरानुप्रवेशे हेत्वभावात्। हेमन्ते ह्याकाशे पर्युषितानां काष्ठभूम्यश्मलोहानां शैत्यस्योत्तरोत्तरविशेषो दृष्टः। तथा पुनः ग्रीष्मातपसन्तापितानां तेषामेवौष्ण्यस्य। न हि तेष्वल्पतरबहुतरप्रवेशे कारणं पश्यामः। तस्मात् स्वगतमहाभूतविशेषापेक्षाण्यासादितबाह्यनिमित्तानि भूतान्येव तथा तथोत्पद्यन्त इति युक्तम्।

न युक्तम्। न ह्यप्तेजोऽवयवानुप्रवेशेन भूतस्वभावो निवार्यते, भूतस्वभावस्यो-भयपक्षसाम्यात् असाधनं भूतस्वभाव इति। विरुद्धश्चायं हेतुः। यद्यवयवानुप्रवेशं न प्रतिपद्यसे, खरस्नेहोष्णेरणात्मकानि भूतानीति[२] व्याहन्यते। कथमिति ? यत् कठिनं तदेकस्मिन् काले उष्णमपि भवतीति, यच्चोष्णं तत् कठिनं गच्छतीति। तदेकं वस्तु द्विस्वभावकं त्रिस्वभावकं च प्राप्नोति। यस्य पुनरवयवानुप्रवेशस्तस्यैष दोषो नास्ति, अन्यत्रावस्थितस्य संयुक्तसमवेतस्य औष्ण्यस्य ग्रहणादिति। विरुद्ध-श्चायं हेतुः कथम् ? एकस्य विशेषाभ्युपगमात्। एकं तद् वस्त्वेकस्मिन् काले कठिनमुष्णं गच्छति चेति त्रिस्वभावकम्। ततश्च विशेषदर्शनादित्ययं हेतुः

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः**

इति विरुद्धो भवति।

---

१. ०:। उदकावयवानुप्रवेशात् om C　२. द्र: अभिधर्मकोशः १/१२

अथ मन्यसे न विशेषमात्रं नानात्वं प्रतिपादयति। अपि तु विरोधी विशेषो नानात्वे साधनमिति? नाभिप्रायापरिज्ञानात्। वयमपि ब्रूमो न विशेषमात्रं नानात्वमपि तु भूतानां यो[१] विशेष इतरेतरव्यावृत्तो लक्षणत्वेनोपात्तः[२] स विरुद्धः यद्यविरुद्धः स्यात् न लक्षणं स्यात्। एकवृत्तित्वे वा लक्षणत्रयस्य तत्तद्वस्तु किमित्यभिधीयते। यदि तावत् पृथिवीति, तन्न युक्तम् , औष्ण्यस्य दर्शनात्। अथ तेजः, तदपि न युक्तम्, काठिन्यस्य दर्शनात्। एतेन वायुर्व्याख्यातः। सोऽयं हेतुभूतलक्षणं वा बाधते, नानात्वसाधनं वा न भवति। एतेन जले तापविशेषग्रहणं प्रत्युक्तम्। तत्राप्यौष्ण्यं स्निग्धतेरणभावश्च युगपद् भवन्तीति। जलेऽग्निरूपग्रहणप्रसङ्गस्तु न युक्तोऽभिभवात्। तन्न, सिद्धान्तापरिज्ञानात्। नायं सिद्धान्तो जलरूपेणाग्निरूपमभिभूयत इति। अपि तु तेजसश्चातुर्विध्यात् तत्र रूपाग्रहणम्। चतुर्विधं तेज इत्येतत् प्रतिपादितमिन्द्रियप्रकरण [द्रः पृ. ३५७] इति।

या चेयं प्रतिज्ञा अन्यश्चान्यश्च स्फटिक इति अस्याश्च कोऽर्थः ? यदि तावदन्यत्वमात्रं ततः सिद्धसाधनं भवति [३]स्तम्भादिभ्योऽन्यः स्फटिक इति। अथ स्फटिकान्तरादन्य इति, एतदपि तादृगेव। अथ पूर्वस्फटिकादन्यः ? कतमोऽसौ पूर्वः स्फटिको यतोऽयमन्य इति ? व्यवच्छेदस्याशक्यत्वादनभिधानं यथोभयपक्षसंप्रतिपन्ना रूपादयः तेभ्योऽन्यानन्यविचारो घटादेर्युक्तः। न पुनरिह पूर्वस्फटिकान्तरमुभयपक्षसंप्रतिपन्नं यतो वर्तमानः स्फटिकोऽन्यत्वेन[४] साध्यते। अथोभयपक्षसंप्रतिपन्नं पूर्वं स्फटिकान्तरम्? व्यर्थं साधनम्। अथ वर्तमानं स्फटिकमभ्युपगम्य यदतीतं स्फटिकान्तरं तदन्यदिति साध्यते? एवं सति शीतोष्णस्पर्शभेदो न तद्धर्मः, वर्तमानस्फटिकधर्मत्वात्। वर्तमानाच्च स्फटिकादन्यदतीतं स्फटिकान्तरमिति केनैतन्न संप्रतिपन्नम्? अथ तदेवान्यदिति? व्याघातः, तदेवान्यच्चेति। एवं यथा यथान्यत्वं विचार्यते, तथा तथा सिद्धसाधनं भवति सिद्धान्तं वा बाधत इति।

१. विरोधी for भूतानां यो C २. °नोपपन्नः C ३. कुम्भादिभ्यो° C ४. वर्तमान मन्यत्वेन C

अथायुगपत्कालप्रत्ययानामालम्बनं स्फटिको न भवतीत्ययं प्रतिज्ञार्थः। एतस्मिन्नपि प्रतिज्ञार्थे न दृष्टान्तोऽस्ति। न नास्ति। प्रदीपादिर्दृष्टान्त इति। प्रदीपोऽयुगपत्कालप्रत्ययानालम्बनं सदादिधर्मा चेति विद्यते दृष्टान्तः। नासिद्धत्वात्। असिद्धमेतत्, अयुगपत्कालप्रत्ययानामालम्बनाः प्रदीपादयः, तेषामनेकक्षणावस्थानात्। प्रदीपस्य तावत् स्वकारणसत्त्वासंबन्धकालः, सामान्याभिव्यक्तिकालः, अवयवकर्मकालः, तदनन्तरं तद्विनाशकालः, तदनन्तरं तत्संयोगविनाशकालः, ततो द्रव्यविनाश इति। यथा च प्रदीप एवं सर्वे भावाः स्वकारणसत्तासंबन्धाभिव्यक्तितद्विरोध्याश्रयविनाशानुविधानेन विनश्यन्ति, अकारणस्य विनाशस्यानभ्युपगमात्। न हि नः किञ्चित् निष्कारणं विनश्यतीति विनश्यदवस्थद्रव्यकर्मवदेतत् स्यात्? न, कर्मणोऽनभ्युपगमे विरोधात् अनभ्युपगमाच्च।

विनाशहेत्वभावादिति चेत्? अथ मन्यसे नात्र विनाशस्य कारणमस्ति, तस्मादुत्पन्नमात्र एवायं भावो विनश्यतीति? न, विकल्पानुपपत्तेः। विनाशस्य हेतुर्नास्तीति ब्रुवाणः पर्यनुयोक्तव्यः किमकारणत्वाद् विनाशो नास्ति, उताकारणत्वान्नित्य इति। भवतां पक्षे अकारणं द्विधा नित्यमसच्च। अस्माकं तु नित्यमेव। तद् यद्यकारणत्वात् नित्यो विनाशः, कार्यस्योत्पादो न प्राप्नोति। अनुत्पन्नस्य च विनाशो भावस्य विनाशो न[१] सहावस्थानमिति च दोषः। ततश्च भावानामभावविरोधित्वादत्यन्तावस्थानमिति।

अथासन् विनाशः, एवमपि सर्वनित्यत्वं विनाशाभावात्। यदि चासन् विनाशः, विनश्यतीत्यसति विनाशे प्रत्ययो न प्राप्नोति। नासत्यां गतौ गच्छतीति भवति। अथाविनाशित्वादकारणो विनाश इति मन्यसे? विनाशो न विनश्यतीति कुत एतत्? विनष्टानां पुनरनुत्पत्तेरिति चेत्? अथ मन्यसे यदि विनाशो विनश्येद् विनष्टं पुनरुत्पद्येत। न युक्तमेतत्। न हि विनाशाभावो भावो यतो विनाशविनाशाद् भवेत्, अपि तु कारणवान् भावः तस्य यदा कारणं भवति तदोत्पाद इति। अपि

१. उत्पन्नस्य च भावस्य विनाशेन C

च विनाशः कारणवांश्च न च विनश्यत्यभावत्वात्। भावधर्म एष यत् कारणवत् तद् विनश्यतीति। अभावस्त्वकारणोऽपि विनश्यति, यथा प्रागभावः। कारण-वानपि न विनश्यति, यथा प्रध्वंसाभावः। यदि कारणवान् विनाशः, ननु जनकं विनाशकं प्राप्नोति। य एवाग्निसंयोगः पाकजानामुत्पादयिता, स एव पाकजान्तरोत्पादे पूर्वपाकजानुच्छिनत्तीति जनकं विनाशकं प्राप्तम्? नानवबोधात्। नेदं भवता **काश्यपीयं** दर्शनं व्यज्ञायि, न हि नो य एवाग्निसंयोगः पाकजानुत्पादयति, स एव चोच्छिनत्ति। अपि त्वग्निसंयोगान्तरं पूर्वरूपादीनुच्छिनत्ति। [१]तत्समकालं रूपादीनारभते। ततस्तानप्यन्यस्तानप्यन्य इत्येवं जनकस्य विनाशकत्वप्रसङ्गो नास्ति।

अथ मन्यसे जनकसरूपमपि विनाशकं न भवतीति? न न भवति। दृष्टो ह्यबादिसंयोगादङ्कुरस्योत्पादः। स एवाबादिसंयोगः तद्विनाशक इति। नास्ति दृष्टेऽनुपपन्नं नाम। यश्चाकारणे विनाशे दोषः, स चापरिहार्य इत्यत एवमुच्यते जनकसरूपं विनाशकमिति एवं तावदन्यत्वे साध्ये दोष उक्तः।

ये तु क्षणिकत्वं साधयन्त्यन्ते विशेषदर्शनाद् विनाशहेत्वभावाच्च, तान् प्रतीदमुच्यते। क्षणिकाः संस्कारा इति ब्रुवाणः क्षणिकशब्दस्यार्थं प्रष्टव्यः, किमुक्तं भवति क्षणिका इति? यदि विनाशिन इति? सिद्धसाधनम्। अथाशुविनाशिन इति? तथापि विशेषणं सिद्धान्तविरोधि। अथोत्पन्नप्रध्वंसिन इति। एतदपि तादृगेव। उत्पन्नाः प्रध्वंसिन इति सिद्धसाधनम् अथोत्पन्नं विनष्टमित्येकः कालः, उत्पत्तिविनाशावेककालाविति। तेन यथा अनुत्पन्नस्योत्पत्तिः, एवमनुत्पन्नस्य विनाश इति प्राप्तम्। अथोत्पन्नं विनश्यतीति? एतस्मिन्नपि पक्षे उत्पत्तिवद् विनाशः कारणवान्, यथोत्पत्तिः क्रियात्वात्[२] सकारणा तथा विनाश इत्युत्पद्य विनाश-कारणमनुभवति। ततो विनश्यतीति। अकारणे च विनाशे दोष उक्तः[३]। यश्चायं मत्वर्थीयः क्षणिक इति स कथम्? यदि निरुक्तन्यायेन क्षयः क्षण इति

१. समनन्तरकालाद् C २. °त्वात् कादाचित्कत्वात् C ३. विनाश उक्तम् J

क्षणोऽस्यास्तीति क्षणिक इति? तन्न युक्तं कालभेदात्। यदा क्षयो न तदा क्षयीति भिन्नकालयोर्न मत्वर्थीयो दृष्टः। अथ पुनर्भाव एवानन्तरविनाशेन विशिष्यमाणः क्षण इत्युच्यते, तदापि तेनैव तदेव तद्वन्न भवतीति न युक्तो मत्वर्थीयः। अथ क्षणावस्थितिकालाः क्षणिका इति सर्वान्त्यं कालं क्षणत्वेन प्रतिपद्य तत्रावतिष्ठन्ते ते क्षणिका इति? एतदपि न युक्तमं संज्ञाभेदमात्रेण[१] कालस्याभ्युपगमात्।

पञ्च भिक्षवः संज्ञाभेदमात्रम्

इति **शास्त्रम्**। न च संज्ञामात्रं वस्तुविशेषणत्वेन युक्तम्। क्षणिका इति च प्रतिज्ञां कृत्वा न दृष्टान्तोऽस्तीत्युक्तम् प्रदीपादेरसिद्धत्वात्।

येऽपि हेतवोऽन्ते विशेषदर्शनादित्येवमादयः, तेऽप्यसिद्धा वा, अन्यथासिद्धा वा विरुद्धा वा भवन्तीत्यहेतवः। उपेत्य वा विशेषवत्त्वं वर्तमानैकक्षणविशेषवत्त्वेनानैकान्तिकम्। उभयपक्षसंप्रतिपत्त्या य एकक्षणो वर्तमानः स विशेषवान् भवत्येकश्चेत्यनेकान्तः। अन्ते विशेषदर्शनादिति च विशेषणानर्थक्यम्। अन्तार्थानभिधानात् कतमस्मिन्नन्ते विशेषदर्शनमिति वक्तव्यम्। अथान्तो विनाशः, नैतस्मिन् विशेषदर्शनमस्ति। अथान्तिमं वस्त्वेवान्तशब्दवाच्यम् एवं सत्येकस्मिन् विशेष इति विरुद्धो हेतुः।

योऽप्ययं हेतुर्दर्शनादर्शनादिति, अस्यार्थः। नीयमानस्य किल प्रदीपादेर्द्रव्यस्य देशान्तरे उत्पादो देशान्तरे च निरोधः। तत्कृते दर्शनादर्शने स्तः। [२]तथा च गच्छतो देवदत्तादेर्दर्शनादर्शने। [३]तस्मादस्यापि प्रतिक्षणमुत्पादविनाशाविति। नैतत् न्याय्यम्, देवदत्तादेर्दर्शनादर्शनयोरन्यनिमित्तत्वात्। संयोगविभागकृते दर्शनादर्शने, नोत्पादविनाशकृते। यस्मिन् देशे संयोगो विनष्टः, तस्मिन् संयोगी न गृह्यते, यस्मिंस्तूत्पन्नः, तत्र गृह्यत इति। संयोगाद्धि द्रव्ये इहबुद्धिर्भवति, भावाभावयोस्तद्वत्त्वादिति। अथ संयोगविभागौ न प्रतिपद्यते? तस्यापि संयोगोऽर्थान्तरं भवतीति

१. संज्ञामात्रत्वेन C  २. अतश्च C  ३. अतस्तस्या॰ C

प्रतिपादितम्। एतेन विभागो व्याख्यातः। तदेवं संयोगविभागोपपत्तेर्द्रव्यस्य दर्शनादर्शने भवतो नान्यथेति।

यत् पुनरेतत् प्रदीपस्य देशान्तर उत्पाद इति, एतदपि न बुध्यामहे। कथमिति? यत् तावद् भवतां पक्षे वस्तूत्पन्नं यत्र तत्रैव तद् ध्वंसते यदुत्पित्सु तदनाहितसंस्कारमसत्त्वाद् देशान्तरे नोत्पत्तुमर्हति। अथानाहितसंस्कारस्यापि देशान्तरे उत्पादः, न किञ्चिद्वस्तु [१]अभिन्नदेशमुत्पद्येत। अथ कारणं संस्कृतमिति? तदाधेयवशात् कार्यमपि तथाभूतमेवोत्पद्यत इति तुल्यं कार्येण। यथैव कार्ये संस्कार आधातुमशक्यः, तथा कारणेऽपीति तुल्यम्। नित्यं भवतां पक्षे भिन्नदेशेन कार्येणोत्पत्तव्यमभिन्नदेशेन वा।

एतेनैवातुल्यपातो व्याख्यातः। अतुल्यपातात् क्षणिकत्वमिति। न किलाकाशे पततो लोष्टादेः प्रतिबन्धकं किञ्चिदस्ति यदनुविधानेन लोष्टादि किञ्चित् चिरेण पतति किञ्चिदाश्विति। तस्मात् क्षणिकत्वात् काश्चिदवस्थास्तादृश्य उत्पद्यन्ते यासां न भवत्यधःसन्तानोत्पत्तौ सामर्थ्यम्। पुनश्च तादृश्य उत्पद्यन्ते यासां भवतीति। एतदपि अन्यथासिद्धमेव। तुल्यानां गुरुत्ववतां द्रव्याणामेकस्य गुरुत्वप्रयत्नक्षेपाः कारणम्। एकस्य गुरुत्वमात्रम्। एकस्य गुरुत्वप्रयत्नाविति। तदेवं कारणभेदानुविधायीनि गुरुत्ववन्ति द्रव्याणि चिराशुपातानुविधानभाञ्जि भवन्तीत्यहेतुरतुल्यपातः। यदपीदमिषोश्चापतनं भवेदिति संस्कारैकत्ववादिनो दोषः, अयमपि संस्कारैकत्वानभ्युपगमेन प्रत्युक्तः। यथा चानेकः संस्कार इति तथोक्तं

पाणिनिमित्तप्रश्लेषसूत्रे

इति। एकश्च संस्कारो निमित्तभेदात् कदाचित् पटूनि कर्माणि करोति, कदाचिन्मन्दानीति गुरुत्ववद् द्रष्टव्यम्। यथैकं गुरुत्वं सहकारिसंयोगापेक्षं मन्दं पातं करोति। तदेव प्रतिबन्धापगमे पटुं करोति। दृष्टो हि ग्राब्ण आकाशे मुक्तस्य पटुः पातो मन्दोऽप्स्विति। तदेवमतुल्यपातोऽप्यहेतुः।

१. स्वभिन्न॰ C

अथाक्षणिकत्वे किं प्रमाणम्? उक्तम्, आधाराधेयभावादेककालानुभाविनी कार्यकारणे कुण्डे बदरवद्[१] इति। अतश्च विप्रतिपन्ना अयुगपत्कालाः प्रत्यया एकविषया अव्युत्थायितत्प्रत्ययसामानाधिकरण्ये सति समानशब्दवाच्यत्वात् वर्तमानैकक्षणानेकपुरुषप्रत्ययवत्। यथा वर्तमानैकक्षणविषयाणामनेकपुरुषप्रत्ययानामव्युत्थायितत्प्रत्ययसामानाधिकरण्ये सति समानशब्दवाच्यानामेकविषयत्वं तथा चाव्युत्थायितत्प्रत्ययसमानाधिकरणाः समानशब्दवाच्याश्च विप्रतिपन्ना अयुगपत्कालाः प्रत्ययाः। [२]तस्मात् तेऽप्येकविषया इति। प्रत्यात्मं नानेककर्तृकाः प्रत्यया अप्रतिसन्धानप्रसङ्गात् देवदत्तादिप्रत्ययवदिति। रूपरसगन्धस्पर्शप्रत्यया एकानेकनिमित्ताः प्रतिसन्धानात्। कृतसमयानां बहूनां वर्तमानैकक्षणानेकविज्ञानवदिति। ह्यस्तनाद्यतनानि विज्ञानान्येकसन्ततौ एकानेकनिमित्तानि मयेति प्रतिसन्धानात् पूर्ववत्। शास्त्रार्थप्रत्यया एकानेकनिमित्ताः प्रतिसन्धानात् पूर्ववदिति। नानाविषयाणां नानाकर्तृकाणां च प्रत्ययानामप्रतिसन्धानादिति पूर्ववदेव न्याय इति ॥१४॥

**न पयसः परिणामो गुणान्तरप्रादुर्भावात्॥३।२।१५॥**

नैवं क्षीरं विनश्यति नापि दध्युत्पद्यते। अपि त्ववस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरमुत्पद्यत **इत्येके** वर्णयन्ति। **अपरे** त्ववस्थितस्य द्रव्यस्य गुणनिवृत्तौ गुणान्तरमुत्पद्यत इति। स खल्वयमेकपक्षीभाव इव। क उपमानार्थः? उभयत्र द्रव्यमवतिष्ठते। एकस्य तिरोभावाभिव्यक्ती, एकस्य विनाशप्रादुर्भावावित्युपमानार्थः॥१५॥

---

१. एककालानुभवः J २. तस्मात् om C

**व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम्**
**॥३।२।१६॥**

उभयोरपि चोत्तरम्[१]

**व्यूहा....नम्।** शेषं **भाष्ये**। यत् पुनरेतत् एकस्य तिरोभावाभिव्यक्ती, एकस्य [२]विनाशप्रादुर्भावाविति तन्न, पूर्वावस्थापरित्यागात्। यदि विनाशोत्पादौ निवृत्तिप्रादुर्भावौ अथाप्यभिव्यक्त्यनभिव्यक्ती, सर्वथा पूर्वावस्थां जहाति द्रव्यमिति। न ह्यप्रच्युतस्य[३] पूर्वावस्थातोऽभिव्यक्त्यनभिव्यक्ती भवतो विनाशप्रादुर्भावौ वेति। तस्मात् अयुक्तमवस्थितस्य परिणाम इति॥१६॥

**क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः**
**॥३।२।१७॥**

अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं निष्कारणं च दध्युत्पादम्—

**क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः।**

क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकव्यक्तीनाम्, न पुनः कुम्भादिवत् सकारणाविति नात्र हेतुरस्तीति। निरधिष्ठानं च दृष्टान्तवचनम्। कोऽधिष्ठानार्थः? आश्रयः। किमुक्तं भवति निरधिष्ठानमिति? धर्मी नास्तीति यावदुक्तं भवति। न हि स्फटिकस्योत्पादविनाशौ प्रतिक्षणमुपलभ्येते, यत इयं चिन्ता भवेत् किमेतौ सकारणावाहोस्विदकारणाविति। यथानभ्युपगतशब्दसत्त्वं[४] प्रति कश्चिद् ब्रूयात् कृतकत्वादनित्यः शब्दः, तादृगेतदिति। धर्म्यप्रसिद्धेश्च दृष्टान्ताभाव इति च समानम्।

---

१. उभयत्रोत्तरम् C २. निवृत्तिप्रादु॰ J ३. अनपवृक्तस्य C ४. तत्त्वं C

अभ्यनुज्ञाय च स्फटिकस्योत्पादविनाशौ योऽत्र साधकस्तस्याभ्यनुज्ञानादप्रतिषेधः। उभावेतौ दृष्टान्तौ क्षीरदधिवत् कुम्भादिवच्च। तत्र किं कुम्भादिदृष्टान्तो भवत्वथ क्षीरदधिनी इति। कुम्भादिवदिति युक्तं कुम्भाद्युत्पत्तिविनाशकारणस्य दृष्टत्वात्। क्षीरदधिवत्तु न युक्तम्, अनुमानतो ग्रहणादिति सिद्धमिदमनित्या बुद्धिरिति। इतश्चानित्या बुद्धिः, गुणत्वे सति प्रत्यक्षतया व्यापकद्रव्यसमवायात् शब्दवत्। जातिमत्त्वे सति अस्मदादिप्रत्यक्षत्वादाश्रितत्वाच्च शब्दवत्। करणभावे सत्ययोगिप्रत्यक्षत्वात् शब्दवदेव॥१७॥

॥औपोद्घातिकं क्षणभङ्गप्रकरणम्॥

## [ बुद्धेरात्मगुणत्वप्रकरणम् ]

**नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥३।२।१८॥**

सा त्वियं बुद्धिः कस्य गुण इत्येतत् चिन्त्यते। न गुणभावासिद्धेः। अनित्यत्वे सति नियमेनाचाक्षुषप्रत्यक्षत्वात् रसवत् सिद्धो गुणभावः। सन्निकर्षोत्पत्तेः संशय इति। तत्रायं विशेषः

**नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्।**

भवति खल्विदमिन्द्रियेऽर्थे च विनष्टे ज्ञानमद्राक्षमिति। अद्राक्षमित्येतन्नेन्द्रियार्थसन्निकर्षात्। स्मृतित्वात् स्मृतिरेषा नेन्द्रियार्थसन्निकर्षाद् भवितुमर्हति। स्मृतावपि तुल्यम्। यथैव ज्ञातारमन्तरेण ज्ञानं न भवति, एवमनुभवितरि नष्टे अनुभवितारमन्तरेण स्मृतिरप्ययुक्तेति॥१८॥

## युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥३।२।१९॥

अस्तु तर्हि मनोगुणो ज्ञानम्

**युगपज्ज्ञेयानुपलब्धेश्च न मनसः।**

यत् खलु युगपज्ज्ञेयानुपलब्ध्या समधिगतं मनः, नातस्तस्य गुणो ज्ञानम्। विशेषणोपादानादन्तःकरणबहुत्वप्रसङ्ग इति चेत्? अथ मन्यसे यत् खलु युगपज्ज्ञेयानुपलब्ध्या समधिगतं मनो न तस्य गुणो ज्ञानमित्येवं ब्रुवाणेन बहुन्यन्तःकरणानि प्रतिपन्नानि भवन्ति। न ह्यसत्यन्तःकरणबहुत्वे विशेषणमर्थवदिति। न, सर्वस्येन्द्रियस्य मनननिमित्तत्वात्। सर्वमेवेन्द्रियं मनननिमित्तत्वात् मन इत्यभिधीयते। एवं च सति युक्तं विशेषणम्, युगपज्ज्ञेयानुपलब्ध्या यत् समधिगतं मनो न तस्य गुणो ज्ञानमिति। एवमपि विशेषणं व्यर्थम्, अन्यस्यानभ्युपगमात्। यदि तस्यान्तःकरणस्य न भवत्यन्यस्य तर्हि साधनस्य ज्ञानं गुण इति प्राप्तम्। अन्यस्यानभ्युपगमात्[१]। अन्यस्योपपत्तेरप्रतिषेधः। अनवस्थितत्वात् प्रमाणप्रमेयव्यवहारस्य[२]। यदायं योगी पुरुषान्तरेण पुरुषान्तरं परिच्छिनत्ति, तदा पुरुषान्तरपरिच्छेदे पुरुषान्तरं साधनमिति तत्त्वज्ञानगुणं भवतीति युक्तं विशेषणमिति। तस्मात् न तस्य गुणो ज्ञानमिति।

कस्य तर्हि? अस्यार्थस्य प्रदर्शनार्थं ज्ञस्य वशित्वात्। वशी ज्ञाता वश्यं करणमिति। न चायं ज्ञातरि नियमो ज्ञाता वश्येव, वश्योऽपि भवतीति। अचेतने तु नियमः। अचेतनं सर्वं वश्यमिति। वश्यं मनोऽचेतनत्वात् घ्राणादिवदिति। ज्ञानगुणत्वे च संज्ञाभेदमात्रम्, विभु[३] चान्तःकरणं ज्ञानगुणं चेति संज्ञामात्रं भिद्यते। यथा ज्ञातुर्ज्ञानसाधनमिन्द्रियमेवं मन्तुर्मतिसाधनेनावश्यं भवितव्यमिति। उभयोश्चेतनत्वे प्रत्ययव्यवस्थानुमानं न स्यात्। विभु चान्तःकरणं ज्ञानगुणमिति सर्वेन्द्रियैर्युगपदुपलब्धिप्रसङ्गः ॥१९॥

---

१. अन्यस्यानभ्युपगमात् om J  २. प्रमेयभावस्य C  ३. चित्तं for विभु C

**तदात्मगुणत्वेऽपि तुल्यम्॥३।२।२०॥**

यस्याप्यात्मा विभुश्च ज्ञानगुणश्च तस्यापि सर्वेन्द्रियैः संबन्धस्याप्रतिषेधात् युगपदुपलब्धिप्रसङ्गः॥२०॥

**इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः॥३।२।२१॥**

न प्रसङ्गः कारणान्तरभावात्। इन्द्रियार्थसन्निकर्षवत् इन्द्रियमनःसन्निकर्षोऽपि कारणमिति। तस्य चायौगपद्यमणुत्वान्मनस इति॥२१॥

**नोत्पत्तिकारणानपदेशात्॥३।२।२२॥**

यदि पुनरात्मेन्द्रियार्थसन्निकर्षादेव ज्ञानमुत्पद्येत किं स्यात्?

**नोत्पत्तिकारणानपदेशात्।**

अस्मादेवोत्पद्यतामिति न कारणमपदिश्यत इति सूत्रार्थः। आत्मेन्द्रियार्थसन्निकर्षात् ज्ञानमुत्पद्यत इति। अयुगपदुत्पत्तौ वा न कारणान्तरमपदिश्यते। विदेहप्रत्ययानुत्पत्तौ वा। यदेन्द्रियमर्थेन बहिरवस्थितेन संबध्यते, आत्मसंबन्धोऽपि तत्रास्तीति कस्माद् विदेहप्रत्ययो न भवतीति वक्तव्यम्। अन्तःकरणप्रत्याख्याने च केवलमात्मा स्मृत्यादिकारणमिति कस्मात् न युगपदुत्पत्तिः स्मृतीनाम्? यदा चेन्द्रियमात्मा चार्थेन युगपत् संबद्धौ तदा किमिन्द्रियार्थसन्निकर्षः कारणम्, उत आत्मार्थसन्निकर्षः, उतात्मेन्द्रियार्थसन्निकर्ष इति कारणानपदेशः॥२२॥

**विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥३।२।२३॥**

तदात्मगुणत्वेऽपि तुल्यमित्येतदनेन समुच्चीयते। यद्यात्मगुणो बुद्धिर्भवति, विनाशकारणाभावात् नित्यत्वमस्याः प्रसज्येत। कथमिति? गुणानां द्विविधो विनाश-हेतुराश्रयाभावो विरोधिगुणप्रादुर्भावश्च। तत्र नित्यत्वादात्मनोऽनुपपन्नः पूर्वः, विरोधी च गुणो नास्तीति नित्यत्वप्रसङ्गः॥२३॥

**अनित्यत्वग्रहणाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥३।२।२४॥**

अनित्या बुद्धिरित्येतत् प्रतिपादितम्। तत्रास्या बुद्ध्यन्तराद् वा संस्काराद् वा विनाश इति प्रतिपत्तव्यम्। न द्वे बुद्धी सहेति चेत्? अथ मन्यसे न द्वे बुद्धी सह भवतो यतः परया पूर्वा निवर्त्येतेति। तच्च न, युगपदुत्पत्तिप्रतिषेधात्। युगपदुत्पत्तिः प्रतिषिध्यते, न [१]सहभावः। न हि बुद्ध्योर्युगपद्भावे किञ्चिद् विरुध्यत इति। लब्धात्मकेन च कार्येण कारणस्य विनाशाभ्युपगमात्। यदा च कार्यं लब्धात्मकं भवति तदा कारणं विनाशयति, शब्दवत्। यथा लब्धात्मकः कार्यः शब्दः कारणं शब्दं निर्मार्ष्टि, तथा बुद्धिरपीति। अन्त्ययोर्न स्यादिति चेत्? अथ मन्यसे यदि पूर्वौ बुद्धिशब्दौ पराभ्यां विनाश्येते, अन्त्ययोर्बुद्धिशब्दयोः किं विनाशकारणमिति। यथा चान्त्यौ बुद्धिशब्दौ विनाशकारणं विना विनश्यतः, एवमन्यदपि कार्यमिति? न, स्पर्शवद्द्रव्यसंयोगात् तदुपपत्तेः[२]। स्पर्शवद्द्रव्यसंयोगेनान्त्यशब्दो विरुध्यते। ये कुड्यादिभिराकाशस्य[३] संयोगाः, त एकार्थसमवायिनं शब्दं प्रतिबध्नन्ति। अतोऽन्त्यस्याश्रुतिः[४] शब्दस्येति। अन्त्या बुद्धिः स्थितिहेत्वभावाद् विनश्यतीति

१. संभवः J २. न तदुत्पत्तिः C ३. °दिभिः कारणस्य C ४. अतोऽ-त्यन्तमश्रुतिः C

कालाद् वा, संस्काराद् वा। कथं कालात्? यावन्त्यस्य जन्मनः स्थितिहेतू धर्माधर्मौ, तयोरभावादन्त्या बुद्धिर्विनश्यतीति। कस्मात् पुनरेतदेवमुच्यते, न पुनरहेतुको विनाशोऽभ्युपगम्यत इति? नाभ्युपगम्यते उक्तदोषात्। निर्हेतुके विनाशे उक्तो दोषः क्षणभङ्गं निराकुर्वद्भिरिति। यदि कारणस्यायौगपद्याद् बुद्धीनामयुगपदुत्पत्तिः, यत्र कारणस्य यौगपद्यमस्ति तत्र युगपदुत्पत्तिप्रसङ्गो यथा स्मृतिषु। अत्र तावदेकः परिहारः, करणस्यैकक्रियानिवृत्तौ सामर्थ्यात्। न हि करणमेकस्मिन् कालेऽनेकां क्रियां निर्वर्तयितुं शक्तमिति। परिच्छेदत्वाच्च स्मृतीनां ज्ञानवदयुगपदुत्पत्तिरिति ॥२४॥

**ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥३।२।२५॥**

**अपरे** तु कारणस्यायौगपद्यमुपपादयिष्यन्तो ज्ञानसमवेतात्मप्रदेशसन्निकर्षात् मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिरित्याहुः ॥२५॥

**नान्तःशरीरवृत्तित्वान्मनसः ॥३।२।२६॥**

एतत्तु न सम्यगिति प्रतिपादयितुमाह—

**नान्तःशरीरवृत्तित्वान्मनसः।**

अन्तःशरीरे मनो वर्तत इति को वृत्त्यर्थः? न तावदाश्रयाश्रयिभावः, न हि मनः क्वचिदाश्रितम्। नापि वृत्तिः स्वकार्यसामर्थ्यम्, बहिः कार्यदर्शनात्। मनसाधिष्ठितं चक्षुर्निःसृत्य रूपादिकमर्थं ग्राहयति चक्षुषोर्विसरार्वोर्मनसः[1] कार्यं तद्भावभावित्वात्। न चान्या वृत्तिः संभवति। तस्मात् नान्तःशरीरवृत्ति मन इति। अत्र ब्रूमः।

१. विसारो J

नाश्रयाश्रितभावो मनसो वृत्तिः, नापि कार्यप्रतिलम्भः, अपि तु नाशरीरस्य मनसः कार्यमिति मनसो वृत्त्यर्थः। न ह्यशरीरं मनः पुरुषस्यार्थं करोतीति ॥२६॥

**साध्यत्वादहेतुः ॥३।२।२७॥**

अशरीरं मनः पुरुषार्थासमर्थमिति साध्यमेतत् ॥२७॥

**स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥३।२।२८॥**

स्मरणशरीरधारणे युगपद् भवत इति दृष्टम्। दृष्टं च सर्वेण प्रतिपत्तव्यम्। चिरनिश्चरिते च मनसि स्मरतः शरीरधारणं न स्यात् ॥२८॥

**न तदाशुगतित्वान्मनसः ॥३।२।२९॥**

उभयं सिध्यति स्मरणं धारणं च ॥२९॥

**न स्मरणकालानियमात् ॥३।२।३०॥**

अनियतः स्मृतिकालः। अतोऽयुक्तमेतत्। शरीरसंयोगानपेक्षं [१]चात्ममनः-संयोगं स्मृतिकारणं ब्रुवतः शरीरस्योपभोगायतनत्वं निवर्तते। तन्निवृत्तौ च शरीरोत्पत्तिवैयर्थ्यमिति ॥३०॥

---

१. चात्मनः सं° C

**आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ॥३।२।३१॥**

अपरे तु

**आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः।**

इति परिहारं ब्रुवते ॥३१॥

**व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥३।२।३२॥**

एतच्च

**व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम्।**

भवतीत्यपरिहारः। कर्मादृष्टमुपभोगार्थं नियामकं भविष्यतीति न युक्तम्, समानत्वात्। तस्मात् पूर्व एव परिहारो

**नान्तःशरीरवृत्तित्वान्मनसः .**

इति ॥३२॥

**प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् युगपदस्मरणम् ॥३।२।३३॥**

यदि तर्हि ज्ञानसमवेतात्मप्रदेशसन्निकर्षस्यायौगपद्यादिति परिहारो नेष्यते, प्राप्तः स्मृतीनां युगपदुत्पादः कारणस्य यौगपद्यादिति।

**प्रणि.....णम्।** न, अपेक्षाकारणस्यायुगपद्भावात्। प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्त्ते यौगपद्यप्रसङ्गः[१]। [२]यत्प्रणिधानाद्यात्ममनःसंयोगस्य सहकारि कारणं तन्न

१. प्राति...सङ्गः om J २. यतः C

युगपद्भवतीति अयुगपदुत्पत्तिः स्मृतीनाम्। यदि प्रणिधानाद्यपेक्षात्ममनःसंयोगो न युगपत्स्मृतिकारणम्, याः स्मृतयः प्रणिधानज्ञानादिसन्निधानमन्तरेण भवन्ति, तासां यौगपद्यं स्यात्? नानभ्युपगमात्। न हि प्रणिधानाद्यनपेक्षं स्मार्तमस्ति, सतः स्मृतिहेतोस्त्वसंवेदनात् प्रातिभेन समानाभिमानोऽयमिति। प्रातिभं तर्हि युगपद्भवितुमर्हति। न हि तस्यासन्निहितं कारणमिति। नोक्तोत्तरत्वात्। उक्तोत्तरमेतत्। न हि करणस्यानेकक्रियानिर्वृत्तिसामर्थ्यमस्ति। प्रातिभं चानेकं ज्ञानं भवदेकस्मिन्नर्थे भवेदनेकस्मिन् वा? तन्न तावदेकस्मिन् वैयर्थ्यात्। नानेकस्मिन् सामर्थ्याभावात्।

न चायं नियमः प्रत्ययानां यौगपद्यं न भवतीति ज्ञातुर्विकरणधर्मणो देहनानात्वे प्रत्यययौगपद्यादिति। यदि च ज्ञानसमवेतात्मप्रदेशासन्निकर्षात् न स्मृतीनां युगपदुत्पत्तिः, ये संस्कारा एकदेशास्तेष्ववस्थितशरीरस्यानेकज्ञानसमवायादेकप्रदेशे युगपदनेकार्थस्मरणं स्यात्। न चैतदस्तीति। अतश्चापरिहार इति। अवस्थितशरीरस्य संस्काराः समानदेशा इत्ययुक्तम् आत्मप्रदेशानामद्रव्यान्तरत्वात्। एवं सति[1] सर्वसंस्काराणां समानदेशत्वे प्रत्यययौगपद्यप्रसङ्गोऽपरिहार्यः।

संस्कारप्रत्यासत्त्या स्मृतियौगपद्यं न भवतीति। का प्रत्यासत्तिः? न हि संस्काराणां सन्निकृष्टविप्रकृष्टभावोऽस्ति समानदेशत्वात्। न ब्रूमः सन्निकृष्टता प्रत्यासत्तिरपि तु संस्कारस्य सहकारिकारणसमवधानं[2] प्रत्यासत्तिः शब्दवत्। यथा शब्दाः सन्तानवर्तिनः सर्व एवाकाशे समवयन्ति, समानदेशत्वेऽपि यस्योपलब्धेः कारणानि सन्ति स उपलभ्यते नेतरे, तथा संस्कारेष्वपीति॥३३॥

## ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः॥३।२।३४॥

पुरुषस्य ज्ञानम् इच्छादयोऽन्तःकरणस्येति कस्यचिद् दर्शनम्। तत् प्रतिषिध्यते,

**ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः।**

१. एवं सति om C २. °कारणसन्निधानं C

ज्ञातुरेवेच्छादय इति सूत्रार्थः। यद्यन्तःकरणस्येच्छादयः स्युः, न प्रत्यक्षाः स्युः। न हीच्छादयोऽन्यत्र वर्तमाना अन्यस्य प्रत्यक्षा भवितुमर्हन्तीति। नित्यं चेच्छादयोऽप्रत्यक्षाः स्युः, मनोगुणानां नित्यमतीन्द्रियत्वात्। आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानम्॥३४॥

**तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः॥३।२।३५॥**

प्रवृत्तिनिवृत्तिभ्यां सामानाधिकरण्यात् शरीरादिषु प्रसङ्ग[१] इति सूत्रार्थः॥३५॥

**परश्वादिष्वारम्भनिवृत्तिदर्शनात्॥३।२।३६॥**

इत्यनेकान्तो वाक्यार्थः॥३६॥

**नियमानियमौ तु तद्विशेषकौ॥३।२।३७॥**

प्रयुज्यमानभूतविषयत्वं प्रवृत्तिनिवृत्त्योर्नियमः। यानि भूतानि प्रयुज्यन्ते, तेषु प्रवृत्तिनिवृती भवतः, न सर्वेष्विति। यदि पुनर्ज्ञत्वात् भूतानां प्रवृत्तिनिवृत्ती स्याताम्, भूतमात्रे स्याताम्। यथा गुरुत्वादिभ्यो भूतगुणेभ्यः। यानि गुरुत्वादिमन्ति भूतानि तानि स्वगुणात् पतन्तीति नियमश्च दृष्टः। तस्मात् न भूतानि चेतनानीति।

एकशरीरे च ज्ञातृबहुत्वं निरनुमानम्। यस्य भूतानि चेतनानि तस्यैकशरीरे बहूनि भूतानीति बहवश्चेतनाः स्युः। भवन्तु बहवश्चेतनाः किं नो बाध्यत इति चेत्? न, बहुत्वे [२]व्यवस्थानुमानं न भवेत्। [३]व्यवस्थां तु न पश्यामः प्रत्ययानां

१. ॰ष्वप्रसङ्गः C २. प्रत्ययव्यवस्था for व्यवस्थानुमानं C ३. अव्यवस्थानं तु प॰ C

प्रतिसन्धानात्। सर्वः प्रत्ययः प्रतिसन्धीयमान एकस्मिन् कार्यकारणसङ्घाते दृष्ट इति। अन्यथाभिधानाच्च। हिताहितप्राप्तिपरिहारार्थः परिस्पन्दः प्रवृत्तिनिवृत्ती। भवता तु क्रियामात्रं क्रियोपरममात्रं चाश्रित्य **तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेध** इत्युक्तम् ॥३७॥

**यथोक्तहेतुत्वात्पारतन्त्र्यात्स्वकृताभ्यागमाच्च न मनसः ॥३।२।३८॥**

यथाविधे च प्रवृत्तिनिवृत्ती प्रयुज्यमानभूताधारे दृष्टे न तथाविधे[१] भूतमात्रे भवत इति। भूतेन्द्रियमनसां समानः प्रतिषेधः। मनस्तूदाहरणमात्रम्।

**यथोक्तहेतुत्वात्पारतन्त्र्यात्स्वकृताभ्यागमाच्च न मनसः।**

यथोक्तहेतुत्वादिति

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्**

इत्येवमादीनामात्मप्रतिपत्तिहेतूनामप्रतिषेधात्। पारतन्त्र्यादिति परतन्त्राणि शरीरेन्द्रियमनांसि धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात् प्रवर्तन्ते। चैतन्ये पुनः स्वतन्त्राणि स्युः। स्वकृताभ्यागमाच्च। चेतनत्वात् शरीरादीनां तैः कृतं कर्म पुरुषेण भुज्यते इत्यकृतकृतागमनाशदोषप्रसङ्गः। अचेतनत्वे तु तत्साधनस्य पुरुषस्य स्वकृतकर्मफलोपभोग इति ॥३८॥

**परिशेषाद् यथोक्तहेतूपपत्तेश्च ॥३।२।३९॥**

अथायं सिद्धोपसंग्रहः

**परिशेषाद् यथोक्तहेतूपपत्तेश्च।**

१. ०भूताधारस्ते न तथाभूते C

आत्मनो गुणो ज्ञानमिति प्रकृतम्। यथोक्तहेतूपपत्तेरिति आत्मप्रतिपादकानां हेतूनामप्रतिषेधात्। परिशेषादिति शरीरेन्द्रियमनसां प्रतिषेधात्, अन्यस्य च शिष्यमाणस्यासंभवात्, आत्मनश्च शिष्यमाणत्वात् तस्य गुणो ज्ञानमिति। उपपत्तेरिति वा स्वतन्त्रो हेतुरात्मनो नित्यत्व इति। कस्योपपत्तेः? संसारापवर्गयोरुपपत्ते-रित्येवमादि **भाष्ये**॥३९॥

**स्मरणं त्वात्मनो ज्ञस्वाभाव्यात्॥३।२।४०॥**

स्म.......व्यात्॥४०॥

**प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रित-संबन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखे-च्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः॥३।२।४१॥**

स्मृतिहेतूनामयौगपद्याद् युगपदस्मरणमित्युक्तम्। अथ केभ्यः स्मृतिरुत्पद्यत इति स्मृतिकारणानामयौगपद्यप्रतिपादनार्थं प्रणिधानादिसूत्रम्॥

**प्रणि........त्तेभ्यः।**

एवमुपपन्नमनित्या बुद्धिरिति॥४१॥

॥बुद्धेरात्मगुणत्वप्रकरणम्॥

# [ बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ]

**कर्मानवस्थायिग्रहणात्॥३।२।४२॥**

अनित्यायां च बुद्धावुत्पन्नापवर्गित्वात् कालान्तरावस्थायित्वाच्च नित्यानां संशयः किमुत्पन्नापवर्गिणी बुद्धिः शब्दवदाहो कालान्तरावस्थायिनी कुम्भवदिति। उत्पन्नापवर्गिणीति युक्तम्। कः पुनरयमर्थ उत्पन्नापवर्गिणीति? अन्येभ्यो विनाशिभ्य आशुतरं विनश्यतीति। न त्वयमर्थ उत्पत्त्यनन्तरं ध्वंसत इति। कः पुनरत्र न्यायः? आशुतरविनाशिनी बुद्धिः जातिमत्त्वे सत्यस्मदादिप्रत्यक्षायाः व्यापकद्रव्यसमवायात्[१] शब्दवत्। प्रतिक्षणमपूर्वोत्पत्तावयुगपदुत्पत्तौ च करणत्वे सति प्रत्यर्थप्रकाशकत्वात्। यस्य प्रतिक्षणमपूर्वोत्पन्नपदार्थप्रकाशकत्वं करणत्वे सति तस्याशुविनाशित्वं दृष्टं यथा प्रदीपस्य। प्रतिक्षणमपूर्वोत्पन्नाश्च प्रध्वंसिनः पदार्थान् बुद्धिः प्रत्यर्थनियमेन प्रकाशयति। तस्मादियमप्याशुतरविनाशिनीति। अथ वा आशुतरविनाशिनी बुद्धिः गुणत्वे सत्यबाह्यकरणप्रत्यक्षत्वात् सुखादिवदिति। अस्यार्थस्य ज्ञापनार्थम्

**कर्मानवस्थायिग्रहणात्।**

इति सूत्रम्। यदि तर्ह्यनवस्थायिषु पदार्थेषु एवंभूता[२] बुद्धिः, अथ यदा अवस्थितं कुम्भादिकमर्थमुपलभते, तदा किं कुम्भवत् कालान्तरावस्थायिनी उताशुध्वंसिनीति? अवस्थितग्रहणेऽपि प्रत्यक्षनिवृत्तेः प्रध्वंसिनी, यदाप्यवस्थितं कुम्भादिकमर्थमुपलभते तदापि सन्तानेनैव बुद्धयो वर्तन्ते। कस्मात्? व्यवहिते प्रत्यक्षनिवृत्तेः। यदि कुम्भवत् कालान्तरावस्थायिनी बुद्धिरभविष्यत् व्यवहितेऽपि प्रत्यक्षमवास्थास्यत। न त्ववतिष्ठते। तस्मात् न कालान्तरावस्थायिनीति। स्मृतेरवतिष्ठत इति चेत्? यदि बुद्धिः प्रध्वंसिनी स्यात्, स्मृतिर्न स्यात्। न हि बुद्धिभेदे स्मृतिं पश्यामः

१. प्रत्यक्षत्वे सति व्यापकद्रव्याश्रिततत्वात् C  २. अनवस्थिता for एवंभूता C

यथा पुरुषान्तरबुद्धिषु। अस्ति च स्मृतिः। तस्मादवतिष्ठते बुद्धिरिति। नात एव। अत एव नावतिष्ठते[१]। न हि बुद्धावनवस्थितायां स्मृतिः संभवति। स्मृतिर्नाम प्रत्यक्षबुद्धिनिरोधे तत्पूर्वको विषयप्रतिसन्धिः। यथेदमद्राक्षमिति। [२]अद्राक्षमिति च न प्रत्यक्षायां बुद्धावनवस्थितायां युक्तमिति। अन्यतश्च तद्भावात् स्मृतिरलिङ्गमिति। येयं [३]स्मृतिर्बुद्ध्यवस्थानलिङ्गत्वेनाभ्युपगम्यते, नेदं लिङ्गम्, अन्यतस्तद्भावात्। अवतिष्ठते हि बुद्धिजः संस्कार इति। ततः प्रणिधानादिनिमित्तापेक्षात् स्मृतिरिति।

हेत्वभाव इति चेत्? अथ मन्यसे संस्कारात् स्मृतिर्न बुद्ध्यवस्थानादित्यत्र को हेतुः? स्मृतिरेव। यद्यवतिष्ठते बुद्धिः स्मृतिर्न स्यादित्युक्तम्॥४२॥

**अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् ॥३।२।४३॥**

यद्यनवस्थायिनी बुद्धिरव्यक्तं व्यक्तस्य ग्रहणं प्राप्नोति, यथा [४]विद्युता प्रकाशितानामर्थानामव्यक्तं ग्रहणमिति॥४३॥

**हेतूपादानात्प्रतिषेद्धव्याभ्यनुज्ञा॥३।२।४४॥**

न विरोधात् अव्यक्तग्रहणादनवस्थायिनी[५] बुद्धिरिति ब्रुवाणो यत् प्रतिषेद्धव्यमनवस्थायिनी बुद्धिरिति तदभ्यनुजानाति। तस्य चाभ्यनुज्ञानात् यदुक्तं कालान्तरावस्थायिनी बुद्धिरिति तद् बाधितं भवति। अव्यक्तग्रहणस्य चान्यनिमित्तत्वात् नाव्यक्तग्रहणाद् बुद्ध्यनवस्थानं सिध्यति। यत् तदव्यक्तं व्यक्तं च ग्रहणं न तद् बुद्धेरवस्थानानवस्थानाभ्याम्, अपि तु ग्रहणहेतोर्भेदादिति तदसंभवाच्च। न

---

१. नात एवानवस्थानात् C २. एतच्च न C ३. ॰बुद्धावनवस्थान॰ C ४. विद्युत्प्रकाशितानामव्यक्तग्र॰ C ५. अव॰ C

चाव्यक्तं नाम ग्रहणमस्ति। कस्मात्? अर्थग्रहणमात्रत्वाद् बुद्धेः। अर्थग्रहणमात्रं हि बुद्धिः। तच्चार्थग्रहणं सामान्यतो विशेषतश्च। यच्च सामान्यविषयं तत् सामान्यं प्रति व्यक्तम्। एवं विशेषविषयम्। एवं तद्द्विषयमिति। तदिदमव्यक्तग्रहणं देशितं कतमस्मिन्[१] विषये बुद्ध्यनवस्थानकारितं स्यात्? लोकविरोध इति चेत्? यदि तर्हि व्यक्ताव्यक्तग्रहणे न स्यातां योऽयं व्यवहारो लोकेषु व्यक्तं पश्यामीति स कथम्? न अन्यथा तदुपपत्तेः। नायं सामान्यविशेषतद्वत्सु व्यक्ताव्यक्तग्रहणभेदोऽपि तु धर्मिणः सामान्यतोऽधिगतस्य विशेषत उपलिप्साद्वारकमव्यक्तग्रहणमिति। अनेकान्ताच्च। न चायमेकान्तोऽस्ति यद्विषयग्रहणहेतोर्ग्राह्यस्य चानवस्थानं तत्राव्यक्तग्रहणम् ॥४४॥

**न प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम्॥३।२।४५॥**

अनवस्थायित्वेऽपि यथा प्रदीपार्चिषां सन्तत्या वर्तमानानां ग्राह्यानवस्थानं ग्रहणानवस्थानं च भवति, भवति च व्यक्तं ग्रहणमर्चींषीति, यथा अर्चिःषु तथान्यत्रापीति व्यवस्थितं क्षणिका बुद्धिरिति॥४५॥

॥बुद्धेरुत्पन्नापवर्गित्वप्रकरणम्॥

## [ बुद्धेः शरीरगुणव्यतिरेकप्रकरणम् ]

**द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥३।२।४६॥**

शरीरगुणश्चेतना सति शरीरे भावादसति चाभावादिति। यच्च यस्मिन् सति भवति असति च न भवति तस्य तदिति विज्ञायते यथा रूपादय इति। न सति

१. कथमेकस्मिन् C

भावात् शरीरगुणत्वं चेतनायाः सिध्यति, सति भावस्यान्यगुणत्वेऽपि दर्शनात्। न तावत् संयोगविभागसंस्काराः कर्मगुणाः। अथ च सति कर्मणि भावोऽसति चाभाव[1] इति। संयोगविभागशब्देषु च सत्सु शब्दो भवति, अथ च न तद्गुण इति। तद्गुणत्वं च तत्रोपलब्ध्या सिध्यति। यद् यत्र वर्तमानमुपलभ्यते रूपादिकं तत् तस्य गुण इति। अथ सति भावादित्यनेन शरीरे चेतनोपलब्धिं ब्रूयात्? तस्याप्यसिद्धता-दोषः। न हि नः शरीरे चेतनोपलभ्यते। चेतनामात्रं तूपलभ्यते। तच्च सन्दिग्धं किं शरीरे उतान्यस्मिन्निति। उपेत्य शरीरे चेतनोपलब्धिं किं शरीरगुणश्चेतना, उत द्रव्यान्तरगुण इति।

**द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः।**

इत्युक्तार्थं सूत्रम्॥४६॥

## [2]यावच्छरीरभावित्वाद्रूपादीनाम्॥३।२।४७॥

न शरीरगुणश्चेतना

**यावच्छरीरभावित्वाद्रूपादीनाम्।**

दृष्टान्तसूत्रम्। वैधर्म्येण ये शरीरगुणा भवन्ति ते यावच्छरीरं वर्तन्ते, यथा रूपादयः। न तु यावच्छरीरं चेतना वर्तते। तस्मात् न तद्गुण इति। साधर्म्येण वा न तद्गुण इति[3], यथाप्सूष्णतेति। संस्कारवदिति चेत्? अथ मन्यसे यथा संस्कारः शरीरगुणः, न च यावच्छरीरं वर्तते, तथा चेतनापीति? न, कारणानुच्छेदात्। संस्कारस्य न शरीरमात्रं कारणं तस्य नोदनादिकारणसन्निधाने तदभावे च भावाभावौ युक्तौ, न तु चेतनायाः कारणसन्निधानम्। अतोऽयुक्तमेतदिति।

चेतनानिमित्तस्याप्यसन्निधानमिति चेत्? अथ मन्यसे यथैव संस्कारस्य कारणमसन्निहितम्, एवं चेतनाकारणमपीति? तदयुक्तं विकल्पानुपपत्तेः। यत्तच्छरीरे

१. असति चाभाव om J २. यावद्द्रव्यभाक्° C ३. वा न तद्गुण इति om J

चेतनोत्पत्तिकारणं तत् किं शरीरस्थमुत द्रव्यान्तरस्थम्? शरीरस्थमपि च किं यावच्छरीरभावि उत नैमित्तिकमिति? यदि यावच्छरीरभावि, न कदाचिच्चेतनाहीनं शरीरमुपलभ्येत, तन्निमित्तस्य सन्निहितत्वात्। अथ नैमित्तिकम्, यत्तच्छरीरे चेतनोत्पत्तेर्निमित्तकारणं तत्रापि चेतनावत्प्रसङ्गः। अथ द्रव्यान्तरस्थम्, द्रव्यान्तरवृत्ति निमित्तं शरीरे चेतनां करोति न द्रव्यान्तरेष्वित्यत्रापि नियमहेतुर्वक्तव्यः। द्रव्यान्तरस्थं चैतत् नित्यमनित्यं वा; अनित्यमपि कालान्तरावस्थायि, प्रतिक्षणप्रध्वंसि वेति चेतनावत् प्रसङ्गः॥४७॥

**न, पाकजगुणान्तरोत्पत्तेः॥३।२।४८॥**

यच्च [१]मन्येत श्यामादिगुणं च द्रव्यं भवति, न च यावद्द्रव्यभाविनी श्यामतेति, तच्च[२]

**न, पाकजगुणान्तरोत्पत्तेः।**

नात्यन्तं श्यामरूपोपरमे रूपान्तरानुत्पादः[३], चेतनोपरमस्त्वत्यन्तमिति॥४८॥

**प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः॥३।२।४९॥**

इतश्च

**प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः।**

यावत्सु द्रव्येषु पूर्वगुणप्रतिषेधस्तावत्सु प्रतिद्वन्द्विनो गुणान्तरस्य दर्शनम्, यथा श्यामादिनिवृत्तौ रक्तादीनामिति। न पुनः शरीरे चेतनाविपरीतं गुणान्तरमुपलभ्यते, चेतनामात्रोपरमस्त्वत्यन्तमिति। अथ मन्यसे शरीरेऽप्यचेतनत्वं नाम गुणान्तरमिति, तन्न, स्वरूपतोऽनिर्देशात्। यत् तदचेतनत्वं नाम, किं तत् चेतनाविपरीतं

---

१. मन्यते C २. तच्च न C ३. रूपान्तरोत्पत्तिः C

धर्मभूतं वस्तु, उत चेतनाप्रतिषेधमात्रमिति? यदि विपरीतं वस्तु, चेतनावत् संवेद्यं स्यात्। अथ चेतनाप्रतिषेधमात्रम्, तत्र गुण इति॥४९॥

**शरीरव्यापित्वात्॥३।२।५०॥**

इतश्च न शरीरगुणश्चेतना

**शरीरव्यापित्वात्।**

शरीरवत्[१] शरीरावयवाश्चेतनोत्पत्त्या व्याप्यन्ते। को व्याप्त्यर्थः? न कश्चित् शरीरावयवश्चेतनाहीनो[२] भवतीति, सर्वस्य चेतनानिमित्तत्वात् शरीरवत् शरीरावयवाश्चेतनाः प्राप्नुवन्ति। भवन्तु शरीरावयवा अपि चेतनाः? न, प्रत्ययव्यवस्थाप्रसङ्गात्। शरीरवत् शरीरावयवाश्चेतना इति प्रत्ययव्यवस्थानं स्यात्॥५०॥

**न केशनखादिष्वनुपलब्धेः॥३।२।५१॥**

न शरीरावयवाश्चेतना

**न केश.....लब्धेः।** इति दृष्टान्तसूत्रम्॥५१॥

**त्वक्पर्यन्तत्वात् शरीरस्य केशनखादिष्वप्रसङ्गः॥३।२।५२॥**

संयोगिद्रव्यं केशादय इति, न तु शरीरावयवा इति। तस्मादप्रसङ्गोऽयमिति॥५२॥

---

१. शरीरम् J २. चेतनानिमित्तं न J

## शरीरगुणवैधर्म्यात्॥३।२।५३॥

इतश्च न शरीरगुणश्चेतना

**शरीरगुणवैधर्म्यात्।**

द्वये शरीरगुणा भवन्ति बाह्यकरणप्रत्यक्षाश्च रूपादयः, अतीन्द्रियं च गुरुत्वम्। विधान्तरं तु चेतना न बाह्यकरणप्रत्यक्षा, अन्तःसंवेद्यत्वात्। नातीन्द्रिया, मनोविषयत्वात्। तस्मात् न शरीरगुण इति॥५३॥

## न रूपादीनामितरेतरवैधर्म्यात्॥३।२।५४॥

यथेतरेतरविधर्माणो रूपादयो न शरीरगुणत्वमतिवर्तन्ते तथा रूपादिवैधर्म्येऽपि न चेतना शरीरगुणत्वं हास्यतीति॥५४॥

## ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः॥३।२।५५॥

अप्रत्यक्षत्वाच्च। द्वये शरीरगुणा भवन्तीत्युक्तः सूत्रार्थः। रूपादीनामितरेतरवैधर्म्यमननुसंहितं चाव्यावृत्तं चेति वैधर्म्यमात्रम्। अन्वयव्यतिरेकि तु चेतनायाः शरीरगुणत्वसाधनं न भवति। तस्मादसममेतत्।

ये हेतवोऽनेन [1]प्रकरणेन लभ्यन्ते तेषां प्रयोगः। न शरीरगुणश्चेतना निमित्तान्तराभावे विरोधिगुणादर्शने च सति अयावद्द्रव्यभावित्वाद् अप्सु औष्ण्यवदिति। शरीरव्यापित्वादिति न साधनम्, किं तु शरीरे चेतनां ब्रुवतो दोषोऽनेकचेतनत्वप्रसङ्गः। न शरीरगुणश्चेतना, बाह्यकरणाप्रत्यक्षत्वात् सुखादिवदिति। अथेदं

१. प्रकारेण C var.

प्रकरणं निर्णीतार्थम्, कस्मात् पुनरारब्धमिति? बहुपरीक्ष्यमाणं तत्त्वं निश्चिततरं भवतीत्यत आरभ्यत इति ॥५५॥

॥बुद्धेः शरीरगुणव्यतिरेकप्रकरणम्॥

## [ मनःपरीक्षाप्रकरणम् ]

**ज्ञानायौगपद्यादेकं मनः ॥३।२।५६॥**

परीक्षिता बुद्धिः। मनोऽवसरप्राप्तं परीक्ष्यते। तत् प्रतिशरीरमेकमनेकमिति विचारे

**ज्ञानायौगपद्यादेकं मनः।**

अयुगपत् ज्ञानानि भवन्तीत्येतत् प्रत्यक्षम्। एतच्च मनस एकत्वं साधयति। कथमिति? यदि बहूनि मनांसि स्युः, प्रतीन्द्रियं मनसः संबन्ध इति युगपदनेकार्थ-सन्निधाने युगपदनेकविज्ञानानि भवेयुः। यत्त्वेकेन्द्रियग्राह्येष्वर्थेषु विज्ञानानामयुग-पज्जन्म तत्र मनस एकत्वे लिङ्गमन्यतस्तद्भावात्। अन्यतो हि करणत्वात् तद्भवती-त्युक्तम् ॥५६॥

**न युगपदनेकक्रियोपलब्धेः ॥३।२।५७॥**

इति। शेषं **भाष्ये**[1] ॥५७॥

**अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् ॥३।२।५८॥**

अस्योत्तरद्वारकं सूत्रम्

१. इति भाष्यम् for शेषं भाष्ये J

**अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात्।**

यथालातस्य भ्रमतो विद्यमानः क्रमो नोपलभ्यते, तथा बुद्धीनामाशुभावात् विद्यमानः क्रमो नोपलभ्यत इति। न चास्त्युभयपक्षसंप्रतिपन्ना बुद्धीनां युगपदुत्पत्तिर्यया बहुत्वं मनसः प्रतिपद्येमहीति ॥५८॥

**यथोक्तहेतुत्वाच्चाणु॥३।२।५९॥**

य एवैकत्वे हेतुर्मनस उक्तोऽनेनैवाणु मनोऽध्यवसातव्यमिति ॥५९॥

॥मनःपरीक्षाप्रकरणम्॥

## [ शरीरस्यादृष्टनिष्पाद्यत्वप्रकरणम् ]

**पूर्वकृतफलानुबन्धात् तदुत्पत्तिः॥३।२।६०॥**

मनसः खलु भोः सेन्द्रियशरीरे वृत्तिः। शरीरे विचार्यमाणे मन एव विचारितं भवति। अतः पुनः शरीरं विचार्यते, किमयं शरीरसर्गः कर्मनिरपेक्षैर्भूतैरारभ्यते, आहोस्वित् सापेक्षैरिति विप्रतिपत्तेः संशयः। श्रूयते खल्वत्र विप्रतिपत्तिरिति। तत्रेदं तत्त्वम्।

**पूर्व.....पत्तिः**। पूर्वकृतमिति[१] पूर्वशरीरे या प्रवृत्तिः वाग्बुद्धिशरीरारम्भलक्षणा तत् पूर्वकृतम्। तस्य फलं तज्जनितौ धर्माधर्मौ। तयोरनुबन्धः आत्मसमवेतयोः [२]प्रतिबद्धयोरवस्थानं विपाककालस्यानियमादिति। अनियतो विपाककाल इहामुत्र जात्यन्तरे चेति। तेनावस्थितेन प्रयुक्तेभ्यो भूतेभ्यः पृथिव्यादिभ्यः तस्य शरीरस्योत्पत्तिर्न स्वतन्त्रेभ्यः। कस्मात् पुनः कर्म धर्माधर्मसंज्ञकमुत्पत्तिसमकालं

१. पूर्वकृतमिति om C २. प्रतिबद्धयो om C

फलं न ददाति? क एवमाह न ददातीति? विपाककालस्यानियमात्। यदा अशेषकारणसन्निधानं भवति, सन्निधानेऽपि च यदा कारणान्यप्रतिबद्धानि भवन्ति तदा ददात्यपि[१]। यदा पुनर्न ददाति, तदा विपच्यमानकर्माशयप्रतिबन्धात्। यो विपच्यमानकर्माशयो भवति यस्य धर्माधर्मसमाख्यातोऽनुपभुक्तफलः तेन प्रतिबन्धात् विद्यमानमपि कर्म फलं न ददातीति। यानि च प्राण्यन्तराणि तस्य कर्मणः समानोपभोगीनि, तेषां विपच्यमानैः कर्माशयैः प्रतिबन्धात् यानि वा सत्त्वान्तराणि तस्य कर्मणः फलभागीनि तस्मिन् देशे तेषां तत्रासन्निधानात्। यानि वा प्राण्यन्तराणि भागीनि तस्य कर्मणस्तत्कर्मभिः प्रतिबन्धात् , तस्य वा कर्मणः सहकारिधर्माधर्मलक्षणं निमित्तं नास्तीत्यतो वा फलस्यानारम्भः, तस्य वा सहकारिणः कारणस्य प्रतिबन्धात् सत्त्वान्तरकर्मणां वा सहकारिणामनुत्पत्तेः, सत्त्वान्तरकर्मणां वा सहकारिणां प्रतिबन्धात् न सर्वदा फलं धर्माधर्मौ प्रयच्छत इति। दुर्विज्ञेया च कर्मगतिः। सा न शक्या मनुष्यधर्मणा अवधारयितुम्। आकृतिमात्रं तूक्तमिति।

कः पुनरत्र न्यायः कर्मतन्त्राणि भूतानि शरीरमारभन्ते, न निरपेक्षाणीति? अयं न्यायोऽभिधीयते। पुरुषगुणविशेषप्रेरितभूतपूर्वकं शरीरं पुरुषार्थक्रियासामर्थ्यात्। यद् यत् पुरुषार्थक्रियासमर्थं तत्तत् पुरुषगुणविशेषप्रेरितभूतपूर्वकं दृष्टं यथा रथादि पुरुषगुणेन प्रयत्नेन प्रेरितैर्भूतैरारभ्यमाणं पुरुषार्थक्रियासमर्थं दृष्टम्। तथा च शरीरम्। तस्मादिदमपि सापेक्षैर्भूतैरारभ्यत इति सुखदुःखनिमित्तत्वाद् घटादिवदिति। इतश्च कार्यत्वाद् रथादिवदिति। बाह्यकरणग्राह्यत्वे सति रूपादिमत्त्वाद् घटादिवदेव ॥६०॥

## भूतेभ्यो मूर्त्युपादानवत् तदुपादानम् ॥३।२।६१॥

अत्र **नास्तिक** एवमाह—

---

१. ददात्येव C

**भूतेभ्यो मूर्त्युपादानवत् तदुपादानम्।**

यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता[१] मूर्तयः सिकताशर्करागैरिकाञ्जन-प्रभृतयः पुरुषार्थकारित्वादुपादीयन्ते, तथा शरीरसर्गोऽपीति। पुरुषार्थक्रियासामर्थ्या-दित्यस्य हेतोरनैकान्तिकत्वद्वारकं सूत्रम्। साधनपक्षे दृष्टान्तमात्रत्वाद-संबद्धम्[२] ॥६१॥

**न, साध्यसमत्वात्॥३।२।६२॥**

अथायं पक्षः कर्मनिरपेक्षाणि भूतानि शरीरमारभन्ते पुरुषार्थक्रियासामर्थ्यात् सिकतादिवदिति। एतच्च,

**न, साध्यसमत्वात्।**

यथैव शरीरसर्गः कर्मनिरपेक्षैर्भूतैरारभ्यत इति साध्यं तथा सिकतादीनामकर्म-निमित्तः सर्गः साध्य इति। सिकतादीनामपि च कर्मनिमित्तः सर्ग इत्येतस्मादेव हेतोः सिध्यतीति। यथा चोभयपक्षसंप्रतिपन्नो रथादिदृष्टान्तः पुरुषगुणविशेष-प्रेरितभूतपूर्वकोऽस्ति, न तथा अकर्मनिमित्तसर्गपक्षे दृष्टान्तोऽस्तीति॥६२॥

**नोत्पत्तिनिमित्तत्वान्मातापित्रोः॥३।२।६३॥**

विषमश्चायमुपन्यासः भूतेभ्यो मूर्त्युपादानवदिति

**नोत्पत्तिनिमित्तत्वान्मातापित्रोः।**

मातापितृशब्देन लोहितरेतसी बीजभूते गृह्येते। तत्र पित्रोश्च पुत्रफलानुभवनीये कर्मणी सत्त्वस्य च गर्भवासानुभवनीयं कर्म मातुर्गर्भाशये शरीरोत्पत्तिं प्रयोजयन्ति[३]।

---

१. निर्वर्त्त्या C २. असिद्धम् C ३. °जयति C

तत्र चोपपन्नं बीजानुविधानम्। बीजानुविधानाच्च यज्जातीयौ तस्य पितरौ तज्जातीयः [१]स भवतीति ॥६३॥

**तथाहारस्य ॥३।२।६४॥**

उत्पत्तिनिमित्तत्वादिति प्रकृतम्। एतदपि सिकतादिभिर्वैधर्म्यमेवोच्यते। अशितपीतमाहारः। तस्य पाकाद् रसद्रव्यं निर्वर्तते। तन्मातृशरीरे उपचीयते। गर्भशरीरे चोपचितं कललादिभावेनोपचीयमानं कर्मसापेक्षैर्भूतैः [२]पेश्यादिभावमापद्यते। यदि पुनः कर्मनिरपेक्षाणि भूतानि स्युः, स्थाल्यादिगतमिवान्नं पच्येत। न त्विदमस्ति। तस्मात् सापेक्षाणीति ॥६४॥

**प्राप्तौ चानियमात् ॥३।२।६५॥**

कर्मनिरपेक्षाणि भूतानि शरीरमारभन्त इति सर्वो दम्पत्योः संयोगः पुत्रादिफलकः स्यात्। कर्मसापेक्षेषु भूतेषु उपपन्नो नियमाभाव इति ॥६५॥

**शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म ॥३।२।६६॥**

सर्वात्मभिः संबन्धात् साधारणविग्रहवत्त्वप्रसङ्गः, नियमहेत्वभावादिति चेत्? अथ मन्यसे शरीरं सर्वात्मभिः संबध्यते संयोगजेन संयोगेन क्रियाजेन वा, तत्र शरीरादिगतो न कश्चित् नियमहेतुरस्ति, येन शरीरमेकस्यात्मनो व्यवतिष्ठेत। न च पुरुषगतः कश्चिदतिशयो विद्यते येन शरीरमेकस्य पुरुषस्योपभोगसाधनं भवेत्।

१. संभव॰ C २. पाण्यादि॰ C

अस्ति च नियमः। तस्माद् वक्तव्यो नियमहेतुरिति। एतस्योत्तरद्वारकं सूत्रम्—

**शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म।**

येनैव कर्मणा शरीरमुत्पाद्यते, तदेव [१]तच्छरीरं नियमयति। अकर्मनिमित्ते तु शरीरसर्गे यथोक्तो दोष इति। कर्मणस्तत्स्थता कुत इति चेत्? अथ मन्यसे यदि कर्म नियामकं शरीरसर्गस्य, [२]कर्मणि कुतो नियम इति? न स्वसंयोगोत्पत्तिनियमात्, यो यस्यात्मनः संयोगः, तस्मात् यत् कर्मोपजायते तत् तस्य भवतीति। संयोगे कुतो नियम इति? यथैव कर्मणि पर्यनुयोगो न व्यावर्तते तथा संयोगेऽपीति? न, मनोनियमहेतुत्वात् यस्यात्मनो यन्मनः तेन यः संयोगो जन्यते स तस्य भवतीति। मनस्यपि तुल्यम्। मनसस्तर्हि सर्वात्मभिः संबन्धात् किं नियामकमिति? कर्मणो नियामकत्वात्[३]। यन्मनो यदीयेन कर्मणा उपनिबद्धं तदीयं तद् भवतीति। सर्गादौ कथमिति चेत्? सर्गादेरनभ्युपगमाददेश्यम्। अनादिः संसारः पूर्वाभ्यस्तसूत्रे प्रतिपादितमेतत्। आदिमति संसार एष देश्यो नानादाविति ॥६६॥

**एतेनानियमः प्रत्युक्तः ॥३।२।६७॥**

कः पुनरयं नियमः? यथैकस्यात्मनः शरीरं तथा सर्वात्मनामिति नियमः, अन्यस्यान्यथा अन्यस्यान्यथेत्यनियमो भेदो व्यावृत्तिदृष्टः शरीरभेदः प्राणिनामनेकरूपः। स च कर्मनिरपेक्षैर्भूतैः शरीरारम्भे न युक्तः। कर्मणां तु भेदात् शरीराणि भिद्यन्त इति युक्तम्।

उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः। द्वे शरीरस्य प्रकृती व्यक्ता चाव्यक्ता च। तत्राव्यक्तायाः कर्मसमाख्यायाः प्रकृतेरुपभोगात् प्रक्षयः। प्रक्षीणे च कर्मणि

१. संयोगं for तच्छरीरं C २. अथ कर्मणि C ३. कर्मैव for कर्मणो नियामकत्वात् C

विद्यमानान्यपि भूतानि न शरीरमुत्पादयन्तीति उपपन्नोऽपवर्गः। कर्मनिरपेक्षेषु भूतेषु कस्य प्रक्षयात् मोक्षमाणा अपवृज्येरन्, भूतलक्षणाया प्रकृतेरनुच्छेदात् ॥६७॥

## तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे॥३।२।६८॥

तददृष्टकारितमिति चेत्? अथ मन्यसे अदृष्टकारिता शरीरोत्पत्तिः, अदृष्ट-शब्देनादर्शनमुच्यते, अदर्शनमदृष्टमिति। सर्गादौ प्रधानं पुरुषार्थेन हेतुना प्रवर्तते, तत् प्रवर्तमानं महदादिभावेन शरीरमुत्पादयति। उत्पन्ने शरीरे द्रष्टा दृश्यं पश्यति। दृश्यं च द्वेधा विषयाः[१] नानात्वं च प्रकृतिपुरुषयोः। दृष्टेन[२] पुनः प्रधानं चरितार्थत्वात् न प्रवर्तत इति। तदेवमदर्शनं शरीरसर्गे हेतुस्तद्भावभावित्वादिति।

एतस्मिन्[३] खलु दर्शने पुनस्तत्प्रसङ्गोऽपवर्गे— या च प्राक् प्रवृत्तेर्दर्शन-निवृत्तिरदर्शनाभिमता या चोत्तरकालं निवृत्ते सर्गे नैतयोरदर्शनयोः कश्चित् विशेषः। अदर्शननिमित्ता चेत् शरीरोत्पत्तिर्भवति, तेन यथा प्राक् नानात्वदर्शनात् प्रधानं पुरुषार्थं प्रवर्तते, तथा अपवर्गेऽपीति[४]। न चैवमभ्युपगम्यते। तस्मात् नादर्शनं सर्गे कारणमिति।

चरितार्थता विशेषो भविष्यतीति न युक्तम्, चरितार्थानामचरितार्थानां च भूतानां पुनः पुनरारम्भदर्शनात् आद्येन शरीरेण [५]शब्दाद्युपलब्धेः कृतत्वाद् द्वितीयादिशरीरं शब्दाद्युपलब्धिसाधनं न स्यात्। भवति च शब्दाद्युपलब्धिसाधनं द्वितीयादिशरीरम्, तेन गम्यते चरितार्थान्यपि भूतानि पुनः शरीरमारभन्त इति। पुरषार्थेन च हेतुना पुनः शरीराण्यारभन्ते। पुरुषार्थश्च पुरुषप्रधाननानात्वदर्शनम्। तस्य चाकरणादनर्थकः शरीरारम्भो भवतीति[६]।

१. विषयो C २. दृष्टे पुनः J ३. खलु दर्शने C ४. तथापवृक्तेऽपि प्रवर्तते C
५. रूपाद्यु० C ६. भवेदिति C

दिदृक्षाविशेषोऽदर्शनमिति चेत्? अथ मन्यसे नादर्शनं दर्शनाभावः, किं तु दिदृक्षा दर्शनमित्युच्यते। सा चापवृक्ते प्रधाने दृष्टत्वात्[१] न भवतीति? न, प्राक् प्रवृत्तेस्तदभावात्। यावत् प्रधानं महदादिभावेन न परिणमते तावद् दिदृक्षा नास्ति, असती कथं कारणं भविष्यति प्रवृत्तेरिति। सर्वशक्तिमत्त्वात् तदाप्यस्तीति चेत्? अथ मन्यसे सर्वाः कारणशक्तयः प्रधाने विद्यन्ते। तदिदमात्मभूताभिः [२]कारणशक्तिभिः सर्वशक्तिमत् प्रधानम्। सर्वशक्तिमत्त्वाच्च प्रागपि प्रवृत्तेः प्रधाने दिदृक्षास्तीति। न, अपवर्गाभावप्रसङ्गात्। दिदृक्षावन्नानात्वदर्शनमप्यस्तीत्यपवर्गाभावः। विद्यमाने च नानात्वदर्शने प्रधानस्य प्रवृत्तिरयुक्ता। यदा च नानात्वदर्शनं तदापि दिदृक्षा न व्यावर्तते। न हि तदात्मानं जहातीति वः पक्षः। दिदृक्षायां च सत्यां कुतोऽपवर्गः? दिदृक्षानानात्वदर्शने च विरुद्धे कथमेकस्यैकस्मिन् काले भवतः? अज्ञानमदर्शनमिति च ब्रुवाणो विकल्पतः पर्यनुयोज्यः। किं ज्ञानाभावोऽज्ञानम्, उत मिथ्याज्ञानमज्ञानम्? किं चातः? यद्यभावः, अपवर्गो न प्राप्नोति, प्राक्प्रवृत्तेरपवृक्ते च प्रधाने ज्ञानाभावस्य तुल्यत्वात्। अथ मिथ्याज्ञानम्? तन्न युक्तम्। प्राक् प्रवृत्तेस्तदभावात्। कथमभावः? बुद्धिधर्मकत्वात्। अपवृक्ते च प्रधाने न बुद्धिरस्ति, कथं तद्धर्मोऽज्ञानं भविष्यतीति?

सत्कार्यवादाभ्युपगमात् सर्वदा अस्तीति ब्रुवाणो मोक्षं बाधते। कथम्? तत्त्वज्ञानस्य सर्वदा भावात् तत्त्वज्ञानमिथ्याज्ञानयोश्च सहानवस्थानात् प्रवृत्तेस्तादर्थ्यमयुक्तम्। न हि भवतां पक्षे किञ्चिदसद्भवति, सद्वात्मानं जहातीति सर्वार्थानां संभवात् प्रधानं किमर्थं प्रवर्तत इति वक्तव्यम्। अथाभिव्यक्तिनिमित्तं प्रवृत्तिं प्रतिपद्येथाः? [३]साप्यभिव्यक्तिः प्राक् प्रवृत्तेः सती आहो असतीति पूर्ववत् प्रसङ्गः।

यच्च प्रागनुपलब्धं पश्चादुपलभ्यते तत् किमुपजातविशेषमुतानुपजातविशेषमिति? यदि विशेषोपजननात् पश्चादुपलभ्यते व्याहतं भवति। अथानुपजात

१. दिदृक्षा for दृष्टत्वात् C  २. कारकश॰ J  ३. सा चाभि॰ J

विशेषम्, कस्मात् प्राङ् नोपलभ्यत इति वक्तव्यम्। सत्कार्यवादाभ्युपगमे च विस्फूर्जतापि न विशेषोपजनः शक्यः प्रतिपादयितुम्। न च विशेषोपजनप्रत्याख्याने वस्तुन उपलब्ध्यनुपलब्धिभेदविषयत्वं शक्यमवगमयितुम्। कर्मनिमित्ते तु सर्गे दृश्यदर्शनार्थं भूतानि शरीरं पुरुषगुणप्रेरितान्यारभन्त इति युक्तम्। न ह्यनुत्पन्ने शरीरे द्रष्टा निरायतनो दृश्यं पश्यतीति।

**अपरे** त्वदृष्टं परमाणुगुणं वर्णयन्ति, तेषामपि पुनस्तत्प्रसङ्गोऽपवर्ग इति परमाणुगुणस्यादृष्टस्य शरीरोत्पत्तिनिमित्तत्वात् पुनस्तत्प्रसङ्गोऽपवर्गे इति ॥६८॥

## मनःकर्मनिमित्तत्वाच्च संयोगाव्युच्छेदः ॥३।२।६९॥

परमाणवः [१]स्वकाददृष्टात् संहन्यन्ते। संहताश्च द्व्यणुकादिना प्रक्रमेण शरीरमुत्पादयन्ति। तन्मनः स्वगुणाददृष्टादुपसर्पतीति। उपसर्पणहेतोरदृष्टस्य नित्यत्वात्, किंकृतमपसर्पणमिति? कर्माशयक्षये तु कर्माशयान्तरादपसर्पणमिति युक्तं प्रायणम्। उभयहेतुर्मनोवृत्तिरदृष्टो भविष्यतीति न युक्तमेकस्य जीवनप्रायणहेतुत्वानुपपत्तेः ॥६९॥

## नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ॥३।२।७०॥

नित्यत्वप्रसङ्ग इति प्रायणानुपपत्तिं ब्रूमः। तदिदमुक्तमुपसर्पणहेतोरदृष्टस्य नित्यत्वादुपसर्पणहेतोश्चादृष्टस्याभावात्। यादृच्छिके तु प्रायणे प्रायणभेदो न स्यात् ॥७०॥

१. स्वगुणाद॰ C

**अणुश्यामतानित्यत्ववदेतत् स्यात्॥३।२।७१॥**

**अणु ... स्यात्** इति परिहारं वर्णयन्ति। यथा किलाणौ श्यामता नित्या अथ [१]चाग्निसंयोगेन प्रतिषिध्यते, एवमणुमनसोरदृष्टः सम्यग्ज्ञानेन प्रतिषेत्स्यत[२] इति॥७१॥

**नाकृताभ्यागमप्रसङ्गात्॥३।२।७२॥**

एतच्च न, अकृताभ्यागमप्रसङ्गादिति अनुपपन्नप्रमाणस्याभ्युपगमोऽकृताभ्युपगम इति सूत्रार्थः। यथाश्रुति वा सूत्रार्थः। अकृतस्य कर्मण उपभोगप्रसङ्गादिति। एतच्च विस्तरेणोक्तं **भाष्य** इति॥७२॥

॥शरीरस्यादृष्टनिष्पाद्यत्वप्रकरणम्॥

आत्मा शरीरं करणमर्थो बुद्धिर्मनस्तथा।
यद् यथा वस्तुतत्त्वेन तत् तथेहोपपादितम्॥

॥इति औद्द्योतकरे न्यायवार्त्तिके तृतीयाध्यायस्य द्वितीयाह्निकम्॥

॥तृतीयाध्यायः समाप्तः॥

१. अथापि संयो॰ C २. प्रतिषिध्यते C

# चतुर्थाध्याये प्रथमाह्निकम्

## [ प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ]

**प्रवृत्तिर्यथोक्ता ॥४।१।१॥**

मनसोऽनन्तरं प्रवृत्तिरवसरप्राप्ता परीक्षितव्येत्यत आह–

**प्रवृत्तिर्यथोक्ता।**

प्रवृत्तिर्यथोक्ता तथा परीक्षितव्येत्यर्थः सूत्रस्य। किं पुनः प्रवृत्तेः परीक्षितव्यमिति? यावद्धर्माधर्माश्रयं परीक्षितं सर्वा सा प्रवृत्तेः परीक्षा। तत्र प्रवृत्तिर्द्वयी[1] भवति, कारणरूपा कार्यरूपा च। तत्र कारणरूपा प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति। कार्यरूपा धर्माधर्मसमाख्या दुःखादिसूत्रे वर्णिता। तत्र कारणरूपायाः प्रवृत्तेर्विंशतिधा भेदः[2]। कार्यरूपा तु प्रवृत्तिरेकद्रव्याभ्युदयस्य प्रतिनियमात्, अवस्थिता विपाककालस्य नियमात्, आत्मसमवायाद् गुणभूता, अनित्या प्रायणादिदर्शनात्। तदुक्तं विपच्यमानकर्माशयप्रक्षये प्रायणमिति। जन्मनः कारणं पूर्वकृतफलानुबन्धात् तदुत्पत्तिरिति। संसारापवर्गहेतुभूता तद्भावे संसारः तदभावेऽपवर्ग इत्येवमाद्युक्तम् ॥१॥

**तथा दोषाः ॥४।१।२॥**

प्रवृत्त्यनन्तरं तर्हि दोषा अभिधीयन्तामित्यत आह–**त.....षाः**। उक्ता इति। बुद्धिसमानाश्रयत्वादात्मगुणाः। संसारस्यानादित्वात् अनादिना प्रबन्धेन प्रवर्तन्ते,

१. र्द्वैधा C    २. द्रःभा १.१.२.

सम्यग्ज्ञानाच्च मिथ्याज्ञाननिवृत्तौ निवर्तन्त इत्युत्पादनिरोधधर्मकाः। कार्यत्वे सत्यस्मदादीन्द्रियान्तरप्रत्यक्षत्वाद् अचाक्षुषप्रत्यक्षत्वाच्च गुणाः॥२॥

॥प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम्॥

## [ दोषत्रैराश्यप्रकरणम् ]

**तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्॥४।१।३॥**

**प्रवर्तनालक्षणा दोषा**[१] इत्युक्तम्। तथा च मानादयः प्रवर्तयन्तीति लक्षण-सामान्यात् तेऽप्युपसंख्येया इति? नोपसंख्यायन्ते संगृहीतत्वात्। केन संग्रहः? प्रवर्तनालक्षणा दोषा इत्यनेनैव।

**तत्त्रै.....वात्।** तेषां तु लक्षणेन संगृहीतानां तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्। तेषां दोषाणां त्रयो राशयः त्रयः पक्षाः संभवन्ति, रागपक्षो द्वेषपक्षो मोहपक्ष इति। तत्र रागपक्षः, कामो मत्सरः स्पृहा तृष्णा लोभ इति। द्वेषपक्षः, क्रोध ईर्ष्या असूया द्रोहोऽमर्ष इति। मोहपक्षः, मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति।

कामो मत्सर इत्येवमादि किं पर्यायवचनम्, आहो अर्थान्तरभाव इति? किं चातः? यदि पर्यायवचनम्, त्रयो राशय इति न युक्तम्। न हि पर्यायशब्देषु राशित्वं संभवति। न हि इन्द्रशक्रपुरन्दरशब्दानां राश्यर्थः कश्चिदस्ति। अर्थान्तरभावः, तदा विशेषो वाच्य इति। अर्थान्तरभाव इति ब्रूमः। तत्र कामः स्त्रीगतोऽभिलाषः। या स्त्रीगता प्रार्थना सा काम इति। एवं चाहुः— नाकामयमानो मण्डयत इति। अक्षीयमाणवस्त्वपरित्यागेच्छा मत्सरः। यद्वस्तु दीयमानमुपभुज्यमानं वा न क्षीयते तदपरित्यागेच्छा, सा मत्सर इति। यथा राजकीयोदपानान्मोदकं पा इति। अस्वव-

१. न्या. सू. १.१.१८

स्त्वादानेच्छा स्पृहा। यद्वस्तु स्वं न भवति, तस्या या आदित्सा सा स्पृहा। पुनर्भवप्रतिसन्धानहेतुभूता तृष्णा। या पुनर्भवप्रार्थना सा तृष्णा इति। प्रमाणविरुद्धपरद्रव्यादानेच्छा लोभः। प्रमाणविरुद्धं परद्रव्यादानं कुर्वाणो लुब्ध इत्युच्यत इति। एषां च सामान्यं रागः। सामान्येन विशेषः संगृहीत इति।

शरीरेन्द्रियाधिष्ठानवैकृत्यहेतुः क्रोधः। संजाते यस्मिन् शरीरेन्द्रियाधिष्ठानानि विकृतानि भवन्ति स क्रोध इति। साधारणे वस्तुनि पराभिनिवेशप्रतिषेधेच्छा ईर्ष्या। यदपरिगृहीतं साधारणं वस्तु, तस्मिन् यः पराभिनिवेशप्रतिषेधाभिप्रायः सा ईर्ष्या। परगुणाक्षमता असूया। या परगुणान् श्रुत्वा अक्षमतोपजायते, सा असूया। परापकारेच्छा द्रोहः। अशक्तस्यापि या परं प्रत्यपचिकीर्षा सा द्रोहः। अपकारासहिष्णुता अमर्षः। या कृतापकारस्यासहिष्णुता सोऽमर्षः। अस्य च द्वेषः सामान्यं तेन संग्रहः।

विपर्ययज्ञानं मिथ्याज्ञानम्। अतस्मिंस्तदिति प्रत्ययो विपर्यय इति। संशयो विचिकित्सा किंस्विदिति। विद्यमानाविद्यमानगुणाध्यारोपेणात्मोत्कर्षप्रत्ययो मानः, अहो अहमस्मीति यथा। शक्तस्य कर्तव्याकरणं प्रमादः। यः शक्तः स्वकर्तव्यं न करोति स प्रमाद इति। अस्य च सामान्यं मोहः। तेन संग्रह इति। अतः त्रैराश्यात् नोपसंख्यायन्त इति।

कुत एतत्? लोकतस्तदधिगतेः। लोकत एते कामादय एवम्भूतेष्वभिप्रायेषु प्रयुज्यन्ते। नाभिप्रायमात्रे। न हि भिक्षां प्रार्थयमानः कामयत इति भवति। लक्षणस्य तर्हि अभेदात् त्रित्वमनुपपन्नम्, एकं रागद्वेषमोहाः लक्षणाभेदात् रागभेदवदिति? नानुपपन्नम्, रागद्वेषमोहार्थान्तरभावात्। सत्यपि लक्षणस्याभेदे आन्तर्गणिकं भेदकं लक्षणमस्ति। तदुपपत्तेः त्रित्वम्। यथा रागलक्षणेन संगृहीतानां कामादीनामिति। न च सामान्यमेकत्वे कारणम्। सामान्यस्यैवाभावः स्यात्, यदि रागद्वेषमोहानामेकत्वं स्यात्। समानमेतल्लक्षणमित्येतदेव न स्यादिति न ह्येकस्य सामान्यं भवति।

किं पुनरान्तर्गणिकं लक्षणमिति? सक्तिलक्षणो रागः। यो विषयेष्वभिष्वङ्गः स रागः। अमर्षलक्षणो द्वेषः। असहिष्णुता दुःखस्य दुःखसाधनानां वेति द्वेषः। मिथ्याप्रतिपत्तिलक्षणो मोहः। यथावस्थिते पदार्थे अतथाभावप्रतिपत्तिर्या। एतच्च रागद्वेषमोहानां व्यवच्छेदकं लक्षणमात्मप्रत्यक्षमिति॥३॥

**नैकप्रत्यनीकत्वात्॥४।१।४॥**

एकं रागद्वेषमोहा एकप्रत्यनीकत्वात्, विभागवदिति। यथा विभाग एकेनैव संयोगेन विरुध्यमान एको भवति, तथा तत्त्वज्ञानेनैकेन विरुध्यन्ते रागादयः। तस्मादेकं रागादय इति॥४॥

**व्यभिचारादहेतुः॥४।१।५॥**

एकप्रत्यनीकाश्च रूपादयः एकाग्निसंयोगविरोधिनः। न चैषामेकत्वमिति अनैकान्तिकम्। एकयोनित्वादेकं रागादयः शब्दवदित्यप्यनेनैव प्रत्युक्तम्। एकयोनयो रूपादयो न चैषामेकत्वमिति॥५॥

**तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः॥४।१।६॥**

सति चार्थान्तरत्वे

**तेषां.....पत्तेः**। तेषां मोहः पापीयान्। पापतमः पापिष्ठ इति वा प्राप्ते द्वौ द्वावभिप्रेत्य पापीयानित्युच्यते। रागमोहयोर्मोहः पापीयान्। द्वेषमोहयोर्मोहः पापीयानिति। कस्मात्? नामूढस्येतरोत्पत्तेः। नामूढस्येतरौ भवतः। मूढः कुप्यति, मूढो रज्यते, मूढो मुह्यतीति। तत्त्वज्ञानाच्च मोहनिवृत्तौ रागादिनिवृत्तिरित्येक-

प्रत्यनीकता। यस्मात् तत्त्वज्ञानात् निवृत्ते मोहे न रागद्वेषौ भवतः, अत एकप्रत्यनीकता। न पुनरेकत्वादिति। एवं च कृत्वा दुःखादीनामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति सिध्यति॥६॥

**[1]निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः॥४।१।७॥**

प्राप्तस्तर्हि

**निमि.......भ्यः।** अदोषो मोहः, दोषनिमित्तत्वाद् रूपादिवदिति॥७॥

**न दोषलक्षणावरोधान्मोहस्य॥४।१।८॥**

नात्र कार्यकारणभावेन पदार्थानां तथाभावोऽतथाभावो वा सिध्यति किन्तु लक्षणस्याभेदादिति। दोषलक्षणं च मोहेऽस्तीति दोषो मोहः॥८॥

**निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः॥४।१।९॥**

तुल्यजातीयानामनेकविधविकल्पो निमित्तनैमित्तिकभावो दृष्ट इति। यथा बुद्धिर्बुद्ध्यन्तरस्य निमित्तम्, तुल्यजातीया चेति। तुर्यादयो द्रव्यस्य निमित्तं द्रव्यजातीयाः।

नोदनाभिघातसंयुक्तसंयोगाः संस्कारश्च गुणाः

इति॥९॥

॥दोषत्रैराश्यप्रकरणम्॥

---

१. °त्तिकनिर्देशान्मोहार्था° J

## [ प्रेत्यभावपरीक्षाप्रकरणम् ]

### आत्मनित्यत्वे प्रेत्यभावसिद्धिः ।।४।१।१०।।

परीक्षिता दोषाः। दोषानन्तरं प्रेत्यभावः। तस्यासिद्धिरात्मनो नित्यत्वात्। नित्य आत्मा। न जायते न म्रियते। उभयं च प्रेत्यभावः, मृत्वा पुनर्जन्म। तत्रायं सिद्धार्थानुवादः,

**आ......द्धिः**। नित्यः सन् आत्मा प्रैति जायते चेति। किमुक्तं भवति म्रियत इति? पूर्वोत्पन्नाभिः शरीरेन्द्रियबुद्धिवेदनाभिर्वियुज्यत इति। किं चोक्तं भवति जायत इति? [१]अपूर्वाभिर्निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनाभिः संबध्यत इति। न पुनर्जन्ममरणे आत्मन उत्पादनिरोधौ नित्यत्वादात्मनः। नित्य आत्मेत्येतत्पूर्वाभ्यस्यसूत्रे प्रतिपादितम्। यस्य पुनरात्मन उत्पादनिरोधौ जन्ममरणे तस्याकृताभ्यागमकृतनाशदोषप्रसङ्ग इत्युक्तम्

**शरीरदाहे पातकाभावात्** [न्या. सू. ३.१.४]

इति सूत्रं वर्णयद्भिरिति ॥१०॥

### व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यात्॥४।१।११॥

कथमुत्पत्तिरिति चेत्? किंधर्मकात् कारणादिदं शरीरेन्द्रियमहाभूतादि व्यक्तमुत्पद्यत इति?

**व्य.........ण्यात्**। किं पुनर्व्यक्तम्? उपलब्धिलक्षणप्राप्तं रूपादियुक्तं द्रव्यम्। तत्सामान्यात् परमाणुलक्षणमपि पृथिव्यादिकारणं व्यक्तमित्युच्यते। किं पुनः सामान्यम्? रूपादियोगः। रूपादिसामान्यात् परमाणवोऽपि व्यक्ता इत्युच्यन्ते।

---

१. र्वोत्पन्नाभि॰ C

रूपादियुक्तेभ्यः परमाणुभ्यो घटादि गवादि व्यक्तमुत्पद्यत इति। कः पुनरत्र न्यायः? प्रत्यक्षप्रामाण्यात् दृष्टा रूपादिमद्भ्यो रूपादिमतामुत्पत्तिरिति। नानेकान्तात्। नायमेकान्तो रूपादिमद्भ्य एव रूपादिमत उत्पत्तिरिति, अरूपाद् अपि संयोगाद् रूपादिमदुत्पद्यमानं घटादि गवादि दृष्टमिति। न, सूत्रार्थापरिज्ञानात्। नायं सूत्रार्थो रूपादिमद् रूपादिमत एवोत्पद्यत इति। अपि तु रूपादिमत्सामग्रीपूर्वकं गवादि व्यक्तमिति सूत्रार्थः। एवं च सति नानेकान्तोऽस्ति। न ह्यरूपायाः सामग्र्या रूपादिमत् कार्यमिति ॥११॥

**न घटाद् घटानिष्पत्तेः ॥४।१।१२॥**

सजातीयात् सजातीयमुत्पद्यत इति मत्वा प्रतिषेधः। न, सूत्रार्थापरिज्ञानादिति। न ब्रूमः सर्वं सर्वस्य कारणमिति, यश्च सर्वं सर्वस्य कारणमभ्युपेयात् स एवं प्रत्यवस्थेयो न घटाद् घट उत्पद्यमानो दृष्ट इति ॥१२॥

**व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ॥४।१।१३॥**

अपि तु

**व्य......षेधः**। यदपि घटादिकं व्यक्तमुत्पद्यते तदपि व्यक्तादेव कपालादेः। व्यक्ताच्चोत्पद्यमानं घटादि न किञ्चिद् बाध्यत इति। रूपादिमत्सामग्रीपूर्वकं गवादि व्यक्तं

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्**

घटवदिति। शब्दवद् वा वैधर्म्येण। तदेतत् तत्त्वम् ॥१३॥

॥प्रेत्यभावपरीक्षाप्रकरणम्॥

## [ शून्यतोपादानप्रकरणम् ]

### अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्॥४।१।१४॥

अतः परं **प्रावादुकानां** दर्शनान्युपन्यस्य कानिचित् प्रतिषिध्यन्ते, कानिचिद् अभ्यनुज्ञायन्त इति। तत्र तावत्,

**अभा.......वात्**। अभावाद् भावो जायत इति कस्यचिद् दर्शनम्। तत्र च न्यायं ब्रुवते, नानुपमृद्य प्रादुर्भावादिति। न किलाविनष्टे कारणे कार्यमुत्पद्यत इति। यथा बीजविनाशोत्तरमङ्कुरः प्रादुर्भवति। यदि च बीजविनाशोऽङ्कुरकारणं नाभविष्यत्, अविनष्टेऽपि बीजेऽङ्कुरोऽभविष्यत्। न चैवमस्ति। तस्माद् बीजविनाशोऽङ्कुरकारण-मिति॥१४॥

### व्याघातादप्रयोगः॥४।१।१५॥

उपमृद्य प्रादुर्भवतीति व्याघातः। यदुपमृद्नाति तदस्ति। न ह्यसदुपमर्दकारण-मिति। यच्च प्रादुर्भवति तन्नास्ति, न हि सदुत्पद्यत इति। तदिदमुपमृद्नाति प्रादुर्भवति चेति व्याहतमुच्यते। को व्याघातः? सहासंभवः। यद्युपमृद्नाति, न जायते। अथ जायते, नोपमृद्नाति॥१५॥

### नातीतानागतयोः कारकशब्दप्रयोगात्॥४।१।१६॥

अतीतेऽनागते च कारकशब्दाः प्रयुज्यमाना दृष्टाः। अतीते तावद् भिन्नं कुम्भमनुशोचति, भिन्नस्य कुम्भस्य कपालानि, अभूत् कुम्भ इति। अनागतेऽपि, पुत्रो जनिष्यते, जनिष्यमाणं पुत्रमभिनन्दति, जनिष्यमाणस्य पुत्रस्य नाम करोतीति।

अजाता: पुत्रा: स्थविरं तापयन्तीति बहुलं प्रयोगा भाक्ता:। एवमयं प्रादुर्भविष्यन्नङ्कुर उपमृद्नातीत्युच्यत इति। क: पुनरुपमर्दार्थ:? आनन्तर्यसामर्थ्यादनन्तरोत्पत्त्यर्थ:। यस्माद् बीजोपमर्दादनन्तरमयं प्रादुर्भवतीति। अत्रोक्तं व्याघातादिति। नाजातेनोपमर्दो नोपमर्दासमर्थो जायत इति। यदपीदमुच्यते, अतीते चानागते च कारकशब्दा प्रयुज्यन्त इति, न प्रयोगो वार्यते। अपि त्वसत: कारणादुत्पत्तिर्न युक्तेति। कारकशब्दानां च त्रैकालिक: प्रयोग:। तदुक्तं प्रमाणसामान्यचिन्तायां वृक्षस्तिष्ठतीति यथा। यत् पुनरेतत् आनन्तर्यसामर्थ्यादुपमृद्य प्रादुर्भवतीत्युच्यत इति, न बीजनाशोऽङ्कुरस्य कारणमपि तु व्याहतव्यूहानां बीजावयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तरमुत्पद्यत इति व्यूहान्तराद् अङ्कुर आविर्भवतीति। न चाविनष्टे पूर्वव्यूहे व्यूहान्तरेण शक्यते भवितुमित्यानन्तर्यं प्रादुर्भावार्थ:। एवं च बीजोपादानं युक्तमिति॥१६॥

## न विनष्टेभ्योऽनिष्पत्ते:॥४।१।१७॥

अस्य चार्थस्य ज्ञापनार्थं सूत्रम्,

**न विन......पत्ते:**। इति। न हि बीजविनाशोऽङ्कुरस्य कारणम्, अपि तु बीजावयवा: पूर्वव्यूहपरित्यागेनेत्यर्थ: सूत्रस्य॥१७॥

## क्रमनिर्देशादप्रतिषेध:॥४।१।१८॥

पूर्वं बीजविनाश: पश्चादङ्कुरोत्पत्तिरिति सूत्रार्थ:। अभावश्चेद् अङ्कुरोत्पत्तिकारणं स्यात् सर्वं सर्वस्मादुत्पद्येत, अभावस्य निर्विशेषत्वात्। न हि शालिबीजे विनष्टे काचिदन्वयशक्तिरस्ति। अनन्वितं च कार्यं सर्वाभि: शक्तिभिरुत्पद्येत। अन्वितं तु दृष्टम्। तस्मान्नाभाव: कारणमिति सूत्रार्थ:॥१८॥

॥शून्यतोपादानप्रकरणम्॥

## [ ईश्वरोपादानताप्रकरणम् ]

### ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्॥४।१।१९॥

**अपर** इदानीमाह **ईश्व......नात्**। पुरुषोऽयं समीहमानो नावश्यं समीहाफलमाप्नोति। तेनावगम्यते पराधीनं पुरुषस्य कर्मफलाराधनमिति। निरपेक्षश्चेत्, पुरुषः कर्मफलोपभोगे समर्थः स्यात्। न कस्यचिदफला क्रिया भवेत्। न कश्चिद् दुःखं कुर्यादिति। उभयं च दृष्टम्। तस्मादीश्वरः कारणमिति॥१९॥

### न पुरुषकर्माभावे फलानिष्पत्तेः॥४।१।२०॥

**न .... त्तेः** इति। ईश्वरः कारणं भवेत्। पुरुषकर्मान्तरेणापि सुखदुःखोपभोगो भवेत्[१]। ततश्च क्रियाविलोपोऽनिर्मोक्षप्रसङ्गश्च[२]। ईश्वरस्यैकरूपत्वादेकरूपा क्रियेति। अथेश्वरः कारणभेदानुविधानेन कार्यं निर्वर्त्तयति, यदपेक्षते तन्न करोतीति प्राप्तम्। न हि कुलालो दण्डादीन् करोति। एवं [३]कर्माद्यपेक्षश्चेदीश्वरो जगदुत्पत्तिकारणं स्यात्, कर्मणि ईश्वरोऽनीश्वरः स्यात्॥२०॥

### तत्कारितत्वादहेतुः॥४।१।२१॥

न ब्रूमः कर्माद्यनपेक्ष ईश्वरः कारणमिति। अपि तु पुरुषकर्म ईश्वरोऽनुगृह्णाति। कोऽनुग्रहार्थः? यद् यथाभूतं यस्य च यदा परिपाककालः, तत् तथा तदा च विनियुङ्क्ते इति। यः पुनरीश्वरं कर्मानपेक्षं कारणत्वेन प्रतिपद्यते, तस्यानिर्मोक्षत्वादिदोषः। सापेक्षे त्वीश्वरे यथोक्तो न दोषः। शेषं **भाष्ये**।

१. ०पभोगौ स्याताम् C २. कर्मलोपोऽनिर्मोक्षश्च C ३. कर्मसापे० C

तत्कारितत्वादित्येवं ब्रुवता निमित्तकारणमीश्वर इत्यभ्युपगतं भवति। यच्च निमित्तं तदितरयोः समवायिकारणासमवायिकारणयोरनुग्राहकम्। यथा तूर्यादि तन्तूनां तत्संयोगानां चेति। ईश्वरश्चेज्जगतो निमित्तम्, यज्जगतः साक्षादुपादान-कारणं तत् किम्? उक्तं पृथिव्यादि परमसूक्ष्मं परमाणुसंज्ञितं [1]व्यक्तं कारणमिति।

व्यक्तकारणाभ्युपगमे च सति निमित्तविशेषविप्रतिपत्तौ ईश्वरप्रक्रिया, यस्मान्निमित्तकारणे विप्रतिपद्यन्ते[2], केचित् कालं केचिदीश्वरं केचित् प्रकृतिमिति। तदेवं निमित्तविशेषविप्रतिपत्तौ किं न्याय्यमिति? ईश्वर एव न्याय्यम्। तत्र हि प्रमाणानि अविघातेन प्रवर्तन्त इति।

अस्तित्वासिद्धिरिति चेत्? अथ मन्यसे सिद्ध ईश्वरस्यास्तित्वे कारणान्तर-निराकरणं निमित्तकारणभावश्च[3] सिध्येत्। तत्तु असिद्धम्। तस्मादयुक्तमेतदिति। न, अत एव तदुपपत्तेः। येनैव न्यायेन ईश्वरस्य कारणत्वं सिध्यति, तेनैवास्तित्वमिति। न ह्यविद्यमानं कारणमिति। कः पुनरीश्वरस्य कारणत्वे न्यायः? अयं न्यायोऽभि-धीयते। प्रधानपरमाणुकर्माणि प्राक् प्रवृत्तेर्बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्ते, अचेतनत्वाद् वास्यादिवदिति। यथा वास्यादि बुद्धिमता तक्ष्णा अधिष्ठितमचेतनत्वात् प्रवर्तते, तथा प्रधानपरमाणुकर्माणि अचेतनानि प्रवर्तन्ते। तस्मात् तान्यपि बुद्धिमत्कारणाधिष्ठितानीति।

तत्र प्रधानकारणिकास्तावत् पुरुषार्थमधिष्ठायकं प्रधानस्य वर्णयन्ति। पुरुषार्थेन प्रयुक्तं प्रधानं प्रवर्तत इति। पुरुषार्थश्च द्वेधा भवति, शब्दाद्युपलब्धिर्गुणपुरुषान्तर-दर्शनं चेति। तदुभयं प्रधानप्रवृत्तिं विना न भवतीति? न, प्राक् प्रवृत्तेस्तदभावात्। यावत् प्रधानं महदादिभावेन न परिणमते, तावन्न शब्दाद्युपलब्धिरस्ति। न गुण-पुरुषान्तरोपलब्धिरिति हेत्वभावात् प्रधानप्रवृत्तिर्न युक्ता। अथास्ति, नासदात्मानं लभते न सन्निरुध्यत इति? एवं च सति विद्यमानः पुरुषार्थः प्रधानं प्रवर्तयतीति न पुरुषार्था प्रधानस्य प्रवृत्तिः। न हि लोके यद् यस्य भवति स तदर्थं पुनर्यतत

१. द्रव्यमिति C २. °कारणं प्रतिपद्यन्ते J ३. °कारणाभा° C

इति। सततं च प्रवृत्तिः प्राप्नोति कारणस्य सन्निहितत्वात्। पुरुषार्थः प्रवृत्तेः कारणमिति पुरुषार्थस्य नित्यत्वात् सततं प्रवृत्त्या भवितव्यमिति। अथ विद्यमानोऽपि न प्रवर्तयति, न तर्हि पुरुषार्थः कारणमिति। यस्याभावात् प्रधानं न प्रवर्तते यस्य च भावात् प्रवर्तते तत् कारणमिति। अथ विद्यमानः प्रतिबन्धान्न प्रवर्तयति, प्रतिबन्धापगमस्याशक्यत्वात् सततमप्रवृत्तिः। यत्तत् प्रतिबन्धकारणं पुरुषार्थस्य तस्यापगमः कर्तुमशक्यः, न तदात्मानं जहातीति प्रतिबन्धकस्य च नित्यत्वात् नित्यमप्रवृत्त्या भवितव्यम्। [१]यां च भवन्तः सत्त्वरजस्तमसां साम्यावस्थां प्रकृतिं वर्णयन्ति सा कुतो निवर्तत इति वक्तव्यम्। न चानिवृत्तायां साम्यावस्थायां वैषम्येण शक्यं भवितुम्।

अथाङ्गाङ्गीभावस्यानियमात् वैषम्यं भवतीति तत्रापि भवन्तं पर्यनुयुञ्ज्महे, कथं साम्येनावस्थितमधिकं हीनं वा भवति, नापूर्वोपचयो विद्यते न पूर्वहानमस्तीति। यांश्च शब्दादीन् प्रागनुपलब्धस्वरूपान् पुरुष उपलभते बुद्धिरुपलम्भयतीति ते किमुपजातविशेषा उतानुपजातविशेषा इति? यद्युपजातविशेषा उपलभ्यन्त इति, व्याहतं भवति नासदात्मानं लभत इति। अथानुपजातविशेषा एवोपलभ्यन्ते तथाप्यनिवृत्तो व्याघातः प्रधानं [२]पुरुषार्थं प्रति प्रवर्तयतीति। सोऽयं प्रधानवादः यावद् यावद् विचार्यते, तावत् तावत् प्रमाणवृत्तं बाधत इति।

येऽपि परमाणून् पुरुषकर्माधिष्ठितान् जगतः कारणत्वेन वर्णयन्ति तान् प्रतीदमुच्यते, परमाणवः प्रवर्तन्त इति सततं प्रवृत्त्या भवितव्यम्। अथ कालविशेषापेक्षाः प्रवर्तन्ते, परमाणुभिः कालो व्याख्यातः। यथा अचेतनत्वात् परमाणवो बुद्धिमन्तमधिष्ठातारमपेक्षन्ते तथा कालोऽपीति, न हि तत्राचेतनत्वं निवर्तत इति। [३]क्षीरादिवदचेतनस्यापि प्रवृत्तिरिति चेत्? यथा अपत्यभरणार्थं क्षीरादेरचेतनस्य प्रवृत्तिरेवं परमाणवोऽचेतनाः सन्तः पुरुषार्थं प्रवर्तिष्यन्त इति। तन्न युक्तम्। साध्यसमत्वात्। यथैव परमाणवः स्वतन्त्राः प्रवर्तन्त इति साध्यम्, तथा क्षीराद्यचेतनं

१. यदा C २. पुरुषार्थं प्रव॰ C ३. सांख्यकारिका ५७

स्वतन्त्रं प्रवर्तत इति। यदि च क्षीरादि स्वतन्त्रं प्रवर्तेत मृतेष्वपि पूर्ववत् प्रवर्तेत। न तु प्रवर्तते। अतोऽवगम्यते बुद्धिमत्कारणाधिष्ठितं तदपि। न चायं हेतुः। तस्मान्निवर्तते। एवं यावद् यावदचेतनं प्रवर्तते सर्वं [१]तत् बुद्धिमत्कारणाधिष्ठितमिति।

अयमपरो हेतुः। बुद्धिमत्कारणाधिष्ठितं महाभूतादि व्यक्तं सुखदुःखादिनिमित्तं भवति रूपादिमत्त्वात् तुर्यादिवदिति। धर्माधर्मौ बुद्धिमत्कारणाधिष्ठितौ पुरुष-स्योपभोगं कुरुतः करणत्वाद् वास्यादिवदिति। आत्मैवाधिष्ठाता धर्माधर्मयोर्भ-विष्यतीति चेत्? यस्य तौ धर्माधर्मौ स एवाधिष्ठाता भविष्यतीति न युक्तम्। प्राक् [२]कायकरणोत्पत्तेः तदसंभवात्। यावत् [३]कायकरणसंघातो नोपजायते पुरुषस्य तावदयमज्ञः [४]उपसन्धातापि उपलभ्यानपि तावद् रूपादीन् नोपलभते कुतोऽनुप-लभ्यौ धर्माधर्मावुपलप्स्यत इति। यदि च पुरुषः स्वतन्त्रः प्रवर्तते, न दुःखं कुर्यात्। न हि कश्चिदात्मनो दुःखमिच्छतीति। यश्चात्मनोऽङ्गोपघातं शिरश्छेदादि वा करोति, सोऽपि तद्वैकल्ये प्रायणे वा हितबुद्धिः प्रवर्तत इति।

यदि पुनर्धर्माधर्माभ्यामेवाधिष्ठिताः परमाणवः प्रवर्तेरन्, न युक्तमिदम्, अचेतनत्वात्। न हि किञ्चिदचेतनं स्वतन्त्रमधिष्ठायकं दृष्टमिति। अभ्युपगम्यापि [५]ब्रूमः, धर्माधर्मयोः परमाणुषु वृत्तिसामर्थ्यम्, न करणस्य केवलस्य क्रिया-निवृत्तावसामर्थ्यात्। न हि करणं केवलं क्रियां निर्वर्तयदुपलभ्यत इति।

अथ परमाण्वपेक्षाभ्यां धर्माधर्माभ्यां क्रिया जन्यते[६], एतदपि न युक्तम्, अदृष्टत्वात्। न हि कर्मकरणाभ्यां क्रियां जन्यमानां क्वचिदपि पश्याम इति आत्मा कर्ता भविष्यतीति। उक्तमेतत्, अज्ञत्वादिति। अकारणोत्पत्तिर्भविष्यतीति न युक्तम-दृष्टत्वादिति। न चान्या गतिरस्ति। तस्माद् बुद्धिमत्कारणाधिष्ठिताः परमाणवः कर्माणि च प्रवर्तन्त इति।

१. तत् चेतनाधि॰ C २, ३. कार्यक॰ C ४. उपसन्धातापि नास्ति J ५. च for ब्रूमः C ६. क्रियते C

क्रियानावेशादकारणमिति चेत्— अथ मन्यसे ये खलु कर्तारो भवन्ति ते क्रियाविष्टा दृष्टाः कुलालादय इति, क्रियारहितश्चेश्वरः। तस्मादकारणमिति। न, विकल्पानुपपत्तेः। ईश्वरो निष्क्रिय इति कां क्रियामधिकृत्योच्यते? द्वयी हि नः शास्त्रे क्रिया, उत्क्षेपणादिका चाख्यातशब्दवाच्या च। यद्याख्यातशब्दवाच्याम-धिकृत्योच्यते, तदा असिद्धो हेतुः, स्वातन्त्र्याभ्युपगमात्। स्वातन्त्र्यं हि भगवति नित्यमस्ति। किं पुनः स्वातन्त्र्यम्? अन्यकारकाप्रयोज्यत्वमितरकारकप्रयोक्तृत्वं च। तदुक्तं कारकाणि वर्णयद्भिरिति[१]। अथोत्क्षेपणादिकां क्रियामधिकृत्योच्यते निष्क्रिय इति, तदा अनेकान्तः। क्रियावच्च कारणं दृष्टं निष्क्रियं चेति। कदाचिद् द्रव्याणि उपरतक्रियाणि द्रव्यमारभन्ते। संयोगात् निवृत्ते कर्मणि संयोगोपकरणानि द्रव्याणि द्रव्यमारभन्त इति निष्क्रियाणामारम्भः। यदा च युगपद् बहूनि द्रव्याणि संहन्यन्ते, तदा असाधारणकार्यव्यावृत्तेभ्यः संयोगेभ्य एकमेव द्रव्यमुत्पद्यते। एकावयविविभागे तु द्रव्यनिवृत्तौ शेषाणि द्रव्यान्तराणि द्रव्यमारभन्त इति निष्क्रियाणामारम्भः। कानिचित् पुनः क्रियावन्तमारभन्ते। तद् यथान्यतरकर्मजात् संयोगात् निवृत्ते कर्मणि इतरस्मिन् द्रव्ये कर्मनिवृत्तिसमकालमेव द्रव्यमुत्पद्यते तदा क्रियावता द्रव्येणारम्भात् क्रियावतामारम्भः। विरोधश्चोत्क्षेपणादिकायाः क्रियाया अनभ्युपगमादिति।

न कारणमीश्वरः विकल्पानुपपत्तेः। कर्ता चेदीश्वरो भवति किं सापेक्षः करोति, उत निरपेक्ष इति। किं चातः? यदि सापेक्षः, यदपेक्षते[२] तस्याकर्ता इति। एवमन्यत्रापि प्रसङ्गः। तदपि साधनं येन करोति तस्याकर्ता इति। अथायं किंचिदनपेक्ष्य करोति, तद्वदन्यत्रापि प्रसङ्गः। अथायं सर्वमनपेक्षः[३] करोति, एवमपि पुरुषकर्माफलं प्रसज्यते, अनिर्मोक्षप्रसङ्गश्च। यश्चाकर्मनिमित्ते सर्गे दोषः स इहापि प्रसज्यत इति? निरपेक्षकर्तृत्वस्यानभ्युपगमात् धर्माधर्मवैफल्यादिदोषो नास्ति। न चाकर्मनिमित्ते सर्गे दोष इति। येन करोति तस्याकर्तेति चेत्? न,

---

१. द्रः वा २.१.१६ २. येन करोति C ३. वैयर्थ्यादि॰ J

अनेकान्तात्। नायमेकान्तोऽस्ति येन करोति स तन्न करोतीति। यथानेकशिल्पपर्यवदातः पुरुषः करणान्तरोपादानो वास्यादि करोति, वास्याद्युपादानो दण्डादि करोति, तदुपादानो घटादीन्। न च पर्यायकर्तृत्वे सति अकर्तृत्वम्, तथेश्वरोऽपि धर्माधर्मोपादानः शरीरसुखादिकं, आत्ममनःसंयोगशुद्धाशुद्धाभिसन्धिसाधनश्च धर्माधर्मौ, सुखदुःखस्मृत्यपेक्षः तत्साधनाद्यपेक्षश्च शुद्धमशुद्धं वाभिसन्धिमिति। यदा करोति तदा साधनस्याकर्तेति चेत्, अथ मन्यसे यदायं साध्यं किञ्चिद् वस्तु[1] निर्वर्तयति तदा येन साधयति तस्याकर्ता प्रसज्यत इति? नैतदेवम्। न ब्रूमः, सर्वानर्थान् अयम् एकस्मिन् काले करोतीति, अपि तु पर्यायेण। पर्यायकर्तृत्वे चायमदोषः। यदादौ करोति तस्यासाधनोत्पत्तिरिति चेत्, अथ मन्यसे यदि शरीरादिकर्तृत्वं धर्माधर्माद्यपेक्षस्य, अथ यदादौ करोति कथं तत्? आदेरनभ्युपगमाद् अचोद्यम्[2]। अनादिरयं संसार इति प्रतिपादितमेतत्। धर्माधर्मसाफल्यं चैवम्। यदि चानादिः संसारः सापेक्षश्च कर्ता, एवं प्राण्यन्तरसमवायिनां धर्माधर्माणां साफल्यम्।

अथायमीश्वरः कुर्वाणः किमर्थं करोतीति? लोके हि ये कर्तारो भवन्ति ते किञ्चिद् वस्तूद्दिश्य प्रवर्तन्त इदमाप्स्यामि इदं हास्यामि चेति। न पुनरीश्वरस्य हेयमस्ति दुःखाभावात्; नोपादेयं वशित्वात्।

क्रीडार्थमित्येके। एके तावद् ब्रुवते क्रीडार्थमीश्वरः सृजतीति। नन्वेदमयुक्तम्। क्रीडा हि नाम रत्यर्थं भवति विना क्रीडया रतिमविन्दताम्। न च रत्यर्थी भगवान्, दुःखाभावादित्युक्तम्। दुःखिनश्च सुखोपगमार्थं क्रीडन्ति।

विभूतिख्यापनार्थमित्यपरे। जगतो वैश्वरूप्यं ख्यापनीयम् इतीश्वरः प्रवर्तत इत्यपरे मन्यन्ते। एतदपि तादृगेव। न हि विभूतिख्यापनेन कश्चिदतिशयो लभ्यते, न चास्याख्यापनेन किंचिद्धीयत इति।

---

१. दृष्टं C २. अदेश्यमेतत् C

किमर्थं तर्हि करोति? तत्स्वाभाव्यात् प्रवर्तत इत्यदुष्टम्। यथा भूम्यादीनि भूतानि धारणादिक्रियां तत्स्वाभाव्यात् कुर्वन्ति, तथेश्वरोऽपि तत्स्वाभाव्यात् प्रवर्तते। प्रवृत्तिस्वभावकं तत्तत्त्वमिति। तत्स्वाभाव्यात् सततं प्रवृत्तिरिति चेत्? अथ मन्यसे यदि प्रवृत्तिस्वभावकं तत् तत्त्वं प्रवृत्तिनिवृत्ती न प्राप्नुतः। न हि प्रवृत्तिस्वभावके तत्त्वे निवृत्तिर्युज्यत इति क्रमेण चोत्पत्तिर्न प्राप्नोति, तत्त्वस्यैकरूपत्वात्। इदमिदानीं भवत्विदं मा भूदित्येतन्न युक्तम्। न ह्येकरूपात् कारणात् कार्यभेदं पश्याम इति। नैष दोषः, बुद्धिमत्त्वविशेषणात्। बुद्धिमत्तत्त्वमित्येतत् प्रतिपादितम्। बुद्धिमत्तया च विशिष्यमाणं सापेक्षम्। सापेक्षं च न सर्वं प्रवर्तते। न च सर्वमेकस्मिन् काले उत्पादयति यस्य कारणसान्निध्यं तद् भवति। यदसन्निहितकारणं तन्न भवतीति। न च सर्वस्य युगपत् कारणसान्निध्यमस्ति इत्यतः सर्वस्य युगपदुत्पादो न प्रसक्तः। स खलु प्रवर्तमानो धर्माधर्मयोः परिपाककालमपेक्षते कारणोत्पादं तद्भागिनां च सत्त्वानां तत्र सन्निधानं तद्भागिसत्त्वधर्माधर्मपरिपाकं च तदप्रतिबन्धं चेति।

यत् तदीश्वरस्यैश्वर्यं किं तन्नित्यमनित्यं वेति? यद्यनित्यं तस्य कारणं वक्तव्यमिति। यस्य चानित्यमैश्वर्यं तस्य कारणतो भवति अणिमादि[१]। एवमन्येषामपीत्यनेक ईश्वरः प्रसज्यते। अथानेकत्वे किं बाध्यत इति? एकस्मिन् वस्तुनि व्याहतकामयोरीश्वरयोः प्रवृत्तिर्न प्राप्नोति। अथैकमितरोऽतिशेते, योऽतिशेते स ईश्वरो नेतर इति। अथ नित्यमैश्वर्यं धर्मवैयर्थ्यम्। न तद् धर्माद् भवतीति। नित्यमिति ब्रूमः। न च धर्मवैयर्थ्यं दोषस्तस्यैव। यो धर्मः स ईश्वरे। नासौ तत्रैश्वर्यं करोति। किं तु प्रत्यात्मवृत्तीन् धर्माधर्मसन्निचयान् अनुगृह्णाति। न च ईश्वरे धर्मोऽस्तीत्यचोद्यमेतत्।

तत्स्वभावानवधारणात् सन्देहः, ईश्वरः किं द्रव्यमाहो गुणादीनामन्यतम इति। द्रव्यं बुद्धिगुणत्वाद् द्रव्यान्तरवदिति। बुद्धिगुणत्वात् तर्हि आत्मान्तरमिति?

---

१. अणिमादेः C

नात्मान्तरं गुणभेदात्। यथा गुणभेदे सति पृथिव्यादयो नात्मानः, तथा गुणभिन्न ईश्वरः। तस्माद् असावपि नात्मेति।

कः पुनरस्य गुणभेदः? **एके** तावद् ब्रुवते, धर्मज्ञानवैराग्यैश्वर्याण्यतिशयवन्ति तस्मिन्निति। नित्यत्वमतिशयः। एतत् तु न बुध्यामहे यथा बुद्धिमत्तायामीश्वरस्य प्रमाणसद्भावो नैवं धर्मादिनित्यत्वे प्रमाणमस्तीति। न चाप्रामाणकं प्रतिपत्तुं शक्यमिति। अतिशयस्तु बुद्धिनित्यत्वं गुणभेदः। तत्र नित्या बुद्धिः, संख्यादयश्च सामान्यगुणाः। षड्गुण आकाशवदीश्वर इति।

अथास्य बुद्धिनित्यत्वे किं प्रमाणमिति? नन्विदमेव। बुद्धिमत्कारणाधिष्ठिताः परमाणवः प्रवर्तन्त इति। बुद्धिमत्तायामेतत् साधनं सा पुनर्नित्येत्येतत् कुतः? प्रत्यर्थनियमासंभवात्। ये खलु प्रत्यर्थनियता बुद्धिभेदाः ते शरीरादिकारणसन्निधाने सति भवन्ति। न त्वियं प्रत्यर्थनियता युगपदनेककार्योत्पत्तिदर्शनात्। तद् यथा स्थावरभेदस्यानेकस्य युगपदुत्पाद इति। स च प्रत्यर्थनियतेषु बुद्धिभेदेष्वीश्वरस्य न युक्तः [१]संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धय एव तस्य गुणाः[२]।

अथ बुद्धिमत्तयेश्वरस्य शरीरयोगमपि प्रतिपद्यते? तेनापि प्रतिपद्यमानेन शरीरादयो नित्या अनित्या वा अवश्यमेषितव्याः। यद्यनित्याः धर्माधर्मसद्भावोऽप्यभ्युपेयः। तदभ्युपगमे च तत्तन्त्रत्वादीश्वरो नेश्वरः स्यात्। अथ नित्यानि शरीरादीनि कल्पयसि, एवमपि दृष्टविपरीतं कल्पितं भवति। दृष्टविपर्ययं प्रतिपद्यमानेन वरं बुद्धेरेव नित्यत्वं प्रतिपत्तव्यमिति।

अथ सन्तानवर्तिनीमनेकां बुद्धिमीश्वरे प्रतिपद्येत? एवमपि न युगपदुत्पादः स्थावरादीनां प्राप्नोति। अथ ताः सन्तानवर्तिन्यः सर्वार्थाबुद्धयो भवन्तीति? एवमपि दृष्टबुद्धिविपरीतं कल्पितं भवति। एवं च कल्पयता बुद्धिनित्यत्वमेव प्रतिपत्तव्यम्। एतावच्चैतत् स्यात्। नित्या वा सन्तानवर्तिनी वा। सन्तानवर्तिनीति न युक्तम्। यदि गुणभेदाद् भेदः, यदभिन्नगुणं तदेकं प्राप्नोति। यथा दिक्कालाविति? नानेकान्तात्।

---

१, २. om J

गुणभेदात् नानात्वं ब्रूमः। न पुनर्गुणाभेदादेकत्वमिति। तथा हि अभिन्नगुणानां घटादीनां नानात्वं दृष्टम्। दिक्कालयोश्च गुणाभेदेऽपि कार्यभेदान्नानात्वमिति। न च बुद्धिमत्तया विनेश्वरस्य जगदुत्पादो घटत इति। सा च बुद्धिः सर्वार्थातीतानागतवर्तमानविषया प्रत्यक्षा, नानुमानिकी नागमिकी च। न हि तत्रानुमानं नागम इति।

ज्ञाननित्यत्वाच्च न संस्कारः। नित्यं ज्ञानमीश्वरस्येति न तत्र संस्कारो विद्यत इति संस्काराभावाद् बुद्धिनित्यत्वाच्च न स्मृतिः। स्मृतेरभावाच्च नानुमानम्।

न दुःखमधर्मस्याभावात्। अत एव न वैराग्यम्, यत्र दुःखं तत्र वैराग्यमिति। दुःखाभावान्न विरज्यत इति। अत एव न द्वेषो दुःखाभावादिति। इच्छा तु विद्यतेऽक्लिष्टाव्याहता सर्वार्थेषु यथा बुद्धिरिति।

अथ किमयं बद्धो मुक्त इति? न बद्धो दुःखाभावादेव। अबद्धत्वात् न मुक्त इति। बन्धवान् मुच्यते, न च भगवति बन्धनमस्तीति। अतो न मुक्तः।

आत्मान्तराणामसंबन्धादधिष्ठातृत्वमनुपपन्नमिति चेत्? अथ मन्यसे प्राण्यन्तरसमवायिनो धर्माश्चाधर्माश्च। ते न साक्षादीश्वरेण संबध्यन्ते। न पारम्पर्येण। न चासंबद्धमधिष्ठातुं शक्यते। न चानधिष्ठितयोर्धर्माधर्मयोः प्रवृत्तिर्युक्तेति? तच्च न, अजसंबन्धोपपत्तेः। अजः संबन्ध आत्मान्तराणामित्येक इच्छन्ति। न चैतदिह प्रतिषिध्यत इति अप्रतिषेधादुपात्तः स इति। ते त्वजं संबन्धं प्रमाणतः प्रतिपादयन्ति व्यापकैराकाशादिभिः संबद्ध ईश्वरो मूर्तिमद्द्रव्यसंबन्धित्वाद् घटवदिति। यथा घटादि मूर्तिमता घटादिना संबन्धित्वेन व्यापकैराकाशादिभिः संबन्धि भवति, तथेश्वरोऽपि मूर्तिमत्संबन्धीति। तस्मादयमपि व्यापकैराकाशादिभिः संबध्यत इति।

स पुनरात्मेश्वरसंबन्धः किं व्यापकोऽव्यापको वेति? अर्थाभावादव्याकरणीयः प्रश्नः। आत्मेश्वरसंबन्धोऽस्तीत्येतदेव शक्यते वक्तुम्। स पुनरीश्वरात्मानौ व्याप्नोति, न व्याप्नोतीति न व्याक्रियते। येऽप्यजं संयोगं नेच्छन्ति तेषामप्यणुमनःसंयोगोप-

पत्तेरस्ति संबन्धः। यानि प्रत्यात्ममनांसि तानि सर्वाणीश्वरसंबद्धानीत्यतः संबन्धिसंबन्धोपपत्तेरात्मान्तराण्यधितिष्ठतीति यथा आत्महस्तसंयोगप्रयत्नाभ्यां हस्ते कर्म भवति, उत्पन्नकर्मको हस्तः संदंशादिना संबध्यते, तत्संबन्धादयःपिण्डाद्य-धितिष्ठतीति। यदि तर्हि सर्गादावीश्वरस्य कारणत्वेऽयं न्यायोऽभिधीयते इदानीमीश्वरो न कारणमिति प्राप्तम्? इदानीमपि स एव न्यायः। मृतानामशरीरिणां[1] यौ धर्माधर्मौ तौ बुद्धिमत्कारणाधिष्ठिताविति समानो न्यायः। बुद्धिमत्कारणाधिष्ठितानि स्वासु स्वासु धारणादिक्रियासु महाभूतानि वाय्वन्तानि प्रवर्तन्ते अचेतनत्वाद् वास्यादिव-दिति। एवं कार्यत्वात् तृणादीनि पक्षीकृत्य दर्शनस्पर्शनविषयत्वादिति वक्तव्यम्। एवं यत्र यत्र विप्रतिपत्तिः कार्यत्वं च यत्, तदनेनैव न्यायेनानेन दृष्टान्तेन वास्या-दिना पक्षयित्वा साधयितव्यमिति।

आगमाच्च। आगमश्चास्मिन् पक्षे श्रूयते[2] ईश्वरकारणे यथा

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा[3]॥
यदा स देवो जागर्ति तदेदं चेष्टते जगत्।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति[4]॥२१॥

॥ईश्वरोपादानताप्रकरणम्॥

## [ आकस्मिकत्वप्रकरणम् ]

### अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्॥४।१।२२॥

**अपर** इदानीमाह, **अनि.......नात्**। यथा कण्टकस्य तैक्ष्ण्यादि निर्निमित्तं

१. मृतशरीराणां C  २. आगमादपि श्रू॰ C  ३. महाभारते ३.३०.२८  ४. मनु-संहितायाम् १.५२

चोपादानवच्च, तथा शरीरादिसर्गोऽपीति। तदिदं दृष्टान्तसूत्रम्। कः पुनरत्र न्यायः? [१]अनिमित्तरचनाविशेषाः शरीरादयः संस्थानविशेषवत्त्वात् कण्टकादिवदिति। न, अनुपलभ्यमाननिमित्तानामनुमानतो निमित्तोपलब्धेः। यस्य निमित्तं प्रत्यक्षतो नोपलभ्यते, तस्यानुमानतो निमित्तं प्रत्येतव्यम्। कुतः? निमित्तवद्द्रव्यसामान्यात्। यानि खलु निमित्तवन्ति द्रव्याणि संस्थानविशेषवन्ति तानि घटादीनि। संस्थानविशेषवच्च शरीरं कण्टकादयश्च। तस्मात् तेऽपि निमित्तवन्त इति। उक्तं चात्र। किमुक्तम्? **पूर्वकृतफलानुबन्धात् तदुत्पत्तिरि**ति[२]। न चोभयपक्षसंप्रतिपन्नं संस्थानविशेषवन्निर्निमित्तं दृष्टमिति॥२२॥

**अनिमित्तनिमित्तत्वान्नानिमित्ततः॥४।१।२३॥**

**अपरे तु अनि......त्ततः**। इति परिहारं वर्णयन्ति। अनिमित्तमेव निमित्तम्। यतश्चोत्पत्तिस्तन्निमित्तमिति अनिमित्तनिमित्तत्वात् नानिमित्तत उत्पत्तिरिति॥२३॥

**निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः॥४।१।२४॥**

एतच्च न, **निमि......षेधः**। अन्यन्निमित्तम्, अन्यच्च निमित्तप्रत्याख्यानम्। न च प्रत्याख्यानमेव प्रत्याख्येयं भवति। निमित्तमित्यर्थाभ्यनुज्ञा। अनिमित्तमिति तस्य प्रतिषेधः। अभ्यनुज्ञाप्रतिषेधयोश्चैकत्वमयुक्तमिति। स खल्वयं वादोऽकर्मनिमित्तः शरीरसर्ग[३] इत्येतस्मान्न भिद्यत इति। अभेदात् तत्प्रतिषेधेनैव प्रतिषिद्धो बोध्यव्यः।

कण्टकादीनां चानिमित्तं जन्मेति ब्रुवाणः प्रष्टव्यः, किं कण्टकादिमात्रस्यानिमित्तं जन्म उत सर्वस्येति? यदि कण्टकादिमात्रस्यानिमित्तं जन्म, तच्छेषेण दृष्टान्तेन

१. °मित्ता रचना° C  २. न्या. सू. ३.२.६०  ३. सत्त्वसर्ग C

शक्यं प्रतिपादयितुं निमित्तवदिति। अथ सर्वमनिमित्तं जन्मेत्ययं पक्षः, तथापि व्याघातः प्रतिपाद्यप्रतिपादकन्यायस्याभ्युपगमात् सर्वं चानिमित्तं प्रतिपादयसि चेति व्याहतम्। वाक्योपादानाच्च व्याघातः। अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिवदिति वाक्यं प्रतिपादकमुपादीयते। न च निमित्तमस्तीति व्याघातः। अनिमित्ततो भावोत्पत्तिरिति च वाक्यम्, सनिमित्ताभावोत्पत्तिरिति च वाक्यम्। यद्यनयोरर्थभेदं प्रतिपद्यसे, वाक्यभेदादर्थप्रतिपत्तिरिति व्याहतं भवति अनिमित्ता भावोत्पत्तिरिति। अथ न वाक्यभेदेनार्थभेदं प्रतिपद्यसे, वाक्यविशेषोपादानं व्याहतम्। यत्किञ्चिद् वाक्यमुपादेयमिति। अनिमित्तां भावोत्पत्तिं प्रतिपद्यमानेन सर्वलोकव्यवहार उच्छिन्नो भवति। अनिमित्ता भावोत्पत्तिरिति च भावमात्रपरीक्षाप्रकरणे न दृष्टान्तोऽस्ति। अथ शरीराद्येकदेशं पक्षयसि? तथाप्यन्यतरधर्मासिद्धो दृष्टान्तः संस्थानविशेषवत्त्वस्य विद्यमानत्वात् अनिमित्तत्वस्य चाभावादिति ॥२४॥

॥आकस्मिकत्वप्रकरणम्॥

## [ सर्वानित्यताप्रकरणम् ]

### सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात्॥४।१।२५॥

**अन्ये** तु मन्यन्ते, **सर्व......त्वात्**। किमनित्यं नाम? यस्य कदाचिद्भावस्तदनित्यम्। उत्पत्तिधर्मकमनुत्पन्नं नास्ति विनाशधर्मकं च विनष्टं नास्तीति। किं पुनः सर्वम्? भौतिकं शरीरादि अभौतिकं च बुद्ध्यादि। तदुभयम् उत्पत्तिविनाशधर्मकमिति विज्ञायत इति। तस्मात् सर्वमनित्यमिति। सूत्रस्य दृष्टान्तार्थत्वात् तस्य सर्वान्तर्भावादुदाहरणाभावः। सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वादिति यदि ब्रूषे दृष्टान्ताभावः। सर्वस्य पक्षीकृतत्वात्। न साध्यमुदाहरणं युक्तमिति। उत्पत्तिविनाशधर्मकत्वादिति चायं हेतुरव्यापकः। यदि सर्वं पक्षयित्वा उत्पत्ति-

विनाशधर्मकत्वादिति ब्रूषे, परमाण्वाकाशादिषु तद्गुणेषु च केषुचित् सामान्य-विशेषसमवायेषु नोत्पत्तिविनाशधर्मकत्वमस्तीति हेतुरव्यापकः॥२५॥

**नानित्यतानित्यत्वात्॥४।१।२६॥**

सर्वमनित्यमेवेति ब्रुवाणः प्रष्टव्यः, किं सर्वस्यानित्यता नित्या, आहोस्विद-नित्येति? यद्यनित्यता नित्या, न तर्हि सर्वमनित्यम्। अथानित्या नित्यता, अनित्यताया अभावात् सर्वमनित्यमिति व्याहतो हेतुः॥२६॥

**तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत्॥४।१।२७॥**

यथाग्निर्दाह्यं विनाश्यानुविनश्यति एवमनित्यतापि सर्वं विनाश्यानु-विनंक्ष्यतीति॥२७॥

**नित्यस्याप्रत्याख्यानं यथोपलब्धि व्यवस्थानात्॥४।१।२८॥**

अयं च खलु वादः सर्वमनित्यमिति नित्यं प्रत्याचष्टे। नित्यस्य प्रत्याख्या-नमशक्यं यथोपलब्धि व्यवस्थानात्। यत्र यत्रायं हेतुरुपलभ्यते, तत्र तत्र हेतुसामर्थ्यादनित्यत्वं प्रतिपद्यामहे। यत्र पुनरयं हेतुर्नास्ति, तेषामनित्यत्वं कथं प्रतिपत्तव्यम्? अथाकारणकमनित्यत्वं तेषां प्रतिपद्यसे, व्याहतस्तर्हि हेतुः, उत्पत्ति-विनाशधर्मकत्वादिति। अनित्यमिति च ब्रुवाणेनावश्यं नित्यमभ्युपेयम्, नञः प्रसज्यप्रतिषेधपर्युदासविषयत्वात्। अयं खलु नञ् प्रवर्तमानः प्रसज्यप्रतिषेधे वा प्रवर्तते पर्युदासे वा। तथा चोत्तरपदसिद्धिः। यदि नित्यं न भवतीत्यनित्यम्, तर्हि यदन्यत्र भवति तदन्यत्र प्रतिषिध्यत इति सिद्धमुत्तरपदम्। अथ नित्यादन्यद-

नित्यमिति, तथाप्युत्तरपदेन भवितव्यम्। नासत्युत्तरपदार्थे तस्मादन्यदनित्यत्वं[१] सिध्यतीति। अनित्यताभावाच्च सर्वमनित्यमिति न दोषः, अनित्यताया धर्मत्वेनाभ्युपगमात्। अनित्यत्वं नाम धर्मः। सोऽसति धर्मिणि न भवतीति। एवं च सति सर्वस्यानित्यत्वं न दोष इति। अथ पुनरुत्पत्तिविनाशधर्मकेणानित्येन सिद्धेन शेषं सन्दिह्यमानानित्यत्वं तद्विपरीतनित्यत्वं च सत्त्वादनित्यमिति साधयेत्, तस्याप्युत्तरपदसिद्ध्या नित्यत्वसिद्धिरिति प्रतिज्ञादोषाद् वाक्यं निवर्तत इति ॥२८॥

॥सर्वानित्यताप्रकरणम्॥

## [ सर्वनित्यत्वनिराकरणप्रकरणम् ]

**सर्वं नित्यं पञ्चभूतनित्यत्वात्॥४।१।२९॥**

अयमपर एकान्तः, **सर्वं .....त्वात्**। इति । भूतमात्रमिदं सर्वम्। तानि च नित्यानि भूतोच्छेदानुपपत्तेः सर्वं नित्यमिति॥२९॥

**नोत्पत्तिविनाशकारणोपलब्धेः॥४।१।३०॥**

उत्पत्तिकारणं च भावानामुपलभ्यते विनाशकारणं च। तदुभयं नित्यत्वे न स्यात्। न हि नित्यं नाम जायते विनश्यति वा॥३०॥

**तल्लक्षणावरोधादप्रतिषेधः॥४।१।३१॥**

यदिदमुत्पद्यते विनश्यतीति च मन्यसे, न तद् भूतलक्षणहीनं गृह्यते।

१. तस्मादन्यत्वं C

भूतलक्षणावरोधात् सर्वं नित्यमिति। सर्वं नित्यमिति ब्रुवाणो न किञ्चिज्जायते न विनश्यतीति प्रतिपद्येत, तत्प्रतिपत्तौ च हिताहितप्राप्तिपरिहारार्थोऽस्य परिस्पन्दो व्यर्थ आपद्येत। सर्वस्य च पक्षीकरणाद् दृष्टान्ताभावः। वाक्योपादानं च व्याहतम्। यदिदं वाक्यं परप्रतिपादनायोपादीयते, सर्वं नित्यं पञ्चभूतनित्यत्वादिति, अनेन वाक्येनायं किं करोति? किमसिद्धं साधयति, उत सिद्धं निवर्तयति? यदि तावदसिद्धं साधयति, केयं सिद्धिर्या वाक्येन प्रतिपाद्यते? यदि विज्ञानम्, ननु व्याहतं भवति सर्वम्। नित्यं विज्ञानं च जायत इति। अथ प्रतिपत्तिर्न क्रियते, का तर्हि सिद्धिः, या प्रवर्तमानं साधनं करोति। अवश्यं कारकेणापूर्वं किञ्चिन्निष्पाद्यम्। तन्निष्पत्तेर्व्याघातः कारकत्वं वा निवर्तते। न हि नित्यस्य किञ्चित् कर्तव्यमस्ति। अथ सिद्धं निवर्तयतीति पक्ष आश्रीयते? एतस्मिन्नपि पक्षे नित्यं निवर्तते चेति व्याहतम्। अथ तिरोभवति? तिरोभावेऽप्यवश्यमपूर्वोत्पत्तिः पूर्ववस्तुविनाशो वाभ्युपेय इति सर्वथा न व्याघातान्मुच्यसे। यच्च वस्तु प्रागनुपलब्धरूपं पश्चादुपलभ्यते, तत्राप्यवश्यमपूर्वोत्पत्तिर्वा पूर्ववस्तुविनाशो वाभ्युपेय इति। तदभ्युपगमे च व्याघातः॥३१॥

**नोत्पत्तितत्कारणोपलब्धेः॥४।१।३२॥**

यत्पुनरेतद् भूतलक्षणावरोधात् सर्वं नित्यमिति, नान्यथा तदुपपत्तेर्भूतलक्षणयोगोऽन्यथा संभवतीति। **नोत्पत्तितत्कारणोपलब्धेः**। उत्पत्तितत्कारणोपलब्धेः कारणसमानगुणस्योत्पत्तिश्च दृश्यते। कारणं च अस्या दृश्यत इति न चैतदुभयं नित्यविषयम्। न हि नित्यस्योत्पत्तिः, नापि नित्यस्य कारणमस्ति। अस्ति चेदमुभयम्। तस्मात् कारणसमानगुणं कार्यमुत्पद्यत इति कारणसमानगुणोत्पादे च कार्यभूतलक्षणगुणावरोधः सिध्यतीति। विभक्तन्यायं चैतद् **व्यक्ताद् व्यक्तानामु-**

**त्पत्तिः प्रत्यक्षप्रामाण्यात्**[१] इत्येतस्मिन् सूत्रे। अव्यापकश्चायं हेतुः पञ्चभूतनित्यत्वादिति। कथमिति? कर्मादीनामव्याप्तेः। कर्मबुद्धिशब्दादयः पञ्चभूतनित्यत्वादित्यनेन न व्याप्ता इति। ज्ञातुः प्रयत्नदर्शनाच्च व्याघातः। उत्पत्तिविनाशकारणप्रयुक्तस्य च ज्ञातुः प्रयत्नो दृष्टः। स च सर्वनित्यत्वे न युक्तः। प्रसिद्धश्चावयवी तद्धर्मा। उत्पत्तिविनाशधर्मा चावयवी प्रतिपादितः। अतोऽयुक्तमेतत्। कथमव्यापकोऽनैकान्तिकः? पक्षस्यान्तद्वयेऽवस्थानात्। पक्षो हि सर्वं नित्यमिति। तच्च सर्वं भूतलक्षणयुक्तम्, इतरथा च। तत्पक्षस्यान्तद्वयेऽवस्थानात् सर्वं[२] भूतलक्षणयुक्तमित्यनेकान्तः।

स्वप्नविषयाभिमानवन्मिथ्योपलब्धिरिति चेत्? अथ मनुषे यदिदमुत्पद्यते विनश्यति चेति तन्न तत्त्वतोऽस्ति, असति तु तस्मिन्नभिमानो भवति उत्पन्नं विनष्टमिति, यथा न स्वप्ने विषयाः सन्ति अथ च विषयाभिमानो भवतीति। न, प्रमाणाभावात्। यदिदं [३]गवादिघटादिकमुत्पत्तिविनाशयुक्तमुपलभ्यते एतन्नास्तीति नासत्त्वप्रतिपादकं प्रमाणमभिधीयते। न चाप्रमाणकं शक्यं प्रतिपत्तुम्। यथा च चित्तव्यतिरेकिणो विषयाः, तथा उपरिष्टात् प्रतिपादयिष्यामः[४]। यदि च स्वप्नविषयाभिमानवदुत्पत्तिविनाशाभिमानः, ननु[५] भूतोपलब्धिरपि स्वप्नविषयाभिमानवत् प्रसज्यते। पृथिव्याद्यभावे सर्वव्यवहारविप्रलोप इति चेत्? अथ मन्यसे यदि पृथिव्यादीनि भूतानि न सन्ति, ननु पृथिव्याद्याश्रयो व्यवहार उच्छिद्यत इति? तदितरत्रापि समानम्। यदि व्यवहारोच्छेदभयाद् भूतानि प्रतिपद्यसे, व्यवहारोच्छेदभयादेवोत्पत्तिविनाशावपि प्रतिपद्यस्व। न ह्युत्पत्तिविनाशावन्तरेण कश्चन व्यवहारः सिध्यतीति। नित्यानां द्रव्याणामतीन्द्रियत्वात् अविषयत्वाच्चोत्पत्तिविनाशयोः। यन्नित्यं तदतीन्द्रियम्; अविषयश्चोत्पत्तिविनाशयोः। तेन स्वप्नविषयाभिमानवत् तदभिमान इत्ययुक्तम्। उत्पत्तिविनाशाभिमान इति च ब्रुवतोत्पत्तिविनाशयो-

१. न्या. सू. ४.१.११ २. न सर्वं C ३. गवादिघटादिकमुप॰ J ४. बाह्यार्थभङ्गनिराकरणप्रकरणे न्या. सू. ४.२.२६ ff ५. अथ C

विषयो वक्तव्यः। न च सर्वनित्यवादिनामुत्पत्तिविनाशयोर्विषयोऽस्ति। विषयं च प्रत्याचक्षाणेन तदनुकारी विपर्ययप्रत्ययो हेय इति॥३२॥

**न व्यवस्थानुपपत्तेः॥४।१।३३॥**

**अपरे** तु सर्वं नित्यमित्येतदन्यथा वर्णयन्ति। व्यवस्थितस्योपादानस्य धर्ममात्रं निवर्तते धर्ममात्रमाविर्भवति। यच्च निवर्तते तन्निवृत्तमप्यस्तीति यच्चाविर्भवति तत्प्रागप्याविर्भावादस्ति।

**न......त्तेः** इति। शेषं **भाष्ये**। यच्च निवर्तते तन्निवृत्तमप्यस्तीति ब्रुवाणः प्रष्टव्यो भवान् [१]जायते किमुक्तं भवति निवृत्तमिति? यदि ब्रूषे पूर्वमुपलब्धं पश्चान्नोपलभ्यत इति, अथ सतोऽनुपलब्धिः किंकृता? यद्यावरणादिकृता, तदावरणाद्युपलभ्येत। उक्तं चात्र यत्पूर्वमनुपलब्धं वस्तु पश्चादुपलभ्यते, तस्यापूर्वविशेषोत्पादः पूर्वविशेष-प्रच्यवो वाभ्युपेय इति। तदभ्युपगमे च व्याघातः। [२]यदप्युक्तं यच्चाविर्भवति तत् प्रागपि आविर्भावाद् विद्यत इति, तन्न, व्याघातात्। आविर्भवति प्राग् विद्यते चेति व्याहतम्। अथाविर्भावोऽभिव्यक्तिः, तथापि पूर्वदोषानिवृत्तिः अभिव्यक्तिरसती भवतीति॥३३॥

॥सर्वनित्यत्वनिराकरणप्रकरणम्॥

## [ सर्वपृथक्त्वनिराकरणप्रकरणम् ]

**सर्वं पृथग् भावलक्षणपृथक्त्वात्॥४।१।३४॥**

**अयमपर** एकान्तः—**स......क्त्वात्**। भावस्य लक्षणं भावलक्षणं शब्दः,

१. भवति C   २. यच्चोक्तम् C

लक्ष्यतेऽनेन भाव इति। सर्वो भावसमाख्याशब्दोऽनेकविषयो यथा कुम्भ इति भावसमाख्याशब्दोऽनेकस्मिन्नवयवसमूहे रूपादिसमूहे च[१] वर्तत इति। यथा कुम्भशब्दः एवमन्येऽपि शब्दा इति। अस्य प्रयोगः। कुम्भशब्दोऽनेकविषयः एकपदत्वात् सेनाशब्दवत्। पदश्रवणादनेकार्थाधिगतेश्च। यस्मात् पदश्रवणादनेकोऽर्थोऽवगम्यते यथा सेनेति॥३४॥

**नानेकलक्षणैरेकभावनिष्पत्तेः॥४।१।३५॥**

अनेकलक्षणैरिति मध्यमपदलोपी समासोऽनेकविधलक्षणैरिति। गन्धादिभिश्च गुणैर्बुध्नादिभिश्चावयवैः संबद्ध एको भाव उत्पद्यते। अतः शब्दादेकार्थावगतौ शेषोऽनुक्तोऽप्यवगम्यत इति। गुणव्यतिरिक्तो गुणीति अवयवव्यतिरिक्तश्चावयवीति विभक्तन्यायमेतत्[२]। यत् पुनरेतदेकपदत्वादनेकविषयः कुम्भादिशब्द इति, तन्न, दृष्टान्ताभावात्। न हि कश्चिच्छब्दोऽनेकविषयोऽस्ति, सेनादिशब्दानामनेकविषयत्वेनासिद्धत्वात्। यथैकविषयाः सेनादिशब्दास्तथोक्तमिति। सर्वस्य पक्षीकरणाद् दृष्टान्ताभावः। आधाराधेयभावेनानुषक्तानां रूपादीनामवयविनश्च ग्रहणादन्यथासिद्धः। नञः प्रसज्यप्रतिषेधपर्युदासविषयत्वेनावस्थानाच्च विरुद्धः। अनेकमित्ययं नञः प्रयोगः। स चायं प्रसज्यप्रतिषेधेन पर्युदासविषयत्वेन वा कल्प्यते[३]। तद् यदि तावत् प्रसज्यप्रतिषेधः, एकं न भवतीति, यदेकत्र प्रतिषिध्यते तदन्यत्र भवतीत्येकमभ्युपगतं भवतीति। एवं च व्याघातः। अथ पर्युदासपक्षः, एकस्मादन्यदनेकमिति एवमप्येकमभ्युपगतं भवति। न ह्यसत्येकस्मिन् तस्मादन्यदनेकं सिध्यतीति॥३५॥

१. रूपादिसमूहे चेति नास्ति C　२. द्रः न्या. भा. २.१.३६　३. ०त्वेन प्रतिषेधात् प्रकल्प्यते C

## लक्षणव्यवस्थानादेवाप्रतिषेधः ॥४।१।३६॥

इतश्च ल......षेधः। न हि कश्चिदेको भाव इत्ययुक्तः प्रतिषेधः। कस्मात्? तल्लक्षणव्यवस्थानात्[१]। न हि कुम्भ इत्युक्तेऽनेकोऽर्थोऽवगम्यत इति। कथं नावगम्यते? एकवचनान्तत्वात्। एकवचनान्त एष शब्दः कुम्भ इति। न च बहुष्वेकवचनं युक्तम्, प्रैषसंप्रतिपत्त्योरेकविषयत्वात्। कुम्भमानयेति प्रैष एकविषयो भवति, इतरोऽपि कुम्भशब्दात् प्रतिपद्यैकमेव कुम्भमानयति। ते एते प्रैषसंप्रतिपत्ती एकविषये ज्ञापयतः कुम्भशब्देनैकोऽर्थोऽभिधीयत इति। यांस्त्वत्र रूपादीनवयवांश्च प्रतिपद्यसे स न शब्दार्थः, किं त्वनुषङ्गः, तन्नान्तरीयकत्वादिति। समूहे भेदस्य[२] चानवस्थानात् यत्रावस्थानं तदेकम्[२]। गोघटादिद्रव्याणि समुदितानि प्रतिपद्यमानेन समूहोऽभ्युपेयः। स चायं समूह इयन्ति द्रव्याणि एतानि गवादिभावेन[३] व्यवस्थितानीति न व्यवतिष्ठते तस्य भेदोऽल्पतरतमत्वेन। यत् तत् परमाल्पं तदभेद्यम्। ततो निवर्तत इति। यतश्चायं भेदो निवर्तते तदेकम्। एकं च प्रत्याचक्षाणेनानेकमपि प्रत्याख्येयम्, एकसमुच्चयत्वादनेकस्य। अथ मन्यसे, यं तमभेद्यं परमाणुं प्रतिपद्यसे, सोऽपि रूपादीनां समुदाय इति। चत्वारि वा द्रव्याणि पृथिव्यादीनि समुदितानि परमाणुरिति? एतस्मिन् वै दर्शने ये रूपादयः समुदितास्ते परमाणुरिति, यत् परमाणौ रूपं स कस्य समुदाय इति वक्तव्यम्। एवं शेषेणु गुणेषु। चत्वारि द्रव्याणि समुदितानि परमाणुरिति ब्रुवाणेन [४]चतुष्कस्य एकसमुच्चयनिमित्तत्वाद् यदेकं पृथिव्यादि स कस्य समुदाय इति वक्तव्यम्। अथानन्तं समुदायं प्रतिपद्यसे अष्टौ द्रव्याणि समुदितानि परमाणुरिति शास्त्रं[५] व्याहतं भवति, कामेऽष्टद्रव्यकोऽणुरशब्द इति। एकानुपपत्तौ चानेकोपपत्तिरित्येतद् व्याहतम्[६]। यश्चायं हेतुः समूहे भावशब्दप्रयोगादिति, अयमुभयतो व्याघातान्न किञ्चित्। कथमुभयतः? न कश्चिदेको

---

१. लक्षणव्यवस्थापनात् C २. समूहभेदस्य J ३. घटादिभावेनाव॰ C ४. चतुष्टस्य C ५. द्र: अभिधर्मकोषे २.२२ ६. नानेको.....तद्धेयम् C

भाव:। समूहे भावशब्दप्रयोगादिति प्रतिज्ञाहेत्वोर्व्याघात:। यस्मादेकार्थानुपपत्तौ न समूह उपपद्यत इति समूहं चाश्रित्यैकं प्रत्याचक्षाणेन समूह एव प्रत्याख्यातो भवतीति सोऽयमुभयतो व्याघाताद् यत्किञ्चनवाद इति। शेषं **भाष्ये**॥३६॥

॥सर्वपृथक्त्वनिराकरणप्रकरणम्॥

## [ सर्वशून्यत्वनिराकरणप्रकरणम् ]

**सर्वमभावो भावेष्वितरेतराभावसिद्धेः॥४।१।३७॥**

अथायमपर एकान्तः, **सर्व......सिद्धेः**। यावद् भावजातं तत्सर्वमभावः। कस्मात्? भावेष्वितरेतराभावसिद्धेः। असत्प्रत्ययप्रतिषेधाभ्यां भावशब्दसामानाधिकरण्यात् सर्वासत्त्वम् अनुत्पन्नप्रध्वस्तघटवत्[१]। सर्वो भावशब्दोऽसत्प्रत्ययसमानाधिकरणः प्रतिषेधसमानाधिकरणश्च अनुत्पन्नप्रध्वस्तघटवत्[२]। यथा नास्ति घट इति। कथं नास्ति कदा च नास्तीति? स्थाल्याद्यात्मना चानुत्पद्यमानो ध्वस्तश्चेति। सोऽयं घटशब्दोऽसत्प्रत्ययसमानाधिकरणो घटस्यात्यन्तासत्त्वं प्रतिपादयति। तथा च सर्वे भावा असत्प्रत्ययसमानाधिकरणाः। तस्मात् सर्वमभाव इति॥३७॥

**न स्वभावसिद्धेर्भावानाम्॥४।१।३८॥**

प्रतिज्ञापदयोः प्रतिज्ञाहेत्वोश्च व्याघातः। सामानाधिकरण्यमभिन्नविभक्तिकत्वमेकविभक्त्युच्चारणमिति भावाभ्युपगमात् तच्छब्दाभ्युपगमाच्च विरुद्धः। यत् सर्वमिति मन्यसे तदभाव इति? नासति तत्प्रत्ययेन भवितुं शक्यम्। न च भावप्रत्ययेनाभाव इति च भावः प्रतिषिध्यते। न चासत्युत्तरपदार्थे नञः प्रयोग इति

---

१. सर्वमभाव...घटवत् C　　२. णश्च...प्रध्वस्तपटवत् C

प्रसज्यप्रतिषेधपर्युदासाभ्यां पूर्ववत् प्रसङ्गः। यथानेकपदेऽनित्यपदे च, एवं सर्वपदेऽभावपदे च व्याघात ऊह्यः। शेषं **भाष्ये।**

सर्वासत्त्वे विभक्तिस्वभावावधारणं[१] कर्तव्यम्। यदि च सर्वमभावो विभक्तिः किंस्वभाविकेति वक्तव्यमेतत्। असत्यां च विभक्तावभिन्नविभक्तिकत्वं सामानाधिकरण्यमिति व्याहतम्। असत्प्रत्ययप्रतिषेधौ च सामानाधिकरण्यादिति ब्रुवाण एव सर्वमभाव इति व्यावर्तयसि[२]। न ह्यसदधिकरणं भवति। अधिकरणं हि नाम यद्यत्र वर्तते। तच्चाभावे नास्तीति सूत्रेण चाभिसंबन्धः। **न स्वभावसिद्धेर्भावानाम्** इति। स्वेन भावेन भावा भवन्तीति सूत्रार्थः। किं पुनरनेन सूत्रेण क्रियते? पूर्वसूत्रस्य विरोधश्चोद्यते। कथमिति? भावेष्वितरेतराभावसिद्धेरित्यभावो भवताभिधीयते। तथा चाभिदधानः स्वभावतो भावानभ्युपैषि। विशेषणवैयर्थ्यं वा भावेष्वितरेतराभावसिद्धेरिति। सर्वासत्त्वे ह्येवमेव वक्तव्यम्। न सन्ति भावाः। न पुनरेवं वक्तुं युक्तम् इतरदितरन्न भवतीति। इतरदिति चायं विधानशब्दः। न च सर्वस्याभावे विधीयमानं वस्तु संभवति[३] यदितरशब्दवाच्यं स्यादिति। इतरवाच्यतां चाभ्युपगम्येतरदितरत्र प्रतिषिध्यत इति स्वभावसिद्धिरभ्युपगता भवति।

कश्च स्वो भावो भावानां द्रव्यादीनाम्? सदादि सामान्यं क्रियावदादिर्विशेषः स्पर्शपर्यन्तं पृथिव्या इति च प्रत्येकमनन्तो भेदः। सामान्यविशेषसमवायादीनां च सामान्यो वैशेषिकश्चान्तर्गणिकोऽनन्तो भेद इति। सोऽयम् अभावस्य निरुपाख्यत्वात् संप्रत्यायकः स्वभावभेदो न स्यात्। अस्ति त्वसौ। तस्मान्न सर्वमभाव इति।

अथ वा स्वभावसिद्धेरिति गौरिति प्रयुज्यमाने नाभावः प्रतीयते किन्तु जातिविशिष्टं द्रव्यम्[४]। यदि च सर्वमभावः स्यात् गौरिति प्रयुक्तेऽभावो गम्येत। न त्वभावो गम्यते। तस्मान्न सर्वमभाव इति।

१. विभक्त्यव॰ J २. ॰षेधसामानाधिकरण्यमिति ब्रूषे सर्वमभाव इति च व्या॰ C
३. विद्यते J ४. किं तु....द्रव्यम् om J

अथ वा स्वभावसिद्धेरिति असन्नश्वो गवात्मना अनश्वो गौरगौर्गौरिति कस्मान्नोच्यत इति [१]अवचनादगौर्गौरित्युक्ते व्याहतं स्यात्। यदि व्याघातभयादगौर्गौरिति नोच्यते, हन्त तर्हि सिद्धो भावः। कथं तर्हि अयं प्रतिषेधोऽगौरश्व इति? व्यतिरेकप्रतिषेधे भावेनासत्प्रत्ययस्य सामानाधिकरण्यमिति यथा न सन्ति कुण्डे बदराणीति कुण्डबदरयोः संबन्धः प्रतिषिध्यते। न कुण्डे बदरसद्भावः॥३८॥

**न स्वभावसिद्धिरापेक्षिकत्वात्॥४।१।३९॥**

[२]स्वभावसिद्धिरापेक्षिकी यतो न स्वेनात्मना किञ्चित् सिद्धमिति। यथा दीर्घह्रस्वत्वे परापरे चेति॥३९॥

**व्याहतत्वादयुक्तम्॥४।१।४०॥**

यदि ह्रस्वापेक्षाकृतं दीर्घत्वम्, ह्रस्वमनापेक्षिकम्। अथ दीर्घापेक्षाकृतं ह्रस्वत्वम्, दीर्घमनापेक्षिकम्, परस्परापेक्षयोश्च यदपेक्षयेतरज्जायते तदनापेक्षिकमिति उभयोरभाव एकस्याभावादिति। अपेक्षायामनपेक्षायां च द्रव्ययोर्न भेदः। यावती एव द्रव्येऽपेक्षमाणे तावती एवानपेक्षमाणे अपि, न ह्यन्यतरत्र भेदः। अतिशयग्रहणं कथं यदि द्रव्ययोर्द्वयोरभेदः, अपेक्षमाणयोरनपेक्षमाणयोश्च दीर्घह्रस्वप्रत्ययस्तर्हि न प्राप्नोति। न न प्राप्नोति, द्वयोर्ग्रहणेऽतिशयस्य ग्रहणात्। द्वयोस्तावद् द्रव्ययोः प्रत्यर्थनियते द्वे ह्येव बुद्धी भवतः। अत एकस्मिन् विद्यमानमतिशयं गृह्णाति एकस्मिन् विद्यमानं च ह्रस्वत्वम्। सोऽयं [३]भेददर्शने प्रतिसन्धत्ते। प्रतिसन्धानप्रत्ययजा त्वस्य बुद्धिरुत्पद्यते, अस्माद् दीर्घमदोऽस्माददो ह्रस्वमिति। न पुनर्वस्तुन

---

१. अवचनाद् गौरित्यगौ॰ C  २. न स्वभाव॰ C  ३. उभयदर्श॰ C

उत्पादानुत्पादाविति। स्वभावसिद्धौ चासत्यामपेक्षा न प्राप्नोति। यदि स्वभावसिद्धिमन्तरेणापेक्षाभेदाद् दीर्घादिप्रत्यया भवन्ति, सर्वमपेक्ष्य सर्वस्य सर्वत्र तथाभूतः प्रत्ययः स्यात्। न च रूपरसगन्धस्पर्शप्रत्ययेष्वपेक्षासामर्थ्यमस्ति। न च परिमण्डलौ परमाणू उपलभमान [1]इतरं परमाणुमपेक्ष्य परमाण्वन्तरे दीर्घह्र-स्वादिप्रत्ययान् करोति। अतो नापेक्षाकृताः प्रत्यया इति।

सर्वमभाव इति सर्वथा चायं वादो व्याहतः। को व्याघातः? आदौ तावत् प्रमाणोपपत्त्यनुपपत्ती[2] सर्वमभाव इति ब्रुवाणः प्रमाणं पर्यनुयोज्यः। यदि प्रमाणं ब्रूते, व्याहतं भवति। अथ नाभिधत्ते, अर्थोऽस्य न सिध्यति प्रमाणाभावात्। सर्वमभाव इति च वाक्यम्। तस्य यद्यभिधेयमर्थं प्रतिपद्यते, पूर्ववद् [3]व्याहतं भवति। अथ न प्रतिपद्यते, वर्णोच्चारणमात्रमनर्थकमिति। सर्वमभाव इति च वाक्यार्थस्य प्रतिपादयितारं प्रतिपत्तारं च यदि प्रतिपद्यते पूर्ववद् व्याघातः। सर्वमभाव इति च सर्वं भाव इति च वाक्ये, यद्यनयोरर्थभेदं प्रतिपद्यते, व्याहतं भवति। अथ न प्रतिपद्यते विशेषवाक्योपादानं व्यर्थम्। सोऽयं सर्वाभाववादो यावद् यावद् विचार्यते, तावत् तावदुपपत्तिं न सहत इति॥४०॥

॥सर्वशून्यत्वनिराकरणप्रकरणम्॥

## [ संख्यैकान्तवादनिराकरणप्रकरणम् ]

### संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम्॥४।१।४१॥

अथेमे संख्यैकान्तवादाः[4]। सर्वमेकं सदविशेषादित्येवमादि **भाष्ये**। तेषां प्रतिषेधद्वारकं सूत्रम्, **संख्यै......भ्याम्**। संख्यैकान्तानामसिद्धिः कारणस्य

---

१. ईश्वरः C २. ॰णोत्पत्त्यनुत्पत्ती C ३. व्याघातः C ४. ॰कान्ताः J

प्रतिज्ञातार्थव्यतिरेकात्। सर्वमेकमिति प्रतिज्ञां कृत्वा यदि प्रतिज्ञेयव्यतिरिक्तं साधनं ब्रवीति, एकान्तो न सिध्यति। तच्च साधनं [१]प्रतिज्ञेयश्चार्थ इति द्वैतम्। एवं द्वैतादिष्वपीति। अथ प्रतिज्ञेयव्यतिरिक्तं साधनं नास्ति? एवमप्यनेकान्तो[२] न सिध्यति साधनाभावात् न साध्यं साधनमिति॥४१॥

**न कारणावयवभावात्॥४।१।४२॥**

कारणस्य साध्यावयवत्वादित्ययं सूत्रार्थः। साध्यावयव एव साधनम्। एवं च सति साध्यव्यतिरिक्तं साधनं नोक्तं भवति। न चासाधना सिद्धिरिति॥४२॥

**निरवयवत्वादहेतुः॥४।१।४३॥**

साध्यावयव एव कारणमित्ययमहेतुः निरवयवत्वात् प्रतिज्ञार्थस्य। सर्वमेकमित्येतस्मिन् प्रतिज्ञार्थे न किञ्चिदपवृज्यते। अनपवर्गेण सर्वं पक्षीकृतमिति सर्वस्य निरवयवस्य पक्षीकरणान्न हेतुरस्ति। न च साध्यं हेतुर्भवितुमर्हतीति। आत्मनि च क्रिया विरुध्यते। यत्तत्प्रतिपाद्यं तदेव प्रतिपादकमिति न युक्तम्। न कर्म करणं भवितुमर्हतीति। ते खल्विमे संख्यैकान्ता यदि विशेषकारितस्यार्थभेदस्य प्रत्याख्यानेन वर्तन्ते, मिथ्यावादा भवन्ति प्रत्यक्षानुमानागमविरोधित्वात्। प्रत्यक्षोऽयं गवादिघटादिभेदोऽनुमानतोऽपि गम्यते। अन्यदन्येनानुमीयते। आगमतोऽपि गम्यते। प्रतिपन्नः [३]प्रतिपादयिता अप्रतिपन्नः [४]प्रतिपाद्य इति। अथाभ्यनुज्ञानेन वर्तन्ते? तथाप्येकान्तत्वं जहतीति। अथ सामान्यकारितोऽभेदः, विशेषकारितश्च भेद इति प्रतिपद्यते? तथापि न किञ्चिद् बाध्यते। न च भेदमन्तरेण सामान्यं लब्धावकाशमिति। सामान्यं प्रतिपद्यमानेन भेदोऽभ्युपगन्तव्यः। भेदं च प्रत्याचक्षाणेन सामान्यमपि

१. प्रतिज्ञायाश्चा॰ C  २. ॰न्तोऽस्य वा C  ३. ॰पादयति J  ४. ॰पद्यते C var.

प्रत्याख्येयम्। विशेषानाधारस्य सामान्यस्याविषयत्वात्। ते खल्विमे संख्यैकान्तास्तत्त्वज्ञानप्रविवेकाय परीक्षिता इति॥४३॥

॥संख्यैकान्तवादनिराकरणप्रकरणम्॥

## [ फलपरीक्षाप्रकरणम् ]

**सद्यः कालान्तरे च फलनिष्पत्तेः संशयः॥४।१।४४॥**

प्रेत्यभावानन्तरं फलमुद्दिष्टम्। तस्मिन् स.......यः। काचित् क्रिया सद्यःफला, यथा पचति दोग्धीति। तस्याः सद्यः फलमोदनपयसी क्रियानन्तरं भवत इति। काचित् कालान्तरफला, यथा कृष्यति वपतीति। तस्याः कालान्तरे फलं न क्रियानन्तरं शस्याधिगम इति। अस्ति चेयं क्रिया अग्निहोत्रं जुहुयादिति[१]। तस्याः फले सन्देहः, किमियं सद्यस्तापादिफला उत कालान्तरफला इति॥४४॥

**न सद्यः कालान्तरोपभोग्यत्वात् ॥४।१।४५॥**

न सद्यः कालान्तरोपभोग्यत्वात् स्वर्गः फलं श्रूयते। देशितया च क्रियया नानर्थिकया शक्यं भवितुम्। न चायं तापादिकामोऽग्निहोत्रं जुहोति। तेनावगम्यते तां [२]हवनादिलक्षणां क्रियामपेक्षमाणादात्ममनःसंयोगात् विशुद्धेनाभिसन्धिना अनुगृहीताद् आत्मनि धर्म उत्पद्यत इति। स च कालान्तरेऽप्रतिबध्यमानशक्तिर्देवानुगृहीतः[३] फलं ददाति। स च पतितेऽस्मिन् देहे भवति देहान्तरापन्नस्य। अतो न सद्य इति॥४५॥

---

१. हवनादिक्रिया...मनःसंबन्धात् शुद्ध॰ C  २. स च J  ३. देशाद्यनु॰ C

**कालान्तरेणानिष्पत्तिर्हेतुविनाशात्॥४।१।४६॥**

व्यावृत्ते हवने व्यावृत्ते च पूर्वशरीरे देहान्तरे फलं श्रूयते। तन्न विनष्टात् कारणाद् युक्तमिति॥४६॥

**प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात् ॥४।१।४७॥**

**प्राङ्.....यात्।** इति। न ब्रूमो विनष्टात् कारणात् कार्यमुत्पद्यते, अपि तु अग्निहोत्रहवनादिलक्षणया क्रियया यथोक्तेन विधिना धर्मो जायत इत्युक्तम्। तस्मात् फलमिति। यथा फलार्थिना वृक्षमूलसेकादिकर्म क्रियते, न च मूलसेकाद् विनष्टात् फलेन युक्तं भवितुम्। अपि तु मूलसेकादि कर्म कृतं भोक्तुः कर्मापेक्षं [१]पृथिवीधातुमनुगृह्णाति। स उपगृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यमभिनिर्वर्तयति। तद्रसद्रव्यं [२]वृक्षमापलाशेभ्योऽनुसर्पति। तस्मात् पर्णादिफलं निर्वर्तते। एवं च सति न विनष्टात् मूलसेकात् फलनिर्वृत्तिः। न च मूलसेकादिवैयर्थ्यमिति॥४७॥

**नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात्॥४।१।४८॥**

तदिदं प्राङ्निष्पत्तेः **ना....र्म्यात्।** प्राङ्निष्पत्तेरुत्पत्तिधर्मकं नासत्, उपादाननियमात्। असत्त्वे समाने उपादाननियमो न प्राप्नोति। सदपि न भवति। विद्यमानस्योत्पादो व्याहतेति, अस्ति चोत्पद्यते चेति व्याहतम्। न सदसत्, सदसतोर्वैधर्म्यात्। सदित्यर्थाभ्यनुज्ञा, असदिति तस्य प्रतिषेधः। [३]अभ्यनुज्ञातप्रतिषिद्धयोः सामाना-

---

१. पृथिव्यादिधातुम् C द्रः वृक्षायुर्वेदे कारणभूतं द्रव्यं धातुशब्देनोच्यते इति तथैवोक्तम्। धत्ते इति धातुः पृथिवी। marginal note J २. आफलात् सद्य उप॰ C ३. अभ्यनुज्ञाप्रतिषेधयोः C

धिकरण्यमनुपपन्नम्। तस्मान्न सदसदपि। नाप्युभयविपरीतं कार्यं युज्यते तस्य स्वरूपानिर्देशादिति। न हि तस्य स्वरूपं शक्यं निर्देष्टुमिति॥४८॥

**उत्पादव्ययदर्शनात्॥४।१।४९॥**

प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा सत्यमिति। कस्मात्?

**उत्पा...त्**। वस्तुनः प्रागनुपलब्धरूपस्य पश्चादुपलब्धिः। सा असदुत्पादे सति युज्यते। विनाशश्चोपलब्धस्वरूपस्य पुनरनुपलब्धिरिति। न चैतत् सर्वनित्यवादिनः संभवति। न हि सत्पक्ष उत्पादो न च विनाश इति। उत्पादविनाशौ च प्रत्याचक्षाणेन लोको हेयः। अथ लोकोऽयं प्रवर्तमानः किमर्थं प्रवर्तते? ननु चायं प्रवर्तत इदमाप्स्यामि इदं हास्यामीति? सत्यमेवं प्रवर्तते। न पुनः सत्कार्यवादिनः किञ्चिद्धेयमुपादेयं वा विद्यते। प्रतिज्ञादीनां चावयवानामुपादानं व्यर्थम्, उत्पादव्ययप्रत्याख्यानात्। न किञ्चित् जायते, न किञ्चिद् विनश्यतीति अवयवानामुपादानं [१]किमर्थम्? यदि सत्कार्यप्रतिपत्त्यर्थम्, प्रतिपत्तेर्विद्यमानत्वाद् व्यर्थमुपादानम्। न हि यद् यस्य लोके भवति, स तदर्थमुपादानमुपादत्त इति। अथाज्ञानतिरोभावमात्रार्थमुपादानमिति? एतदपि तादृगेव। न ह्यनुपजातविशेषस्याज्ञाननिवृत्तिर्युक्तेति। अथाभिव्यक्त्यर्थमुपादानमिति? केयमभिव्यक्तिर्नाम, या उपादानेन क्रियते? यदि कार्यम्, व्याहतम्। अथ कार्यधर्मः, तथाप्यनिवृत्तो व्याघातः। अथोपलब्धिकार्यविषयाभिव्यक्तिः सा क्रियत इति, न मुच्यसे व्याघातात्। अथ कारणात्मनावस्थितस्य कार्यात्मनावस्थानमभिव्यक्तिः, एवमप्यनिवृत्तो व्याघातः, कार्यात्मनावस्थानमसद्भवतीति। अथ कारणस्य संस्थानविशेषोऽभिव्यक्तिः, संस्थानविशेषोऽभूत्वा भवतीति व्याघातः। अथास्ति, [२]व्यर्थं तदर्थमुपादानम्। अथ कारणस्य स्वलक्षणपुष्टिरभिव्यक्तिः, न अपूर्वोत्पादाभावे[३] स्वलक्षणपुष्टिशब्दार्थं पश्याम इति व्यर्थ-

१. व्यर्थम् C २. व्यर्थमुपादानम् C ३. अपूर्वाभ्यागमाभावे C

मुपादानम्[१]। स्वलक्षणपुष्टिश्च पूर्वमभूत्वा पश्चाद्भवतीति व्याघातान्न मुच्यस इति। एवं येन येन कल्पेनाभिव्यक्तिरभिधीयते, तेन तेन सत्कार्यं बाधत इति॥४९॥

## बुद्धिसिद्धं तु तदसत्॥४।१।५०॥

यत् पुनरेतत्, नासदुपादाननियमादिति? **बुद्धि...सत्।** नायं सत्त्वादुपादाननियमोऽपि तु सामर्थ्यात्। [२]इदमनेन शक्यं निर्वर्तयितुम्, नेदमनेन इत्येवं बुद्ध्या सिद्धं कार्यं कृत्वा यद् यस्योत्पत्तये समर्थं तत् तस्योपादीयते। न सर्वं सर्वस्य। न सर्वस्मात् सर्वमुत्पद्यमानं दृष्टमिति। अथोत्पत्तिनियमेन [३]कार्यकारणनियमं प्रतिपद्यते, तेनापि कार्यकारणशब्दयोरर्थोऽपि वक्तव्यः। किमुक्तं भवति कारणमिति? किमुक्तं च भवति कार्यमिति? ननु च करोतीति कारणम्, क्रियत इति कार्यम्। यद्यभिव्यक्तिः, पूर्ववत् प्रसङ्गः। अथ विद्यमानेष्वपि करोत्यर्थो दृष्ट इति मन्यसे, यथा केशान् कुरु पृष्ठं कुर्विति, न तद्विद्यमानेषु रचनाविशेषः केशानाम् अविद्यमानः क्रियते। पश्चात् पृष्ठस्यापि मलापगमोऽविद्यमान इति। न विद्यमाने कारणार्थं जात्वपि पश्याम इति तस्मादसदेतत्।

यदि ह्यसत् क्रियत इति, खरस्य विषाणं किं न क्रियत इति? क एवमाह न क्रियत इति, यत् खलु खरस्य विषाणं तत् क्रियत एव, अथ कस्मात् खरः विषाणस्य कारणं न भवतीति? एतत् न जानीमः कस्मात् न भवतीति, न पुनः खरेण विषाणं क्रियमाणं दृष्टम् इत्यतोऽवसीयते [४]न कारणं खरो विषाणस्येति। एतेन शशविषाणं प्रत्युक्तम्[५]। न च तदसत्त्वात् न क्रियतेऽपि तु कारणाभावादिति। न चासत्त्वमुत्पत्तौ हेतुः। अपि तु सतोऽनुत्पत्तेरसदुत्पद्यत इति। असत्त्वाच्च खरविषाणं नोत्पद्यत इति ब्रुवाणः स्वसिद्धान्तं बाधते। न हि भवत्पक्षे खरविषाणं

१. °मभिधानम् J २. नेद° बुद्धिसि° C ३. कार्यनियमेन कार्यकारणनियमं C
४. न....स्येति om C ५. व्याख्यातम् C

नास्ति, सत्त्वे चासत्त्वे च समाने यस्य कारणमस्ति, तदुत्पद्यत इति। सत्कार्यवादिनश्चैवं सर्वलोकव्यवहार उच्छिद्यत इत्युक्तम्, नापूर्वं जायते, न पूर्वं विनश्यतीति।

अथासत्कार्ये किं प्रमाणम्? न सत्त्वे न चासत्त्वेऽनुमानमस्ति धर्मिण्यविप्रतिपत्तेः क्व तर्हि विवादः? यदुभयपक्षसंप्रतिपन्नं तस्य धर्मेषु तदुभयपक्षसंप्रतिपन्नाः तन्तवस्तान् प्रति पक्षा विभज्यन्ते। **एके** तावद् ब्रुवते, तन्तुमात्रं पट इति। **अपरे** तन्तवः संस्थानविशेषेणावस्थिता इति। **अपरे** तु तन्तव एव कार्यात्मना अवतिष्ठन्त इति। **अपरेषां** धर्मान्तराविर्भावतिरोभावाविति। **अन्ये** तु [१]शक्तिविशिष्टांस्तन्तून् पट इत्याहुः। तदेवं विभक्तेषु पक्षेषु तन्तुमात्रे तावद् व्यतिरेकः साधयितव्यः। स चोपपादित इति। येऽपि संस्थानविशेषेणावस्थितान् तन्तून् पट इति वर्णयन्ति, तान् प्रति साधनम्, प्रागुपलब्धिकालात् संस्थानविशेषशून्यास्तन्तवः तत्कारणत्वात् तुर्यादिवत्। एतेन कार्यात्मनावतिष्ठन्त इति व्याख्यातम्। तथा धर्मान्तराविर्भावतिरोभावाविति। अत एव शक्तिविशेषावस्थितास्तन्तव इति ब्रुवाणः किञ्चिदपि न बाधत इति। [२]तान् प्रति न साधनमुच्यत इति। य एवार्थो बुद्धिसिद्धं तु तदसदिति स एवार्थः शक्तिविशेषावस्थितास्तन्तव इति। सर्वेषु चैतेषु पक्षेषु नापूर्वोत्पादमन्तरेण पटबुद्धिः संभवतीति व्याघातोऽनिवार्यः। विद्यमानाभिव्यक्त्यर्थास्तन्तवः तदर्थिना नियमेनोपादानात् खनित्रादिवत्। विद्यमानस्याभिव्यक्तिरसतीति अभिव्यक्तिवत् कार्येऽपि प्रसङ्गः। [३]सर्वं चोत्तरमेतत्। यत्पुनरेतदुपादाननियमादिति। उपादानं च कारणम्। न च सति कारणार्थं पश्याम इति पूर्ववत् प्रसङ्गः। यदपि खनित्रादिवदिति। न हि खनित्राद्युदकार्थमुपादीयते। किं तर्हि? आवरणविगमार्थम् । आवरणविगमश्च विभागः। स चाभूत्वा भवतीति असिद्धो दृष्टान्तः। अथ विभागं न प्रतिपद्येत? सोऽप्यप्रतिपन्नविभागो विभागप्रत्ययोत्पत्तिकारणं पर्यनुयोज्यः। अथाप्राप्तिमात्रात् विभागप्रत्ययं प्रतिपद्यते? साप्यप्राप्तिः किं प्राप्तेरभाव उत प्राप्तेरन्येति? किं चातः? यदि प्राप्तेरभावोऽप्राप्तिः, सा कुतो

१. ०स्तन्तवः C   २. तं J   ३. एवं C

भवतीति वक्तव्यम्। यदि यत्प्राप्तिविरोधनिमित्तं तद् विभाग इति नाभावो विभागस्य। यच्च यत्र प्रतिषिध्यते तदन्यत्र भवतीत्युक्तम्। अप्राप्तिश्च द्वयी असंश्लेषः संश्लिष्टानां विगमश्च। तत्र यः संश्लिष्टानां विगमः स विभाग इति। तं च खनित्रादीनि कुर्वन्ति। अथ प्राप्तेरन्या अप्राप्तिः, सापि द्वयी। तत्रापि पूर्ववत् प्रसङ्गः। अथ भिन्नदेशोत्पत्तिं विभागं प्रतिपद्येत, भिन्नदेशे इमे उत्पन्ने इति विशेषणोपादानान्न भिन्नदेशोत्पत्तिर्विभाग इति उत्पन्ने उत्पन्नमिति भिन्नदेशतया भिन्नमिति विभागाद् विभक्तमिति। तान्येतानि प्रत्ययभेदनिमित्तानि[1] प्रत्ययभेदानुमेयानि। न हीमे पर्यायशब्दा भिन्नमुत्पन्नं विभक्तं चेति। भिन्नदेशोत्पत्तेश्च प्रतिषिद्धत्वान्न भिन्नदेशोत्पत्तिर्विभाग इति। क्षणिकत्वाद् विभागस्य विभक्तप्रत्ययोत्पत्तिर्न युक्तेति चेत्? न, सामान्याभिव्यक्तिसंयोगविनाशाभ्यामेव प्रत्ययोत्पत्तिकालानुभवात्। पूर्वं तावत् स्वकारणादुत्पन्नो विभागः सामान्यं व्यनक्ति, सामान्याभिव्यक्त्युत्तरकालं विभागप्रत्ययं च करोति संयोगं च विनाशयति। संयोगविनाशोत्तरकालं संयोगाल्लब्धात्मकाद् विनश्यतीति। तदेवमनेकक्षणानुभवादुत्पन्नमात्रो विभागो ध्वंस इत्यसिद्धम्। तदेवं व्यवस्थितमेतदसदुत्पद्यत इति ॥५०॥

**आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः ॥४।१।५१॥**

यच्च मूलसेकादि कर्म, यच्च पर्णादिफलं तदुभयं वृक्षाश्रयम्। कर्म त्विह फलं चामुत्रेति आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदसिद्धो दृष्टान्तः॥५१॥

**प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥४।१।५२॥**

आश्रयव्यतिरेकोऽसिद्ध इति सूत्रार्थः। यत्रैव कर्म तत्रैव कर्मफलमिति ॥५२॥

---

१. भिन्नप्रत्ययनि॰ C

**न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात्॥४।१।५३॥**

पुत्रादिफलत्वेन निर्दिश्यते। न च पुत्राद्यात्मनि वर्तत इति॥५३॥

**तत्संबन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः॥४।१।५४॥**

पुत्रादिसंबन्धात् फलं प्रीतिर्भवति, तत्कारणत्वात् पुत्रादि फलशब्देनाभिधीयते। यथान्नसाधनाः प्राणाः अन्नं वै प्राणा इति। उपचारश्च [१]प्रमाणाभावात् लोकप्रयुक्त-वाक्यानुविधानेन क्रियत इति॥५४॥

॥फलपरीक्षाप्रकरणम्॥

## [ दुःखपरीक्षाप्रकरणम् ]

**विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः॥४।१।५५॥**

फलानन्तरं दुःखमुद्दिष्टम्, [२]लक्षितं च बाधनालक्षणं दुःखमिति। तत् किमिदं सर्वलोकसाक्षिकस्य सुखस्य प्रत्याख्यानम्। आहोस्विदन्यः कल्प इति। अन्य इत्याह। कथम्? न वै सर्वलोकसाक्षिकं सुखं शक्यं प्रत्याख्यातुम्। अयं तु जन्ममरणप्रबन्धानुभवनिमित्ताद् दुःखान्निर्विण्णस्य दुःखं जिहासतो दुःखभाव-नोपदेशः। कथं नामायं सर्वं दुःखमिति भावयेत्? भावयंश्च विरज्येत? विरक्तो मुच्येतेति? कथं पुनरयं सर्वं दुःखमिति भावयति? सर्वे सत्त्वनिकायाः सर्वः पुनर्भवः सर्वमुत्पत्तिस्थानं दुःखसाहचर्याद् दुःखमित्युक्तमृषिभिः[३] दुःखभाव-नमुपदिश्यते।

---

१. प्राणाभा॰ C २. उक्तं J ३. दुःखमिति J

तत्र च हेतुरुपादीयते **विवि....त्पत्तिः**। तत्र जायत इति जन्म शरीरेन्द्रियबुद्धयो व्यपदिश्यन्ते। शरीरादीनां प्रादुर्भाव उत्पत्तिः। जन्मन उत्पत्तिर्जन्मोत्पत्तिः। त्रिविधा च बाधना हीना मध्यमोत्कृष्टा चेति। शेषं **भाष्ये**। अनेनाभिप्रायेण दुःखोद्देशो सुखप्रत्याख्यानं तु न[१]।।५५।।

**न सुखस्याप्यन्तरालनिष्पत्तेः।।४।१।५६।।**

कस्माद्? बाधनान्तराले सुखमुत्पद्यमानं प्रत्यक्षदृष्टमिति।।५६।।

**बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः।।४।१।५७।।**

इतश्च, **बाध....षेधः**। सुखस्य दुःखोद्देशेनेति प्रकरणात् यस्मादयं वेदयते, इदं मे सुखसाधनमिदं मे दुःखसाधनमिति सुखसाधनमाप्तुं दुःखसाधनं हातुं प्रयतते। सुखसाधनानां प्राप्तये चास्य यतमानस्यानेकविधस्तापोऽनुप्लवते। ततस्तापानुपप्लवात् सर्वं दुःखमित्युच्यते, न सुखस्याभावादिति, अयमेव चार्थो **मुनिना** श्लोकेन वर्णितः।

कामं कामयमानस्य यदा कामः समृध्यति।
अथैनमपरः कामः क्षिप्रमेव प्रबाधते।।[२]

इत्येवमादि।।५७।।

**दुःखविकल्पे सुखाभिमानाच्च।।४।१।५८।।**

यश्च सुखार्थं यतमानस्य दुःखविकल्पो भवति तं सुखाङ्गभावात् सुखमित्य-

---

१. न सुखं प्रत्याख्यातुम् C २. द्रः महाभारतम् xii.94.30

भिमन्यमानः पुनस्तदुपादत्ते। पुनः पुनर्जायत इति न संसारमतिवर्तते। तस्याः सुखसंज्ञायाः प्रतिपक्ष उपदेशोऽयं क्रियते[१] सर्वं दुःखमिति। यद्येवं कस्माद् दुःखं जन्मेति नोच्यते? सोऽयमेवं वक्तव्ये यदाह दुःखमेवेति तेन चास्य सुखाभावं ज्ञापयति। यदपि तद्बाधनान्तरालेषु सुखमुपजायते तदपि दुःखमेव दुःखानुषङ्गात्, न पुनरभावादिति। जन्मविनिग्रहार्थीयो वै खल्वयमेवशब्दः। जन्मनोऽनेन विनिग्रहं शास्ति। सर्वं दुःखमिति भावयन् तत्साधनानि नोपादत्ते। अनुपादानात्[२] विमुच्यत इति ॥५८॥

॥दुःखपरीक्षाप्रकरणम्॥

## [ अपवर्गपरीक्षाप्रकरणम् ]

### ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥४।१।५९॥

दुःखोद्देशानन्तरमपवर्गः। स प्रत्याख्यायते, **ऋण...भावः**। इत्यनेन सूत्रेण। ऋणानुबन्धान्नास्त्यपवर्गः। शेषं **भाष्ये**। अनुबन्धः सर्वदाकरणीयता। नायम् ऋणानुबन्धात् कदाचिन्मुच्यते जन्मप्रभृति यावत् प्रायणमिति। क्लेशानुबन्धादप्यपवर्गो नास्ति। क्लेशानुबद्ध एवायं जायते, क्लेशानुबद्धो[३] म्रियत इति। प्रवृत्त्यनुबन्धादपवर्गो नास्ति। न हि कदाचिदयं कर्म न करोतीति[४] ॥५९॥

### [५]प्रधानशब्दानुपपत्तेर्गुणशब्देनार्थवादो निन्दाप्रशंसोपपत्तेः ॥४।१।६०॥

यत् तावदृणानुबन्धादिति, **प्रधा...पत्तेः**। इति। ऋणैरिति नायं प्रधानशब्दः

१. उद्देशः क्रियते J २. अनुपाददान C ३. °द्ध एवायं C ४ नास्ति-न कर्म करोति। C ५. °शब्दानुप° °नानुवादो C; नायमर्थवादो J

प्रत्यादेयदानप्रतिदेयग्रहणासंभवात्। यत्र खल्वेकः प्रत्यादेयं ददाति इतरः प्रतिदेयं गृह्णाति, तत्रायमृणशब्दः प्रधानं भवति, अन्यत्र भाक्त इति। तस्माद् गुणशब्देनायमर्थवादः[१]। यथा अग्निर्माणवक इति। तत्राग्निशब्दो दहनादिसमर्थे तेजोविशेषे वर्तते, स तत्र प्रवर्तमानः तत्सामान्यादतथाभूते माणवके प्रयुज्यते अग्निर्माणवक इति। न पुनरयमग्निशब्दो माणवकसमानाधिकरणो दहनादिसमर्थं माणवकं प्रतिपादयति, अपि तु येऽग्नेः पिङ्गलपाटवादयो[२] धर्माः तत्संबन्धिनं माणवकं प्रतिपादयति। तद्द्वारकश्च प्रयुज्यमानोऽयं शब्दः गुणोपकरणत्वाद् गौणो भवति, तथा च ऋणशब्दः। अप्रयुक्तक्रमं चेदं वाक्यम् ऋणवान् जायत इति। उपमा तु लुप्तनिर्दिष्टा[३] द्रष्टव्या, ऋणवानिव जायत इति क उपमानार्थः? अस्वातन्त्र्यम्। ऋणवान् यथा अस्वतन्त्रः, एवमयं जायमानः कर्मस्वस्वतन्त्रो वर्तत इति। जायमान इति चायं गुणशब्द एव न मुख्ये संभवति। न हि मातृतः कुमारके जायमाने लोहितपाणिपादास्येऽध्ययनादिधर्मोपपत्तिरिति। अतो गृहस्थे जायमाने इति। किं पुनर्गृहस्थस्य जायमानेन कुमारकेण सामान्यम्? क्रियासंबन्धः। अग्निहोत्रहवनादिक्रियासंबन्धसामान्याद् गृहस्थो जायत इति। यथा मातृतः कुमारको जायमानः शरीरादिभिः संबध्यते एवमग्निहोत्रहवनादिक्रियासंबन्धसामान्येन जायत इति। कस्मात्? शक्तस्यार्थिनश्च कर्मभिरधिकारात्, शक्तश्चार्थी च कर्मभिरधिक्रियते। न च मातृतः कुमारके जायमाने शक्तिः, न चार्थितेति। उभयं तु गृहस्थे जायमाने। तस्माद् गृहस्थो जायमानोऽभिधीयत इति।

अर्थित्वस्याविपरिणामे जरामर्यवादोपपत्तिः। यच्चेदं ब्राह्मणमाजरसं कर्मभिः संबन्धं शास्ति तदन्यथा संभवतीति अर्थित्वस्याविपरिणामे जरामर्यवादोपपत्तिः। [४]यथा स्कन्धविपरिणाम इति। यदार्थित्वं विपरिणतं भवति, तदानेनाग्निहोत्रं संन्यसनीयम्। आयुषस्तुरीयभागं प्रव्रज्यायुक्तमाह जरेति। यावज्जीवसंयोगे हि

---

१. नानुवाद इति। C २. पाटलत्वादयो C ३. ॰मात्र लुप्ता C ४. यदार्थित्वाविपरिणामः C

जरया हवा इत्यनर्थकं वाक्यम्, यस्मात् स्वयमशक्तस्य बाह्या शक्तिर्विहिता सत्यर्थित्वे [१]तेन हवनं शास्ति। यदा पुनरर्थित्वं विपरिणतं तदा संन्यासो विधीयत इति। कस्मात् पुनरेतदेवमुच्यते सत्यर्थित्वे अग्निहोत्रहवनमिति? कर्मविधौ कामसंयोगश्रुतेः। यस्मात् सर्वस्मिन् कर्मणि कामविधिः श्रूयते स्वर्गकाम इति। यथोपदिष्टार्थविज्ञानं[२] चोपदेशविषयः। यश्चोपदिष्टमर्थं विजानाति तं प्रत्युपदेशः क्रियते, न गायनो बधिरेषु प्रवर्तते न नर्तकोऽन्धेषु। न चोपदेशविज्ञानं बालकेष्वस्ति। तस्मान्न तं प्रत्युपदिश्यत इति। न भिद्यते च लौकिकात्। लौकिकोऽपि तावदपरीक्षको न जातं कुमारकमेवं ब्रूयात् अधीष्व यजस्व ब्रह्मचर्यं चरेति। कुत एवमृषिरुपपन्नानवद्यवादी ब्रूयादिति। अर्थापि विहितं वा अनूद्येत कामाद् वा अर्थः कल्प्येतेति। विहितानुवचनं न्याय्यम्। तत्रानुपपन्नप्रमाणकस्यार्थस्याभिधानं कामतः प्रकल्प्यः[३]। यो ह्यर्थः प्रमाणतो न संभवति तस्य यदभिधानं कामतः स प्रकल्पो भवति। यथा जायमानः कुमारकः ऋणवान् भवतीति। उपपन्नप्रमाणकस्याभिधानमनुवचनम्, यथा जायमानशब्दो गृहस्थवचन[४] इति, कथमवगम्यते जायमानो गृहस्थ इति? यज्ञसाधनत्वात्, यस्मात् यजमानो यज्ञाङ्गं भवति। साधनेषु च प्रयत्नव्यापारो दृष्टो न फले। यथा पाकसाधनेषु काष्ठादिषु न पाके न लोष्टादिष्वसाधनेषु। शेषं **भाष्ये**॥६०॥

## समारोपणादात्मन्यप्रतिषेधः ॥४।१।६१॥

कथं पुनरिदं गम्यते फलार्थिन एतद् ब्राह्मणं भवतीति अधिकाराच्च विधानं विद्यान्तरवत्[५]। **समा...षेधः**। यस्मात् निवृत्ते फलार्थित्वे समारोपणं विधीयते॥६१॥

---

१. अन्येन C २. ०र्थः विद्वांश्चो C ३. ०ल्प्येत C ४. गृहस्थे J ५. अधिकाराच्च० ०वत् om C

**पात्रचयान्तानुपपत्तेश्च फलाभावः ॥४।१।६२॥**

यस्मात् निवृत्तेऽर्थित्वे प्रव्रजितानां पात्रचयान्तानि कर्माणि न क्रियन्ते। यदि चेदं ब्राह्मणमविशेषेण प्रवर्तते तेन सर्वत्र पात्रचयान्तानि कर्माणि प्रसज्यन्त इति। शेषं **भाष्ये** ॥६२॥

**सुषुप्तस्य स्वप्नादर्शने क्लेशाभाववदपवर्गः ॥४।१।६३॥**

यत् पुनरेतत् क्लेशसन्ततेरविच्छेदादिति? **सु...वर्गः**। यथा सुषुप्तस्य स्वप्नादर्शिनः क्लेशानुबन्धो विच्छिद्यते सुखदुःखसाधनानुबन्धश्च तथा मुक्तस्यापीति। तच्च योगिनो मुक्तस्य रूपमुदाहरन्तीति ॥६३॥

**न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥४।१।६४॥**

यदपि प्रवृत्त्यनुबन्धादिति। **न ....स्य**। विद्यमानापि प्रवृत्तिः क्लेशमन्तरेण प्रतिसन्धानाय न भवतीति धर्माधर्मकारणं न भवतीति यावदुक्तं स्यात्। प्रतिसन्धिस्तु पूर्वजन्मनिवृत्तौ पुनर्जन्म। तच्च तृष्णाकारितम्। एतच्चोक्तं

**वीतरागजन्मादर्शनात्**

इति सूत्रे। कर्मवैफल्यप्रसङ्ग इति चेत्, न। कर्मविपाकप्रतिसंवेदनस्याप्रत्याख्यानात्। न ब्रूमो विद्यमाने कर्मणि मुच्यत इति, अपि तु सर्वकर्माणि अन्ते जन्मनि विपच्यन्ते ॥६४॥

**न क्लेशसन्ततेः स्वाभाविकत्वात्॥४।१।६५॥**

नोपपद्यते क्लेशसन्ततेर्विच्छेदः। कुतः? क्लेशसन्ततेः स्वाभाविकत्वात्। अनादिरियं क्लेशसन्ततिः स्वभावतः प्रवृत्ता। न चासावुच्छेत्तुं शक्येति॥६५॥

**प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम् ॥४।१।६६॥**

अत्र **केचित्** परिहारं वर्णयन्ति, **प्रा...त्वम्**। यथा प्रागुत्पत्तेरभावो अनादिः, अथ च भावेन निरुध्यते, एवमनादिः क्लेशसन्ततिरतत्त्वज्ञस्य तत्त्वज्ञानेन निरोत्स्यत इति॥६६॥

**अणुश्यामताऽनित्यत्ववद् वा॥४।१।६७॥**

यथा अणौ श्यामता अनादिश्च अनित्या च, एवं क्लेशसन्ततिरपि। सतः खलु धर्मो नित्यत्वमनित्यत्वं चेति नित्यानित्यत्वे अवधारयद्भिरुक्तम्। तत्तु अभावे भाक्तमिति। का पुनरिह भक्तिः? नित्यमकारणम्, अकारणश्च प्रागभावः। अनित्यं भूत्वा न भवति। न च प्रागभावो भावे सति भवत्येतत् सामान्यम्। यत् पुनरेतत्, अनादिरणुश्यामतेति। हेत्वभावादयुक्तम्। अनुत्पत्तिधर्मकमनित्यमिति नात्र हेतुरस्ति इति॥६७॥

**न, सङ्कल्पनिमित्तत्वाच्च रागादीनाम्॥४।१।६८॥**

अयं च समाधिः, **न ...नाम्**। कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्चेति चार्थः। अनुभूतविषयप्रार्थना सङ्कल्प इत्युक्तम्। मिथ्यासङ्कल्पेभ्यो रञ्जनीयकोपनीय-

मोहनीयेभ्यो रागादयः प्रादुर्भवन्ति। कर्म च निकायनिर्वर्तकं सङ्कल्पापेक्षं रागादीन् जनयति। दृष्टो हि कश्चित् सत्त्वनिकायो रागबहुलो यथा पारावतादिः। कश्चित् क्रोधबहुलो यथा सर्पादिः। कश्चित् मोहबहुलो यथा अजगरादिः। यदि च कर्म रागादीन् निर्वर्तयेत् सर्वदा रागादिर्भवेदित्यनिर्मोक्षप्रसङ्गः। न, कारणवैकल्यात्। सङ्कल्पाद्यपेक्षं कर्म रागादिकारणम्। न निरपेक्षमिति। सुखादीनामपि तर्हि कर्म कारणं न प्राप्तम्? न, निरपेक्षत्वात् कर्म सुखादिषु कर्तव्येषु सङ्कल्पं नापेक्षते। अपि तु स्वकारणसन्निधानापेक्षं सुखादि करोति। यथोत्क्षेपणादिकर्म नोदनाद्यपेक्षं संस्कारं करोति, अनपेक्षं तु संयोगविभागाविति। परस्परनिमित्तत्वं च रागादीनां दृष्टम्। रक्तो मुह्यति। रक्तः कुप्यति। कुपितो मुह्यति रज्यते च। मूढः कुप्यति रज्यते चेति। यदपीदमुच्यते अनादिः क्लेशसन्ततिरिति, तन्न, अविशेषात्। यथा अनादिः क्लेशसन्ततिः, एवमाध्यात्मिका भावाः सर्वेऽनादिना प्रबन्धेन प्रवर्तन्ते। न जात्वनुत्पन्नपूर्वं किंचनोत्पद्यते। न चैवं किञ्चिदनुत्पत्तिधर्मकं व्ययधर्मकं प्रतिज्ञायते। अनुत्पन्नपूर्वं तु तत्वज्ञानं केवलमुत्पद्यते। नान्यः कश्चिदाध्यात्मिको भाव इति॥६८॥

॥अपवर्गपरीक्षाप्रकरणम्॥

॥इति औद्द्योतकरे न्यायवार्त्तिके चतुर्थाध्यायस्य प्रथमाह्निकम्॥

# चतुर्थाध्याये द्वितीयाह्निकम्

## [ तत्त्वज्ञानोत्पत्तिप्रकरणम् ]

### दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥४।२।१॥

तदिदं तत्त्वज्ञानमुत्पद्यमानं किं विषयमात्रे भवति आहोस्विद् विषयविशेष इति? विषयमात्रे तावदशक्यं तत्त्वज्ञानेन भवितुम्। कुतः? विषयाणामानन्त्यात्। विषयविशेषेऽपि तत्त्वज्ञानविषयत्वेन योऽवतिष्ठते स विभज्य वचनीयः। तत्र विषयान्तराणामात्मादिप्रमेयव्यतिरेकिणां निराकरणं प्रमेयविशेषविषयत्वात् सूत्रस्य। यत् तदात्मादिसूत्रं न तेन प्रमेयमात्रमभिधीयते। प्रमेयमात्राभिधाने हि आत्मादिग्रहणं व्यर्थम्। अपि तु प्रमेयविशेषः। यस्तत्त्वज्ञानविषयत्वेन व्यवतिष्ठमानः संसारव्यवच्छेदहेतुर्भवति, यश्च मोहविषयत्वात् संसारं प्रतनोति स तत्त्वतो ज्ञेय इति। तस्मिन्नयं प्रश्नः। किं नु खलु भो यावन्तो विषयाः तावत्सु तत्त्वज्ञानं प्रत्येकमुत्पद्यते, अथ क्वचिदुत्पद्यत इति? न तावत्प्रत्येकम्, आत्मादेरानन्त्यात्। किमिदमानन्त्यम्? इयत्ताप्रत्ययाविषयत्वम्। अथ क्वचिदुत्पद्यते? यत्र नोत्पद्यते तत्त्वज्ञानं तत्रानिवृत्तो मोहः। यत्र मोहः, तत्र रागद्वेषाविति रागद्वेषमोहाश्च बन्धनमित्यनिर्मोक्षप्रसङ्गः। अथ मन्यसे [१]अन्यविषयं त[त्त्वज्ञान]म् अन्यविषयं मोहं निवर्तयतीति? एवं च [२]सति अविशेषेणापवर्गः प्राणिमात्रे प्राप्नोति। न हि कश्चित् प्राणी कस्यचिदर्थस्य [३]तत्त्वमात्रं न वेत्तीति। न, मोहार्थापरिज्ञानात्। न तत्त्वज्ञानस्यानुत्पत्तिमात्रं मोहोऽपि तु मिथ्याज्ञानं मोहः। तच्च मिथ्याज्ञानं यस्मिन् विषये प्रवर्तमानं संसारबीजं भवति, स विषयस्तत्त्वतो ज्ञेय इति। किं पुनस्तन्मिथ्याज्ञानम्? अनात्मन्यात्मग्रह इति। शेषं **भाष्ये**॥

१. अन्यविषयं त.....म् J    २. सत्यपवर्गः C    ३. तत्त्वं न वेत्ति C

**दोष....वृत्तिः**। शरीरादिदुःखान्तं प्रमेयं दोषनिमित्तम्। तद्विषयत्वान्मिथ्याज्ञानस्य। तद्विषये तत्त्वज्ञानमुत्पन्नं तद्विषयमहङ्कारं निवर्तयतीति समाने विषये तयोर्विरोधात्। सर्वं चैतदुक्तं द्वितीयसूत्र इति॥१॥

**दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः॥४।२।२॥**

कामा वियया इन्द्रियार्था रूपादय उच्यन्ते। त एते विषया मिथ्या सङ्कल्प्यमाना रागादीन् जनयन्ति। कः पुनरेषु मिथ्यासङ्कल्पः? असाधारणप्रत्ययोत्पत्तिनिमित्तत्वेन व्यवसायो ममैवैत इति। तान् साधारणतया प्रतिसंचक्षीत। नैते मम दैवचौराग्निदायादादिसाधारणा इति। एवमेतस्य प्रतिसंचक्षाणस्य यो व्यवसायस्तद्विषयो मोहः स निवर्तत इति। तन्निवृत्तावध्यात्मं शरीरादीन् प्रतिसंचक्षीत इति। किं पुनरेतैः प्रसंख्यानम्? शरीरादिषु नैते आत्मान इति व्यतिरेकदर्शनं प्रसंख्यानम्। सोऽयमध्यात्मं बहिश्च विविक्तचित्तो विहरन् मुक्त इत्युच्यते। एतच्च त आहुः

जीवन्नेव विद्वान् संहर्षायासाभ्यां विप्रमुच्यते।

इति॥२॥

**तन्निमित्तं त्ववयव्यभिमानः॥४।२।३॥**

अतः परं काचित् संज्ञा भावयितव्या काचिद्धेया इत्युपदिश्यते। नार्थनिराकरणं नार्थोपादानम्, किं तु यथाव्यवस्थित एव विषये किञ्चिद्भावनीयं किञ्चित् निराकरणीयमिति। **तन्नि...मानः**। तेषां दोषाणां निमित्तमवयव्यभिमानः। तत्रावयवीति संज्ञा भावनीया स्त्रीसंज्ञा हेया सपरिष्कारा पुरुषस्य। परिष्कारो बन्धनम्। स्त्रियाः पुरुषसंज्ञा सपरिष्कारेति। तत्रापि च द्वे संज्ञे निमित्तसंज्ञा अनुव्यञ्जनसंज्ञा च। निमित्तसंज्ञा दन्तौष्ठमिति। दन्तादिषु दन्तत्वादिनिबन्धना संज्ञा निमित्तसंज्ञा। एवं

च अनुव्यञ्जनसंज्ञा इत्थं दन्ता इत्थमोष्ठाविति, इत्थमित्यध्यारोपेण निमित्तस्य। सेयमध्यारोपेण भाव्यमाना संज्ञा मोहः। स च रागादिकारणमिति प्रहेयः। न पुनरवयवी निराकर्तव्यः प्रमाणतस्तथाभावादिति ॥३॥

॥तत्त्वज्ञानोत्पत्तिप्रकरणम्॥

## [ प्रासङ्गिकमवयवावयविप्रकरणम् ]

**विद्याविद्याद्वैविध्यात् संशयः ॥४।२।४॥**

अथेदानीमर्थं[1] निराकरिष्यता अवयविन्युपपाद्यते[2], **विद्या....शयः**। सदसतोरुपलम्भाद् द्विविधा विद्या। सदसतोरनुपलम्भादविद्यापि द्विविधैव। सोऽयं चावयवी यद्युपलभ्यते, अथापि नोपलभ्यते न कथंचन संशयाद् विमुच्यत इति। अत्र तावदुक्तं न विद्याविद्याद्वैविध्यं संशयस्य कारणम्, उपलब्ध्यनुपलब्ध्योः पूर्वपदविशेषणत्वात् ॥४॥

**तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥४।२।५॥**

तस्मिन्नवयविनि संशयो न युक्तः पूर्वोक्तानां हेतूनामप्रतिषेधात्। तत्र येऽवयविनोऽर्थान्तरभावे हेतव उद्दिष्टास्ते न शक्याः प्रतिषेद्धुमिति ॥५॥

**वृत्त्यनुपपत्तेरपि न संशयः[3] ॥४।२।६॥**

वृत्त्यनुपपत्तेरपि तर्हि संशयानुपपत्तिः, नास्त्येव ह्यवयवीति ॥६॥

---

१. °मवयविनं निरा° J २. अवयव्यु° C var. ३. J पुस्तके वागीश्वरवृत्तौ च नेदं सूत्रम्।

## कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः ॥४।२।७॥

तद्विभजते, **कृ....भावः**। अवयवा वा अवयविनि वर्तेरन् अवयवी वा अवयवेषु। अवयवा अवयविनि वर्तमानाः कृत्स्नेन वा वर्तन्ते, एकदेशेन वा? तत्र तावदवयवः अवयविनि कृत्स्ने न वर्तते, अवयवावयविनोः परिमाणभेदात्। अल्पपरिमाणोऽवयवो महापरिमाणश्चावयवी अल्पपरिमाणेन च महापरिमाणस्याव्याप्तिः। एकद्रव्यश्चावयवः प्राप्नोति एकावयविवृत्तित्वात्। न चैकद्रव्यं द्रव्यमविनश्यदाधारमस्ति। नाप्यवयव्येकदेशेन वर्तते। न ह्यस्यान्येऽवयवा एकदेशभूताः सन्तीति। तस्मिन्नपि चैकदेशेन वर्तमानोऽवयवः किमेकदेशेन वर्तते, अथ कार्त्स्न्येन[1] वर्तत इति पूर्ववत् प्रसङ्गः॥७॥

## तेषु चावृत्तेरवयव्यभावः ॥४।२।८॥

अथावयवेषु अवयवी वर्तते? **तेषु ....भावः**। न तावत् प्रत्यवयवं कृत्स्नो वर्तते तयोः परिमाणभेदाद् अवयविनश्च एकद्रव्यताप्रसङ्गात्। एकावयववृत्तित्वादेकद्रव्योऽवयवी [2]प्राप्नोति, एकद्रव्यश्चावयवी[3] एकेन अवयवेनारभ्यत इति सततोत्पत्तिप्रसङ्गः। किं च एकवृत्तित्वाच्च[4] द्व्यणुकमेकस्मिन् परमाणौ वर्तत इति कारणविभागविनाशासंभवात्[5] नित्यं प्राप्नोति। उत्पत्तिमच्च नित्यं चेति न दृष्टान्तोऽस्ति। अथावयवी एकदेशेन वर्तते, तथापि अवयविन आरम्भकावयवव्यतिरिक्तावयवाः प्राप्नुवन्ति, येऽवयवेषु[6] वर्तन्त इति॥८॥

१. वर्तते कृत्स्नेन वेति C २, ३. प्रा° °यवी om J ४. एकद्रव्यत्वात् द्व्य° C
५. °शाभावात् C ६. यैरवयवेषु J

**पृथक् चावयवेभ्योऽवृत्तेः[१] ॥४।२।९॥**

नाप्यवयवव्यतिरेकेणान्यत्र वर्तते अग्रहणात्, नित्यत्वप्रसङ्गाच्च। अवयवव्यतिरेकेणान्यत्र वर्तमान उपलभ्येत, नित्यश्च स्याददव्यत्वादनाधारं द्रव्यं नित्यमिति ॥९॥

**न चावयव्यवयवाः ॥४।२।१०॥**

न चावयवानां धर्ममात्रमवयवी। कस्मात्? [२]धर्ममात्रस्य अवयविनो धर्मिभिरवयवैः पूर्ववत् संबन्धोऽनुपपन्नः। न चान्यत्र धर्मिभ्योऽवयवेभ्योऽवयवी धर्मः पृथगुपलभ्यते नित्यत्वप्रसङ्गादिति च समानम्। अवयवी चैकदेशेन अवयवेषु वर्तत इति अवयवसमूहमात्रमवयवी प्राप्नोति। एकस्मिंश्चावयवे एकदेशेन वर्तमानोऽवयवी एकावयवोपलम्भात् [३]एकदेशेनोपलब्धौ [४]तत्स्थानेऽवयवी गृह्येत। न त्वेकतन्तुदर्शने पटोपलब्धिर्भवति। तदेवं मुक्तसंशयमभिधीयते नास्त्यवयवीति ॥१०॥

**एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥४।२।११॥**

यत् तावदवयवा अवयविनि वर्तन्त इति, तन्न, अनभ्युपगमात्। न हि कारणं कार्ये वर्ततेऽपि तु कारणे कार्यमिति। यत् पुनरेतदवयव्यवयवेषु वर्तमान एकदेशेन वा वर्तते कार्त्स्न्येन वा वर्तत इति तत्[५]। **एक....श्नः**। कृत्स्नमिति च एकदेश इति

---

१. अवयव्यवृत्तेः C  २. धर्मस्या॰ C  ३. एकदेशोप॰ J  ४. तत्स्थोऽव॰ J
५. तन्न C

च भेदविषयावेतौ शब्दौ न चैतावेकस्मिन्नुपपन्नौ। अनेकस्याशेषता कृत्स्नशब्दस्यार्थः। अशेषे च सति कस्यचिदभिधानमेकदेशशब्दस्य। न चैतदिहोपपद्यत इति। तस्मान्नावयविनि कृत्स्नशब्दो नाप्येकदेशशब्द इति॥११॥

## अवयवान्तरभावेऽप्यवृत्तेरहेतुः॥४।२।१२॥

अवयवान्तरभावादिति। यद्यपि स्वावयवव्यतिरिक्तमवयवान्तरं प्रतिपद्येथाः, तथाप्यवयवोऽवयवे वर्तेत नावयवीत्यहेतुः। अवयवान्तराभावात् नावयवेन[१] वर्तत इति। [२]एवं चानेकत्र वर्तत इति प्रतिजानानो नानुयोक्तव्यः, उभयेन व्याघातादित्युक्तम्। यद्यवयवी नैकदेशेन वर्तते न कृत्स्नो[३] वर्तते अथ कथं वर्तत इति वृत्त्यर्थो वाच्यः[४]। वृत्तिरस्यावयवेषु आश्रयाश्रयिभावः समवायाख्यः संबन्धः। स कथं भवतीति? यस्य यतोऽन्यात्रात्मलाभानुपपत्तिः स तत्रैव वर्तत इति। न खलु कारणद्रव्येभ्योऽन्यत्र कार्यद्रव्यमात्मानं लभत इति। विपर्ययस्तु कारणद्रव्येषु। न कारणानि कार्यद्रव्येष्वात्मानं लभन्त इति। कथं नित्येष्वाश्रयाश्रयिभावः? अनित्येषु दर्शनात् सिद्धो नित्येषु। यथा अनित्यानि यत्रोपलभ्यन्ते तत्र वर्तन्ते, तथा नित्यान्यपि यत्रोपलभ्यन्ते तत्र वर्तन्त इति। एतत् समानमनित्यानां नित्यैः।

रूपाद्यन्तरानिर्देशादिति चेत्? अथ मन्यसे यद्यवयवव्यतिरिक्तोऽवयवी भवति, तस्यावयवस्य रूपादिव्यतिरेकेणावयविनो रूपान्तरं निर्देष्टव्यम्, यथा अचित्रास्तन्तवः पटं चित्रमारभन्त इति? न, उपलभ्यमानरूपाद्याधारत्वात् यदवयविनो रूपमुपलभ्यते तदस्य रूपं यथावयवस्य। कार्यकारणभावाभ्युपगमाच्चाविरुद्धः। अवयविनो रूपं निर्दिश्यतामिति ब्रुवाणेन अवयवावयविनौ तावदभ्युपगतौ। तदभ्युपगमाच्च विरुद्धः। एतावानेवायं विवाद [५]इत्यभ्युपेतहानिः। उपेत्य चित्रवादं ब्रूमः पटस्य चित्रं रूपमिति।

१. नैकदेशेन C  २. एकं C  ३. कात्स्न्र्येन C  ४. वृत्त्यर्थो वाच्यः J  ५. इत्यभ्युपेत्य J

अनेकत्वप्रसङ्ग इति चेत्? अथ मन्यसे चित्रं रूपमवयविनोऽभ्युपगच्छता अनेकरूपोऽवयवी प्रतिपन्नो भवति। न चैकं द्रव्यमनेकरूपम्। नाप्यनेकस्मिन् एकमिति? न, चित्रशब्दस्यैकानेकविषयत्वात्। चित्रशब्देनैकं चाभिधीयते, अनेकं च। चित्रं रूपं चित्राणि रूपाणीति। न, एकस्मिन्नदृष्टत्वात्। न हि एकं रूपं चित्रं दृष्टमिति। न, अभ्युपेतहानेः। एकं चित्रमित्यनभ्युपगच्छतानेकं चित्रमिति हेयम्, एकचित्रसमुच्चयो ह्यनेकं चित्रमिति। अथानेकमचित्रं चित्रमित्युच्यते? एवमप्यनिवृत्तो व्याघातः, अचित्रं चित्रमिति, यथा अशुक्लं शुक्लमिति। अथाचित्राणि तन्तुरूपाणि संहत्य पटे चित्रं रूपमुत्पादयन्तीति पक्ष आश्रीयते, एवं च न किञ्चिद् बाध्यते। पुटान्तरे प्रसङ्गश्चित्रप्रत्ययस्य। यस्य पटस्य एकं चित्रं पार्श्वं द्वितीयमचित्रम्, तेन यथैकस्मिन् पार्श्वे तं पटं पश्यतश्चित्रपटबुद्धिर्भवति, एवं पुटान्तरेऽपि चित्रबुद्ध्या भवितव्यम्? भवतैवेदमुक्तम्। यस्य पटस्यैकं पार्श्वं चित्रं स तु पटो न चित्रः पार्श्वस्यापटत्वात्। चित्रप्रत्ययस्तत्र कस्मान्नेति चेत्? चित्राचित्राभ्यां पार्श्वाभ्यां पट आरभ्यमाणश्चित्रः पट इति यथा [१]पार्श्वान्तरेऽपि चित्रप्रत्ययः प्रसक्तः। न प्रसक्तः, एकस्य चित्ररूपस्यानारम्भकत्वात्। एकस्मिन् पार्श्वे चित्रं रूपं तत् कथमवयविनि रूपाद्यन्तरमारभेत इति। एतावच्च शक्यं वक्तुम्। अवयवरूपाभ्यामवयविनि रूपान्तरमारभ्यते, तथोपलब्धेः। यद्ययमरूपोऽवयवी स्यात्, नोपलभ्येत। न तावदवयवरूपादवयविनो ग्रहणं युक्तम्। वायोरप्युपलब्धिप्रसङ्गात्। यद्यन्यरूपादन्यस्योपलब्धिर्भवति, वायोरप्युपलब्धिः प्राप्नोति। न चैतदस्ति। तस्मात् स्वरूपादवयव्युपलभ्यते। उभयावयवरूपदर्शनप्रतिसन्धानाच्चावयविनि रूपोपलब्धिर्भवति। न चैवं सत्यरूपोऽवयवीति। तस्मादवयविन्यभिमानः प्रतिषिध्यते सपरिष्काररूपो नावयवीति। यथा रूपादिषु मिथ्यासङ्कल्पो न रूपादय इति। अयं चार्थो **मुनिना** श्लोकेन दर्शितः—

१. पुटान्तरे चित्रप्रत्यय एवं चित्रप्रत्ययः पुटान्तरेऽपि प्रसक्तः? C

इन्द्रियार्था ह्यनर्थाय यदि स्युरविकल्पिताः।
सर्वोऽनर्थेन युज्येत चरन्निन्द्रियगोचरे॥

इति ॥१२॥

**केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिः॥४।२।१३॥**

सर्वाग्रहणमवयव्यसिद्धेरिति प्रत्यवस्थितोऽर्थभेदमाह, **केश....लब्धिः**। यथैकैकः केशानां तैमिरिकेण नोपलभ्यते, केशसमूहस्तूपलभ्यते, तथा एकैकशोऽणुर्नोपलभ्यते अणुसमूहस्तूपलभ्यत इति। तदिदमणुसमूहविषयं ग्रहणमिति॥१३॥

**स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद् विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः॥४।२।१४॥**

न हीन्द्रियं प्रकृष्यमाणं स्वविषयमतिक्रामति। न हि चक्षुः प्रकृष्यमाणं रसं गृह्णाति, नापि निकृष्यमाणं स्वविषयात् प्रच्यवते। अपि तु स्वविषय एवेन्द्रियस्य प्रकर्षाप्रकर्षापेक्षाणि पटुमन्दभावेन ग्रहणानि भवन्तीति। तत्र पटुग्रहणं सामान्यविशेषतद्वतां ग्रहणमिति। मन्दं तु ग्रहणं सामान्यमात्रालोचनमिति। सोऽयं तैमिरिकः कश्चित् चक्षुर्विषयं केशं न गृह्णाति, केशसमूहं तु गृह्णाति। उभयं हि अतैमिरिकस्य चक्षुषो विषय इति। परमाणवस्त्वतीन्द्रिया दर्शनविषयत्वं न प्रतिपद्यन्ते। संहता ऐन्द्रियका असंहता अतीन्द्रिया इति अतिमहान् व्याघातः। अनुपजातविशेषाणां दर्शनविषयत्वानुपपत्तेः। तस्माद् उत्पद्यतेऽवयवी यो दर्शनस्य विषय इति। सञ्चयमात्रं दर्शनविषय इति चेत्? अथ मन्यसे दर्शनस्य परमाणुसञ्चयो विषयः, सञ्चिताः परमाणवो दर्शनस्य विषयतामुपयान्तीति? न, सञ्चयस्य संयोगभावात्। सञ्चयोऽपि निरूप्यमाणः परमाणुसंयोगः। संयोगश्चोपलभ्यमानाश्रय

उपलभ्यते, भवति हि इदमनेन संयुक्तमिति। यश्च विषय उपलभ्यते तस्यानुपलब्धेरावरणादि[१] कारणमुपलभ्यते। न तु परमाणव उपलब्धिलक्षणप्राप्ताः। तस्मात् न तेषामावरणादेरग्रहणकारणादग्रहणमिति ॥१४॥

**अवयवावयविप्रसङ्गश्चैवमा प्रलयात् ॥४।२।१५॥**

यश्चावयविनोऽवयवेषु वृत्तिविकल्पादभाव उक्तः, सोऽवयवस्यावयवेषु प्रसज्यमानः प्रलयाद् वा निवर्तेत, निरवयवाद् वा परमाणुतो निवर्तेत। कथमिति? यथा अवयव्यवयवेषु वर्तमानः प्रत्येकं सर्वात्मना वा एकदेशेन वा वर्तेतेत्युक्तम्, तथावयवोऽवयवेषु वर्तमानस्तदवयवोऽप्यवयवेषु इत्येवं यावत् परमाणुरिति, यावद् वा प्रलयोऽनिवृत्तिर्वेति सर्वथोपलब्धेर्विषयो नास्ति। उपलब्धिविषयं चाश्रित्यायं विवादः। किमवयव्येकदेशेनावयवेषु वर्तते, उत सर्वात्मना वर्तत इति। सोऽयमाश्रयं व्याघ्नन्नात्मघाताय कल्पत इति ॥१५॥

**न प्रलयोऽणुसद्भावात् ॥४।२।१६॥**

न चास्ति प्रलयोऽणुसद्भावात्। अयं च खलु विभज्यमानो भेदस्तावद् वर्तते यावत् परमाणुरिति। [२]परमाणुश्च निरवयवः। विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्। लोष्टस्य विभज्यमानावयवस्याल्पतरमल्पतममुत्तरमुत्तरं भवति। स चायमल्पतरप्रसङ्गो यतो निवर्तते, यतो नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे इति ॥१६॥

---

१. लब्धौ चावरणं C २. ण्णुर्नाम विभागे C

**परं वा त्रुटेः॥४।२।१७॥**

अथ न परमाण्वन्तो विभागः? तेन— **परं...त्रुटेः**। अवयवविभागस्य आनन्त्यात् त्रुटिरमेयः प्राप्नोति। संख्यापरिमाणगुरुत्वैः तावत्परिमाणस्त्रुटिः, इयदत्र गुरुत्वं वर्तते, इयन्तश्च परमाणवः संहतास्त्रुटिभावमापद्यन्त इति नावधारणं युक्तम्। किं कारणम्? यथैवानेकपरमाणुसंघातो हिमवान् संख्यापरिमाणगुरुत्वैरमेयः, तथा त्रुटिरपि भेदस्यानन्त्यात् प्रसज्यते। अथ प्रलयान्तो विभागः? सोऽपि न युक्तो विभागस्य विभज्यमानहानेऽनुपपत्तेः न प्रलयान्तो विभागः। स चायं विभागो विभज्यमानाधारः। विभज्यमानश्च नास्ति विभागश्चास्तीति व्याहतम्। विभज्यमाना-वयवं च परमाणुं प्रतिपद्यमानेन सावयवः परमाणुः प्रतिपत्तव्यः। सावयवत्वे च परमाणुशब्दस्यार्थो वाच्यः, किमुक्तं भवति परमाणुरिति? ये च परमाणोरवयवास्ते किं समानपरिमाणा उत भिन्नपरिमाणा इति? यदि समानपरिमाणाः, अवयवावय-विभावो दुरुपपादः। न हि वयं समानपरिमाणानां क्वचिदवयवावयविभावं पश्यामः। अथ भिन्नपरिमाणाः न परमाणुः प्रतिषिध्यते। कार्यमिदं परमाणुरिति कृत्वा प्रतिषिध्यत इति॥१७॥

॥प्रासङ्गिकमवयवावयविप्रकरणम्॥

## [ निरवयवत्वप्रकरणम् ]

**आकाशव्यतिभेदात् तदनुपपत्तिः॥४।२।१८॥**

अथेदानीमानुपलम्भिकः सर्वं नास्तीति मन्यमान आह, **आका...पत्तिः**। आकाशेन परमाणुर्व्यतिभिन्नः। व्यतिभेदादनित्यो घटवदिति॥१८॥

**आकाशासर्वगतत्वं वा॥४।२।१९॥**

अथ परमाणोरन्तराकाशं नास्ति, असर्वगतं तर्हि आकाशं प्रसज्यते, अन्तः परमाणूनामसंबन्धात्। आकाशव्यतिभेदादनित्यः परमाणुरित्यभिदधानो व्यतिभेदार्थं प्रष्टव्यः। किमुक्तं भवति आकाशव्यतिभेदादिति? यदि परमाण्वाकाशसंबन्धो व्यतिभेदः, तदात्र न किञ्चिद् बाध्यते। न हि आकाशसंबन्धात् परमाणोर्नित्यत्वमनित्यत्वं वा प्रसज्यत इति। अथ संबन्धमात्रमेवानित्यताकारणं ब्रूयात्? तथाप्याकाशग्रहणं व्यर्थम्, संबन्धमात्रस्यानित्यतासाधकत्वात्। न हि कृतकत्वस्य साधनभावे देवदत्तकृतकत्वादिति युक्तं वक्तुम्। संयोगमात्रं चोत्तरसूत्रेणानूद्यते चरितार्थं संयोगोपपत्तेरिति तदेवेदं पुनरुच्यत इति। तस्मान्नायं व्यतिभेदार्थः॥१९॥

**[१]अन्तर्बहिरिति कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥४।२।२०॥**

अथ परमाण्वन्तः संबन्धो व्यतिभेदः? सोऽपि न युक्तः, अकार्यत्वात् परमाणोः, **अन्त...भावः**। अन्तर्बहिरिति कार्यस्य कारणान्तरवचनम्। अकार्यश्च परमाणुः। तस्मात् नान्तर्बहिरिति।

अथ परमाण्ववयवसंबन्ध आकाशेन व्यतिभेदः? एतदपि तादृगेव। परमाणोरकार्यत्वात् न तस्यावयवा इति। अथ परमाण्ववयवानां विभागो व्यतिभेदः? सोऽप्यकार्यत्वेनैव प्रत्युक्तः कार्यस्यावयवा विभज्यन्ते। अकार्यश्च परमाणुरिति। तस्मात् न तस्यावयवविभागः। उपेत्य परमाणोरवयवान् न तद्विभागस्याकाशं कारणम्। कर्मजो हि विभागः। तस्याकाशमपि कारणमिति न न्यायोऽस्ति। आकाशं च विभागहेतुत्वेन प्रतिपद्यमानः सर्वभावानामनवस्थानं प्रतिपद्येत। न हि सन्निहिते

१. अन्तर्बहिश्च C °र्बहिरिति द्रः न्यायालङ्कारःपृ. ६८२।

विभागहेतावाकाशे भावानामवस्थानं युक्तम्। अथ सदप्याकाशं निमित्तान्तरमपेक्षते? तद्व्यतिरेकेणाकाशस्यापि च तदुत्पत्तावस्ति सामर्थ्यमिति प्रमाणाभावः।

अथान्तःसुषिरं व्यतिभेदः? एतदपि नास्ति। सर्वतोऽव्यवहितस्य यस्य मध्येऽवयवा न सन्ति तत्सुषिरम्। न च परमाणोरवयवाः सन्ति। कुतः सुषिरं व्यतिभेदः? न चान्या गतिरस्ति। तस्मादाकाशव्यतिभेदादिति शून्यमभिधानम्।

यत् पुनरेतदाकाशमसर्वगतं प्रसज्यत अन्तः परमाणुनासंबन्धादिति? न, सर्वगतार्थापरिज्ञानात्। नायं सर्वगतत्वार्थो यन्नास्ति तेन संबन्ध इति। अपि तु यन्मूर्तिमत् तेन सर्वेण संबध्यत इत्ययं सर्वगतत्वार्थः। न च परमाणोर्मध्यमस्ति। तस्मात् न तेनासंबन्धादाकाशमसर्वगतं प्रसज्यत इति॥२०॥

**[१]शब्दसंयोगविभवाच्च सर्वगतम्॥४।२।२१॥**

यस्मात् सर्वमूर्तिमद्भिः संयोगा विभवन्ति आकाशे तदाश्रया भवन्तीति। शब्दाश्च स्वकारणसन्निधानादुपजायमानाः सर्व एवाकाशमाश्रयन्त इति। तस्मान्नासर्वगतमाकाशम्॥२१॥

**अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः॥४।२।२२॥**

सर्पता क्रियावता द्रव्येणाकाशं न व्यूह्यते। सर्पतश्च क्रियावतो द्रव्यस्य क्रियाहेतुं गुणं न प्रतिबध्नाति। कस्मात्? अस्पर्शत्वात्। यत् खलु स्पर्शवद् भवति तद् व्युह्यते प्रतिबध्नाति च। न त्वेवंधर्मकमाकाशम्। तस्मादप्रतिघातीति। स भवान् सावयवे स्पर्शवति द्रव्ये दृष्टं धर्मं विपरीते नासङ्क्तुमर्हतीति[२]। उक्तं चात्र यदि परमाणुर्विभज्यते, परमाणुर्न स्यात्। किं कारणम्? विभागेऽल्पतरप्रसङ्गस्य

---

१. सर्वसंयोगशब्दवि॰ C Var.   २. नाशङ्कितुम॰ C

यतो नाल्पीयः, तत्रावस्थानमिति। विनाशश्च परमाणोर्भवन् कारणविनाशाद् वा प्रकल्पेत, कारणविभागाद् वा? उभयं च नास्ति परमाणोरकार्यत्वादित्युक्तम्। तस्मात् नाकाशव्यतिभेदादनित्यत्वमिति ॥२२ ॥

**मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥४।२।२३ ॥**

सावयवाः परमाणवो [१]मूर्तिमत्त्वाद् घटादिवत्। संस्थानवत्त्वाच्च सावयवा इति। संस्थानवत् सावयवं दृष्टं घटादि। संस्थानवन्तश्च परमाणवः। तस्मात् सावयवा इति ॥२३ ॥

**संयोगोपपत्तेश्च ॥४।२।२४ ॥**

नन्विदं सूत्रं संस्थानवत्त्वादित्यनेनैव चरितार्थम्, संयोगविशेषस्य संस्थानवत्त्वेनाभिधानात्[२]। न चरितार्थम् [३]अवयवसंयोगविशेषस्य संस्थानत्वेनाभिधानात्[४]। संयोगमात्रं च संयोगशब्देनाभिधीयत इति न दोषः। तत्र मूर्तिर्नाम अव्यापिनो द्रव्यस्य षड्विधं परिमाणम्, अणु महद् दीर्घं ह्रस्वं परमह्रस्वं परमाणु चेति। संस्थानं नाम प्रचयाख्यः संयोगः। संयोगोऽप्राप्तिपूर्विका प्राप्तिरिति ॥२४ ॥

**[५]अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥४।२।२५ ॥**

यत् तावत् मूर्तिमत्त्वात् सावयवा इति, तन्न, अनेकान्तात्। यः परमाणोरवयवः स मूर्तश्च निरवयवश्चेत्यनेकान्तः। अथ मूर्तिमत्त्वात् तस्याप्यवयवाः सन्ति? एवं

---

१. मूर्तिमत्त्वादिति-संस्था° C  २. संस्थानशब्देन C  ३, ४. अव.....धानात् om J  ५. हेत्वोरनवस्था° द्र: Alamkāra p. 685

सति त्रुटिरमेयः प्राप्नोति, गुरुत्वसंख्यापरिमाणैरित्युक्तम्[१]। अथ तावन्मूर्तिमद्विभज्यते यावदन्त इति? अन्तो निरवयव इति वाच्यम्। अथान्तो विभागः? स न युक्तः, विभागस्य विभज्यमानैर्विनानुपपत्तेरिति। एतावच्चैतत् स्यात् परमाण्वन्तो विभागः, प्रलयान्तो वा, अनन्तो वा। यदि परमाण्वन्तोऽनेकान्तः, व्याहतं च भवति, परमाणुर्मूर्तिमांश्च न च सावयव इति। कः पुनरत्र व्याघातः? निरवयवं च मूर्तिमन्तं च परमाणुं प्रतिपद्यसे, सावयव इति च ब्रवीषि। प्रतिपत्त्या व्याहन्यते। अनन्ते प्रलयान्ते च व्याघातः। त्रुटेरमेयत्वप्रसङ्गः विभागस्य चानाधारत्वप्रसङ्ग इति। सावयवः परमाणुरिति च प्रतिज्ञापदे व्याहते। कथमिति? सावयवशब्दस्यार्थः समानजातीयारब्धं समानजातीयाश्रितम् अवयवः तदाधार इति। सावयवः परमाणुरिति ब्रुवता कार्यविशेषः परमाणुरित्युक्तं भवति। कार्यविशेषश्च परमाणुश्चेति व्याहतम्। अथैकपरमाणुपूर्वकत्वं परमाणोः प्रतिपद्यसे? तथा च न परमाणुः सावयवः, नास्यावयवाः सन्ति, किं तु कृतक एक परमाणुपूर्वकत्वात्। एतच्च न, दृष्टान्ताभावात्। एकं कारणमिति न दृष्टान्तोऽस्ति। एकेन चारभ्यमाणस्य परमाणोर्न कारणसामग्र्यमपेक्ष्यमस्तीति न प्रागभावो युक्तः। यस्य च प्रागभावो नास्ति तस्योत्पादोऽपि न युक्तः। अथैकशब्दपूर्वकत्वे सति शब्दादीनां प्रागभावादि प्रतिपद्यते? तदप्यसिद्धम्, नैकं कारणमस्ति। आश्रयाद्यपेक्षः शब्दः शब्दान्तरं करोतीति।

प्रतिपद्यापि चैकपरमाणुपूर्वकत्वं परमाणोः कः सावयवार्थः? कतरस्तत्रावयवः कतरश्चावयवीति? अथ कारणमेवावयव इति? न कार्यपरमाणुकाले कारण-परमाणुरस्तीति सावयवार्थो वक्तव्यः। मूर्तिमत्त्वात् सावयवः परमाणुरिति ब्रुवाणो विकल्पतः पुनः पर्यनुयोज्यः केयं मूर्तिः, यया मूर्त्या मूर्तिमान् परमाणुरिति? सत्यां च मूर्तौ किमर्थान्तरमनर्थान्तरं वा परमाणोर्मूर्तिरिति? यदि रूपादिविशेषो

१. द्र: वा. ४.२.१७

मूर्तिर्न भवत्पक्षे तया मूर्त्या मूर्तिमान् कश्चन। न च रूपादिव्यतिरिक्तं प्रमाणेन परमाणुं प्रतिपद्यसे, सर्वापकर्षप्राप्ता रूपादय एव परमाणुः। न च रूपादिभी रूपादयो रूपादिमन्तः। न चानर्थान्तरभावे मतुब्व्युत्पादनं पश्यामः। ननु दृष्टोऽनर्थान्तरभावेऽपि मतुब्योगो यथा हस्तीमती सेनेति? न दृष्ट इति ब्रूमः। यथा च सेना, अर्थान्तरं तथोक्तम्।

असति चार्थान्तरभूते परमाणावसत्यां च मूर्तौ सावयवाः परमाणवो मूर्तिमत्त्वादिति वाक्यस्यार्थो रूपादयो रूपादिमन्तो रूपादिमत्त्वादिति। एतेन घटो मूर्तिमत्त्वात् सावयव इति प्रत्युक्तम्। न च रूपादिव्यत्तिरिक्तं घटं प्रतिपद्यसे, न मूर्तिमत्त्वम्, अथ च मूर्तिमत्त्वात् सावयवो घट इति ब्रवीषि। व्यतिरेकाभ्युपगमे व्याघातः, अनभ्युपगमे नार्थः सिध्यतीति। दृष्टान्तस्योभयधर्मसिद्धत्वात्[१] न घटे सावयवत्वं मूतिमत्त्वार्थः।

एतेन सावयवाः परमाणवः संयोगोपपत्तेरिति व्याख्यातम्। संयोगस्याभ्युपगमे[२] व्याघातः, अनभ्युपगमे परमाणुत्वादिति हेत्वर्थः। संस्थानविशेषवत्त्वं त्वसिद्धम्। य एवार्थः सावयवत्वात् इति स एवार्थः संस्थानविशेषवत्त्वादिति। अथ संस्थानमसर्वगतद्रव्यपरिमाणं प्रतिपद्येथाः, एवं च सति मूर्तिमत्त्वेन संस्थानवत्त्वं चरितार्थमिति पृथग् न वक्तव्यम्, मूर्तिमत्त्वात् संस्थानविशेषवत्त्वाच्चेति। उक्तं चात्र विभागेऽल्पतरत्वप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात् अण्ववयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति।

यत् पुनरेतत् संयोगोपपत्तेर्मध्ये सन्नणुः पूर्वापराभ्यां संबध्यमानः सावयवः। अयमेवार्थः कारिकयाभिधीयते—

षट्केन युगपद् योगात् परमाणोः षडंशता।
षण्णां समानदेशत्वात् पिण्डः स्यादणुमात्रकः॥

---

१. ०धर्मासि० J   २. व्यतिरेकाभ्युपगमे J

इति[१]। परमाणुर्युगपत् षड्भिः संबध्यमानः षडंशः प्राप्नोति, भिन्नदेशत्वात् संबन्धानाम्। अथ समानदेशाः सर्वे संयोगाः षण्णां परमाणूनाम्, पिण्डः परमाणुमात्रकः प्राप्नोति। यदि द्वे द्वे द्रव्ये अधिकृत्याभिधीयते, ततोऽभिन्नदेशाः। अथ परमाणूनां संबन्धिनं परमाणुमधिकृत्याभिधीयते, ततोऽनेकैः संयोगः समानदेश इति न किञ्चिद् बाध्यते।

यत् पुनरेतत् समानदेशाः परमाणव इति तन्न, अनभ्युपगमात्। देशा एव तावत् परमाणौ न सन्तीति कुतः समानदेशा भविष्यन्तीति? देशोऽवयवः स च परमाणोर्नास्ति। न च किञ्चिद् द्रव्यं समानदेशमस्तीत्यसिद्धो दृष्टान्तः। ननु च कार्यकारणे संयोगिसमानदेशे यथा [२]यत् पटेन संबध्यते, तत् तन्तुना तदंशुना इत्येवमादि[३]। एतदनभ्युपगमेन प्रत्युक्तम्। समानदेशास्तत्र संयोगा इति न कार्यकारणे, न च संयोगा अपि द्वे द्वे अधिकृत्येति। षण्णां समानदेशत्वादिति वाक्यं न द्रव्यसमानदेशतायां व्यवतिष्ठते, न संयोगसमानदेशतायामिति।

यत् पुनरेतत्

दिग्देशभेदो यस्यास्ति तस्यैकत्वं न युज्यते।

क एवमाह दिग्देशभेदोऽस्तीति? दिग्देशभेदाश्च दिशः संयोगाः परिकल्पिताः। तांश्च दिग्देशभेदान् कल्पयित्वा परमाणोर्दिग्देशभेदोऽभ्युपगम्यते। मुख्यतस्तु न दिग्देशभेदो नापि परमाणोर्भेदः। परमाणुर्दिशा संबध्यत इत्येतावन्मात्रं विद्यते। एतच्च न किञ्चिद् बाधते।

छायावृती तर्हि न प्राप्नुतः परमाणोरदेशत्वादिति। न देशवत्त्वात् छायावृती। किं तर्हि? मूर्तिमत्स्पर्शवत्त्वात् मूर्तिमत्स्पर्शविशिष्टं द्रव्यं द्रव्यान्तरमावृणोति। किमिदमावृणोतीति? स्वसंबन्धेनेतरस्य संबन्धं प्रतिषेधतीति। छाया तु तेजःपरमाणोरावरणात् मूर्तिमता परमाणुना तेजःपरमाणुराव्रियते। यत्र चास्यावरणं तत्र

१. विज्ञप्तिमात्रतासिद्धि-विंशतिकाकारिकायां वसुबन्धुकृतायाम्। २. घटः C
३. °शुना च तन्त्वाश्रयेणेत्यादि C

छायेति प्रविरलतेजःसंबन्धीनि द्रव्यगुणकर्माणि छायेत्यभिधीयन्ते। सर्वथा व्यावृत्ततेजःसंबन्धीनि तु तानि तमःसंज्ञकानीति। तदेवं छायावृत्योरन्यथासिद्ध-त्वादहेतुः।

एतेन क्रियावत्त्वात् स्पर्शवत्त्वाद् द्रव्यान्तरारम्भकत्वात् क्रियाकारणसंस्कारा-श्रयत्वात् परत्वापरत्ववत्त्वादित्येवमादि प्रत्युक्तम्। कथमिति? यथा मूर्तिमत्त्वात् सावयवा इत्येतस्मिन् वाक्ये प्रतिज्ञादोषा हेतुदोषाश्च, तथा सर्वेष्वेतेषु पक्षेषु परपक्षाभ्युपगतेषु [१]विकल्प्य विरुद्धासिद्धानैकान्तिकादिदोषभेदा वक्तव्या इति। शेषं **भाष्ये**।

ये तु क्रियावत्त्वादिभिः परमाणूनामनित्यत्वं साधयन्ति तैः क्रियावत्त्वं व्यञ्जकं वा कारकं वेत्यवश्यमभ्युपगन्तव्यम्। यदि क्रियावत्त्वमनित्यत्वस्य कारकम्, यदक्रियं तन्नित्यं प्राप्नोति। अथ जन्म क्रियेत्यभिधीयते? तदा अनित्याः परमाणवो जन्मवत्त्वादिति हेत्वर्थः। जन्मवत्त्वं चासिद्धं परमाणूनामिति। अथ क्रियावत्त्वं व्यञ्जकमुच्यते? व्यञ्जकत्वेऽप्यन्यतोऽनित्यत्वं परमाणूनां व्यपदेष्टव्यम्। न ह्ययं व्यञ्जकस्य धर्मो यद् व्यङ्ग्यं वस्तु कुर्यात्। अपि तु अन्यतो भूतं वस्तु व्यञ्जको हेतुर्व्यनक्तीति। न हि प्रदीपोऽसन्तमर्थं प्रकाशयतीति। परसिद्धोत्क्षेपणादि-क्रियाभ्युपगमे च विरुद्धः। अनभ्युपगमेऽसिद्धः। एतेन घटादिदृष्टान्तो व्या-ख्यातः। क्रियावत्त्वं च क्रियासमवायः। तदभ्युपगमे विरोधः। अनभ्युपगमेऽनित्यः परमाणुः [२]परमाणुत्वादिति हेत्वर्थः। मतुपश्चार्थान्तरे दृष्टत्वाद् विरुद्धः। अनर्थान्तरे दृष्टान्ताभावः। एवं शेषाणि वाक्यानि विकल्प्य यथासंभवं दोषा वक्तव्या इति। अथ परपक्षप्रसिद्धानेतानभ्युपैति? किं प्रमाणतोऽप्रमाणतो वा? तद् यदि प्रमाणतोऽ-भ्युपैति कथं परपक्षप्रसिद्धाः? अथ न प्रमाणतः? कथं स्वयमनुपलब्धो धर्मः परप्रतिपादनाय दीयत इति॥२५॥

॥निरवयवत्वप्रकरणम्॥

१. हेतुषु यथासम्भवं विरु॰ C २. परमाणोरिति J

# [ बाह्यार्थभङ्गनिराकरणप्रकरणम् ]

**बुद्ध्या विवेचनात् तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः[१] ॥४।२।२६॥**

यदिदं भवान् बुद्धीराश्रित्य बुद्धिविषयाः सन्तीति मन्यते मिथ्याबुद्धय एताः। यदि हि तत्त्वबुद्धयः स्युः बुद्ध्या विवेचने क्रियमाणे बुद्धिविषयाणां याथात्म्यमुपलभ्येत।

**बुद्ध्या...वत्**। य एते बुद्धिविषया गवादयो घटादयश्च, नैते तत्त्वतः सन्ति। कस्मात्? बुद्ध्या विविच्यमानानां भेदशोऽग्रहणात्। यथायं तन्तुरयं तन्तुरिति बुद्ध्या तन्तुषूद्वेष्ट्यमानेषु[२] न पटः कश्चिदस्ति यः पटबुद्धेर्विषयः स्यात्। एवमंशुषु बुद्ध्या विविच्यमानेषु। एवं तदवयवेषु तावद् यावत् परमाणुः। परमाणवोऽपि भागशो विभज्यमानास्तावद् यावत् प्रलय इति। तदेवं सर्वस्यासत्त्वाद् गवादिबुद्धयो घटादिबुद्धयश्च मिथ्याबुद्धय इति॥२६॥

**व्याहतत्वादहेतुः॥४।२।२७॥**

बुद्ध्या विवेचनात् तु भावानां सर्वभावानुपपत्तिरित्युक्तम्। कस्मात्? व्याघातात्। को व्याघातः? सहासंभवः। यदि बुद्ध्या विवेचनं भावानां न सर्वभावानुपपत्तिः। अथ सर्वभावानुपपत्तिः, न बुद्ध्या विवेचनं सर्वभावानामिति।

सर्वभावानुपपत्तिरिति च ब्रुवाणः प्रमाणं पर्यनुयोज्यः। यदि प्रमाणं ब्रवीति, व्याहतं भवति। अथ न ब्रवीति, अर्थोऽस्य न सिध्यति प्रमाणाभावात्। अथा-

१. तदनुपलब्धिः om J २. विविच्यमानेषु C

प्रामाणिकी सिद्धिः, सर्वभावानामुपपत्तिरित्यस्य कस्मान्न सिद्धिः[१]? यश्च सर्वभावानामभावो भावेष्वितरेतरापेक्षसिद्धेरित्येतस्मिन् वादे दोष उक्तः। स इहापि द्रष्टव्य इति ॥२७॥

**तदाश्रयत्वादपृथग्ग्रहणम् ॥४।२।२८॥**

यत् पुनरेतत्, यदि तन्तुव्यतिरिक्तं पटादिद्रव्यं स्यात् तन्तुषु बुद्धया विविच्यमानेषु पृथगुपलभ्येत इति। **तदा....णम्**। कारणद्रव्याश्रितं [२]कार्यद्रव्यं न पृथगुपलभ्यत इति। विपर्यये हि पृथग्ग्रहणात्। यत्र कार्यकारणभाव आश्रयाश्रयिभावश्च नास्ति, तत्र पृथग्ग्रहणमिति ॥२८॥

**प्रमाणतश्चार्थप्रतिपत्तेः ॥४।२।२९॥**

यदस्ति यथा च यन्नास्ति यथा च तत्सर्वं प्रमाणत उपलब्ध्या सिध्यतीति। शेषं **भाष्ये** ॥२९॥

**प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥४।२।३०॥**

प्रमा...भ्याम् ॥३०॥

**स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥४।२।३१॥**

---

१. सर्वभावोपपत्तिः कस्मान्न सिद्धयति? C २. कार्यं तस्मात् न C

**मायागन्धर्वनगरमृगतृष्णिकावद् वा ॥४।२।३२॥**

यथा स्वप्ने विषया न सन्ति, अथ च विषयाभिमानो भवति, एवं न प्रमाणानि न च प्रमेयाणि सन्ति। अथ च प्रमाणप्रमेयाभिमानः॥३१-३२॥

**हेत्वभावादसिद्धिः ॥४।२।३३॥**

**स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥४।२।३४॥**

मायागन्धर्वनगरमृगतृष्णिकावद्वेति न, प्रमाणाभावात्। स्वप्रान्तवदविद्यमानेषु विषयेषु अभिमान इत्यत्र न हेतुरुच्यत इति। स्वप्नान्ते चासन्तो विषया इति को हेतुरिति? ख्यातिरिति चेत्? अयं जाग्रदवस्थोपलब्धानां विषयाणां चित्तव्यतिरेकिणामसत्त्वे हेतुः ख्यातिः स्वप्नवदिति? न, दृष्टान्तस्य साध्यसमत्वात्। य एते स्वप्नावस्थायां विषयाः ख्यान्ति न ते चित्तव्यतिरिक्ता इत्यत्र को हेतुः? प्रतिबुद्धेनानुपलम्भात् न सन्तीति चेत्? अथ मन्यसे यस्मात् एते प्रतिबुद्धेन नोपलभ्यन्ते तस्मात् न सन्तीति? न, विशेषणोपादानात्। ये प्रतिबुद्धेनोपलभ्यन्ते ते सन्तीति प्राप्तम्। व्यर्थं वा विशेषणं प्रतिबुद्धेनानुपलम्भादिति। यदि चोपलभ्यमानं जाग्रदवस्थायां स्वप्नावस्थायां च विषयमसन्तं मन्यसे, अथ चित्तमस्तीति को हेतुरिति। विपर्यये च सामर्थ्याभावादहेतुः जाग्रतोऽनुपलब्धेरिति। यद्युपलब्धिः सत्त्वसाधनं ततोऽनुपलब्धिरसत्त्वं साधयति। विपर्यये हि हेतोः सामर्थ्यं दृष्टमिति। न चित्तव्यतिरेकिणो विषया ग्राह्यत्वात् वेदनावदिति। यथा वेदनादिग्राह्यं न च चित्तव्यतिरिक्तम्, तथा विषया अपि। वेदना सुखदुःखे, चित्तं विज्ञानमिति, सुखदुःखाभ्यां चान्यत् ज्ञानमित्यसिद्धो दृष्टान्तः। सुखदुःखे ग्राह्ये ग्रहणं विज्ञान-

मिति ग्राह्यग्रहणभावादन्यत्वम्। अथाभिन्नं विज्ञानं वेदनातस्तथापि ग्राह्यं च गृहीतिश्च एकमिति न दृष्टान्तोऽस्ति। न हि कर्म च क्रिया च एकं भवतीति। अथैकत्वं प्रमाणवृत्तमनपेक्ष्य प्रतिपद्येथाः? तथापि चत्वारः स्कन्धा इति शास्त्रव्याघातः। अथ चतुष्ट्वं न प्रतिपद्येत दृष्टं विज्ञानमात्रमेवाभ्युपेयात्[१]? सोऽपि दृष्टं विज्ञानभेदमनुयोक्तव्यः— बाह्यस्याध्यात्मिकस्य च विज्ञानभेदहेतोरभावात् कथं विज्ञानभेद इति? स्वप्नवद्विज्ञानभेदं यदि प्रतिपद्यसे, सोऽपि दृष्टानुमितानामर्थानां भावनावशेन विज्ञानभेदं प्रतिपादयितव्यः। अथ स्वप्नपक्षेऽपि भावनाभेदाद् विज्ञानभेदं प्रतिपद्येत सोऽपि भावनाभावकवर्गयोर्भेदेन प्रत्यवस्थेयः, नाभिन्नं भाव्यं भावकं चेति। ये चैते स्वप्नादिप्रत्ययाः पुरविमानोद्यानयानादिभेदानुविधायिनः ते मिथ्याप्रत्यया इति मिथ्याप्रत्ययानां च जाग्रदवस्थाप्रत्ययसामान्याद्भावः। ममापि सर्व एव मिथ्याप्रत्यया भवन्तीति ब्रुवाणः प्रधानमनुयोक्तव्यः। न निष्प्रधानं विपर्ययप्रत्ययं पश्याम इति। चित्तव्यतिरेकिणं च विषयमप्रतिपद्यमानः साधनदूषणयोः स्वभावः पर्यनुयोक्तव्यः। यदि बाह्यस्वभावकम्, व्याघातः। अथ चित्तस्वभावकम्? न चित्तेन परः प्रतिपाद्यत इति नार्थप्रतिपत्तिः[२]। न हीतरेण स्वप्नमनाख्यातमितरो विजानाति। अथ शब्दाकारं चित्तं प्रतिपद्यते? तेनापि शब्दाकारं चित्तमित्याकारार्थो वक्तव्यः। आकारो हि नाम प्रधानवस्तुसामान्यादतस्मिंस्तदिति प्रत्ययः। न च भवत्पक्षे शब्दो विद्यत इति शब्दाकारं चित्तमिति निरभिधेयं वाक्यम्। चित्तव्यतिरिक्तं च विषयमप्रतिपद्यमानो जाग्रत्स्वप्नावस्थयोर्भेदं पर्यनुयोज्यः। जाग्रदवस्थायां विषया न सन्ति स्वप्नावस्थायां चेति, इयं स्वप्नावस्था इयं जाग्रदवस्थेति कुत एतत्? धर्माधर्मव्यवस्थानं च न प्राप्नोति, यथा स्वप्नावस्थायामगम्यागमनादधर्मोत्पत्तिर्न भवत्येवं जाग्रदवस्थायामपि न स्यात्। अथ [३]मिद्धोपघातानुपघातौ भेदकौ प्रतिपद्येत? तदपि तादृगेव? मिद्धोपघातश्चेतसो वैकृत्यहेतुरित्येतत् कथमवगम्यते? अथ

१. °भ्युपगम्यते? C २. इत्यर्थोऽस्य न सिध्यति C ३. निद्रोप° C

विज्ञानस्य स्पष्टतां चास्पष्टतां च भेदं प्रतिपद्येत? विषयमन्तरेण ज्ञानस्य स्पष्टता चास्पष्टता च वक्तव्या।

असत्यर्थे विज्ञानभेदो दृष्ट इति चेत्? अथ मन्यसे यथा तुल्यकर्मविपाकोत्पन्नाः प्रेताः पूयपूर्णां नदीं पश्यन्ति, न तत्र नद्यस्ति, न पूयम्। न ह्येकं वस्त्वनेकाकारं भवितुमर्हतीति। दृष्टश्च विज्ञानभेदः। केचित् तामेव जलपूर्णां नदीं पश्यन्ति। केचित् रुधिरपूर्णामित्यतोऽवसीयते [१]आध्यात्मिकनिमित्तापेक्षमसति बाह्ये निमित्ते विज्ञानमेव तथोत्पद्यत इति? न, व्याघातात्। [२]असति बाह्ये विज्ञानमेव तथोत्पद्यत इति ब्रूवाणः प्रष्टव्यो जायते कथं तथेति। यदि रुधिराकारं विज्ञानं रुधिरम्, तर्हि वक्तव्यं किं रुधिरमिति। एवं जलाकारं नद्याकारं च वक्तव्यम्। पूयपूर्णां पश्यन्तीति च वाक्यस्य पदानि प्रत्येकं विचार्यमाणानि रूपादिस्कन्धापवादे[३] निर्विषयाणि भवन्ति। देशादिनियमश्च न प्राप्नोति। एकस्मिन् देशे नदीं पूयपूर्णां पश्यन्ति न देशान्तरेषु। असत्यर्थे नियमहेतुर्वक्तव्यः। यस्य पुनर्विद्यमानं केनचिदाकारेण व्यवस्थितं तस्य शेषो मिथ्याप्रत्यय इति युक्तम्। मिथ्याप्रत्ययाश्च भवन्तो न प्रधानं बाधन्त इति पूयादिप्रत्ययानां प्रधानं वक्तव्यमिति। यथा च पूयादिप्रत्ययानामेवं मायागन्धर्वनगरमृगतृष्णिकादि सलिलानामिति।

कर्मणो वासनान्यत्र फलमन्यत्र कल्पते

इति। अस्यार्थः। यत्रैव किल कर्म, तत्रैव किल फलेन भवितव्यम्, यस्य च चित्तव्यतिरेकिणो विषयास्तस्यान्यत्र कर्मान्यत्र फलमिति व्यधिकरणे कर्मफले भवत इति? तन्न, अनभ्युपगमात्। न मया कर्मफले व्यधिकरणे अभ्युपगम्येते। आत्मनि कर्म, तत्रैव फलमित्यदोषः। मदीयात् चित्तात् अर्थान्तरं विषयाः। सामान्यविशेषवत्त्वात् सन्तानान्तरचित्तवत्। प्रमाणगम्यत्वात् कार्यत्वानित्यत्वात् धर्मपूर्वकत्वाच्चेति ॥३३-३४॥

१. यथाध्यात्मे निमि॰ C    २. असति......मेव om J    ३. ॰न्धाभावे C

**मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ॥४।२।३५॥**

एवं च सति **मिथ्यो....बोधे**। स्थाणौ पुरुषाध्यवसायो[१] मिथ्योपलब्धिः। तत्त्वज्ञानेन च यो मिथ्याध्यवसायः[२] स निवर्तते[३], नार्थः स्थाणुपुरुषसामान्यलक्षणः[४]। न ह्यसौ स्थाणुर्न भवतीति यथा स्वप्नोपलब्धानां येऽध्यवसायाः[५] ते जाग्रदवस्थोपलब्ध्या निवर्त्यन्ते, नार्थो विषयसामान्यलक्षण इति। शेषं **भाष्ये** ॥३५॥

**बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥४।२।३६॥**

अर्थवदप्रतिषेधः। मिथ्याबुद्धेर्निमित्तमस्ति। किं पुनस्तत्? सामान्यदर्शनं विशेषादर्शनमविद्यमानविशेषाध्यारोप इति। मिथ्याबुद्धिं च प्रतिपद्यमानेन तस्या निमित्तं वक्तव्यम्। निमित्तं च प्रतिपद्यमानेनार्थोऽभ्युपेय इति॥३६॥

**तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥४।२।३७॥**

तत्त्वं स्थाणुरिति प्रधानं पुरुष इति तत्त्वप्रधानयोरलोपे मिथ्याबुद्धिर्भवतीति। शेषं **भाष्ये** ॥३७॥

॥बाह्यार्थभङ्गनिराकरणप्रकरणम्॥

---

१, २. व्यवसाय for अध्यवसाय J ३. °वर्त्यते J ४. °पुरुषलक्षणः C
५. ये व्यव° J

# [ तत्त्वज्ञानविवृद्धिप्रकरणम् ]

**समाधिविशेषाभ्यासात्॥४।२।३८॥**

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम्। अथ तत्त्वज्ञानं कथमुत्पद्यत इति? **समा...सात्। शेषं भाष्ये।** व्यापकत्वादन्तःकरणस्य प्रत्याहारो न युक्त इति चेत्? अथ मन्यसे व्यापकमन्तःकरणं तत्कथं प्रत्याह्रियत इति? न, उक्तोत्तरत्वात्, यथा न व्यापकमन्तःकरणं तथोक्तमधस्तात्। अणुत्वात् स्वाङ्गगतीक्षणानुपपत्तिरिति चेत्? अथ मन्यसे यस्याप्यन्तःकरणमणु तस्यापि स्वाङ्गगतीक्षणे न प्राप्नुतः[१], युगपद् हस्ते चक्षुषि चासन्निधानात्? न, शरीरात्ममनःसंबन्धयौगपद्यात् प्रयत्नदर्शनयोर्युगपदुत्पत्तेः। आत्मशरीरसंबन्धश्चात्ममनःसंबन्धश्च युगपद् भवत इति। तत्रात्ममनःशरीरसंबन्धात् स्वाङ्गगतिः, आत्ममनःसंबन्धाच्चक्षुषः प्रेरणम्। तत्र स्वाङ्गगतिः प्रयत्नाद् भवतीति, दर्शनं चक्षूरश्मेरर्थस्य च सन्निधानादिति। न चात्मनः प्रदेशाः सन्तीत्यचोद्यम्। प्रदेशवति चात्मनि अन्येनात्मप्रदेशेन मनः संबध्यते, अन्येन शरीरमिति स्वाङ्गगतीक्षणादिदोषः। यस्य पुनर्निष्प्रदेश एवात्मा तस्यैष दोषो न [२]भवतीति तत्र शरीरं संबन्धिनात्ममनःसंबद्धमिति॥३८॥

**नार्थविशेषप्राबल्यात्॥४।२।३९॥**

नोपपद्यते समाधिविशेषाभ्यासः, अबुभुत्समानस्यापि बुद्ध्युत्पत्तेः, यथा स्तनयित्नोः शब्दप्रभृतिषु इति॥३९॥

---

१. ॰ङ्गगतिवीक्षणं न प्राप्नोति C २. ॰तीति शरीरसंबन्धेनात्ममनःसंबन्ध इति C

**क्षुदादिभिः प्रवर्तनाच्च ॥४।२।४०॥**

क्षुत्पिपासाभ्यां चानिच्छतोऽपि बुद्धय उत्पद्यन्त इति न युक्तः समाधिविशेषः ॥४०॥

**पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ॥४।२।४१॥**

पूर्वकृतः पूर्वशरीराभ्यस्तः समाधिविशेषः तस्य फलं धर्मः। तत्कृतः पुनः समाधिविशेष इति। समाधिविशेषाच्च बाह्यविषयाभिभवः। लौकिकस्यापि तावत् समाधिविशेषावस्थितस्य बाह्यविषयोपनिपातेन बुद्धयो नोत्पद्यन्ते। किमङ्ग पुनर्योगिन इति ॥४१॥

**अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥४।२।४२॥**

अर....देशः ॥४२॥

**अपवर्गेऽप्येवं प्रसङ्गः ॥४।२।४३॥**

यदि बाह्यविषयोपनिपाताद् विज्ञानानि[१] प्रादुर्भवन्ति, **अप....सङ्गः**। मुक्तस्याप्यपवर्गे बाह्यविषयविशेषोपनिपातो[२] विद्यत इति बुद्ध्युत्पादप्रसङ्गः ॥४३॥

**न, निष्पन्नावश्यम्भावित्वात् ॥४।२।४४॥**

सति शरीरे बाह्यविषयो ज्ञानोत्पत्तिकारणम्, नान्यथेति सूत्रार्थः ॥४४॥

---

१. निपाते अर्थज्ञानानि C २. विषयोपनि॰ J

**तदभावश्चापवर्गे ॥४।२।४५॥**

तस्य शरीरादेरुपलब्धिकारणस्याभावोऽपवर्ग इति। तस्मात् [१]सर्वदुःखमोक्षोऽपवर्गः। यस्मात् सर्वं दुःखबीजं दुःखं चापवर्गे विच्छिद्यते, तस्मात् सर्वेण दुःखेन विमुक्तिरपवर्गः॥४५॥

**तदर्थं यमनियमाभ्यामात्मसंस्कारो [२]योगाच्चाध्यात्मविध्युपायैः ॥४।२।४६॥**

तस्यापवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः[३] ॥४६॥

**ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः॥४।२।४७॥**

ज्ञानग्रहणं शास्त्रग्रहणमिति, य एतमुपायं बुद्ध्यन्त इति तद्विद्याः। तद्विद्यैरित्यविभक्तार्थं वचनम्॥४७॥

**तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात्॥४।२।४८॥**

तं शिष्यगुरुसब्रह्मचारीत्येवमादि सूत्रम्। एतत् तु निगदेनैव नीतार्थम्॥४८॥

१. सुखदुःखमोक्षो C var २. योगाच्चा....पायैः om J ३. °भ्याससंस्कारः C var

**प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥४।२।४९॥**

तमभ्युपेयादिति वर्तते ॥४९॥

॥इति तत्त्वज्ञानविवृद्धिप्रकरणम्॥

## [ तत्त्वज्ञानपरिपालनप्रकरणम् ]

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥४।२।५०॥**

**तत्त्वा ..... त्** इति अनुत्पन्नतत्त्वज्ञानेनैतत् कर्तव्यमिति सूत्रार्थः ॥५०॥

**ताभ्यां विगृह्य कथनम् ॥४।२।५१॥**

विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य **ता.....नम्**। ताभ्यां जल्पवितण्डाभ्यामिति। विगृह्येति विजिगीषया न तत्त्वबुभुत्सयेति। विद्यापरिपालनार्थं चैतत्, न लाभपूजाख्यात्यर्थमिति ॥५१॥

॥तत्त्वज्ञानपरिपालनप्रकरणम्॥

प्रवृत्तिदोषसंसिद्धिः प्रेत्यभावः प्रपञ्चतः[१]।
फलं दुःखं विमुक्तिश्च तदुपायाश्च कीर्तिताः॥

॥इति औद्द्योतकरे न्यायवार्त्तिके चतुर्थाध्यायस्य द्वितीयाह्निकम्॥

॥चतुर्थाध्यायः समाप्तः॥

---

१. प्रपञ्चितः C

# पञ्चमाध्याये प्रथमाह्निकम्

## [ सत्प्रतिपक्षदेशनाभासप्रकरणम् ]

**साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्य-प्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोप-पत्त्युपलब्ध्यनुपलब्ध्यनित्यनित्यकार्यसमाः॥५।१।१॥**

जातेः संक्षेपेणोक्ताया विस्तरो वक्तव्य इतीदमारभ्यते साधर्म्यादिसूत्रम्। तत्र जातिर्नाम स्थापनाहेतौ प्रयुक्ते यः प्रतिरोधासमर्थो हेतुः।

जातेः प्रयोगप्रतिषेधादसदुत्तरत्वाच्चारम्भो न युक्तः। छलजातिनिग्रहस्थानानां स्ववाक्ये परिवर्जनमिति[१] प्रतिषिद्धा जातिः। न च जातिः सदुत्तरम्। अतश्च जातेः प्रयोगो न युक्तः। न, आरम्भप्रयोजनस्योक्तोत्तरत्वात्। उक्तं जातेरारम्भप्रयोजनं स्वयं च सुकरः प्रयोग इति। साधुसाधननिराकरणार्थं च प्रयोगः। यदा च वादी परस्य साधनं साध्वीति मन्यते लाभपूजाख्यातिकामश्च भवति तदा जातीः प्रयुङ्क्ते। कदाचिदयं जात्युत्तरेणाकुलीकृतो नोत्तरं प्रतिपद्येत। उत्तराप्रतिपत्त्या च निगृह्यते। अनभिधाने तु जातेरेकान्तपराजयः परस्येत्यैकान्तिकात् पराजयाद् वरमस्तु सन्देह इति युक्तो जातेः प्रयोगः।

असाधुसाधननिराकरणार्थमित्यन्ये। एके तु जातेः प्रयोगं मन्यन्ते असाधुसाधन-निराकरणार्थम्। एवं चाहुः असाधौ साधने प्रयुक्ते य आसां प्रयोगः, सोऽनभिज्ञतया साधनदोषस्य। तद्दोषप्रदर्शनार्थं वा प्रसङ्गव्याजेनेति। एतत्तु न युक्तं प्रयोजनाभावात्। यदि तावद् असाध्वेतत् साधनमिति प्रतिपद्यते य एवास्य दोषो बुद्धः स एव वक्तव्यो न जात्यभिधानेन प्रयोजनमस्ति। अथ न बुध्यते, किमिति जातिं प्रयुङ्क्ते?

---

१. द्रः भाष्यम् १.१.१

न ह्यनवबुध्यमानः शक्तः प्रयोक्तुम्। अथानवबुध्यमानोऽपि[१] प्रयुङ्क्ते यत्किञ्चिद् ब्रूयात् नियमो न स्यादिति।

एतेनानैकान्तिके पञ्चानां प्रयोगः प्रत्युक्तः। य आहुरनैकान्तिके साधने परेण प्रयुक्ते पञ्चजातयः प्रयोक्तव्या इति, तदप्यनेनैव प्रत्युक्तम्। कथमिति? बुद्ध्वा तदेव वक्तव्यम् अबुद्ध्वा अज्ञानमिति एतेन युक्तायुक्तपक्षयोः पूर्वापरभावः प्रत्युक्तः। अयुक्ते साधने अयुक्तमुत्तरं वक्तव्यम्, युक्ते युक्तमिति। युक्तं च नामोत्तरं यत् प्रतिज्ञादिदोषोद्भावनम्। यच्च प्रतिज्ञादिदोषोद्भावनं नासौ जातिः। उत्तरमेव तदिति। जातिलक्षणापरिज्ञानादयुक्तमेतदपीति।

समीकरणार्थं प्रयोगः समः। साधर्म्यमेव समं वैधर्म्यमेव सममिति समार्थः समीकरणार्थः प्रयोगो द्रष्टव्यः। समीक्रियतां वा परपक्षो मा वा कारि, अयं तु समीकरणार्थं प्रवर्तत इति, यथा लोके कुटुम्बार्थं घटत इति। विशेषहेत्वभावो वा समार्थः। न भवता विशेषहेतुः कश्चिदपदिश्यत इति। एनमर्थमुररीकृत्य जातिवादी प्रवर्तते। यथाभूतं भवतः साधनं तथाभूतं ममापीति। न च सर्वापदेशव्याप्तिरव्यापकत्वात्। न हि सर्वापदेशेषु सर्वा जातयः प्रवर्तन्ते। न हि वैधर्म्येण स्थापनायामुत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसमाः प्रयोक्तुं शक्यन्त इति।

न च वादिप्रतिवादिनोस्तुल्यता समार्थः, जातेरसदुत्तरत्वात्। नियमेन जातिवाद्यसद्वादी भवति। वादिनां तु सदसद्वादित्वे अनियम इति॥१॥

**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥५।१।२॥**

प्रतिषेधाविति। साधर्म्येणोपसंहारे तद्विपरीतसाधर्म्येण प्रत्यवस्थानं वैधर्म्येणोपसंहारे [२]तद्विपरीतेन साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः। यथा अनित्यः शब्द

१. अथाबुध्य॰ J  २. तत्साध॰ J

उत्पत्तिधर्मकत्वात्। उत्पत्तिधर्मकं कुम्भाद्यनित्यं दृष्टम्। यद्यनित्यघटसाधर्म्याद-नित्यः, नित्येनाप्याकाशेन साधर्म्यममूर्तत्वमस्तीति नित्यः प्राप्त इति। एतस्मिन्नेव हेतावाकाशवैधर्म्यादित्युक्ते यदि नित्याकाशवैधर्म्यादनित्यः, नित्यसाधर्म्यमप्या-काशेनामूर्तत्वमस्ति। अतो नित्यः प्राप्तः। अथ मन्यसे सत्यस्मिन् साधर्म्ये न नित्यः, न तर्हि वक्तव्यमनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याच्चानित्य इति। सेयं जातिर्विशेषहेत्वभावं दर्शयति। विशेषहेत्वभावाच्चानैकान्तिकदेशनाभासा इति। एवं वैधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं साधर्म्येण चोक्ते हेतौ तद्विपरीतवैधर्म्येण[1] प्रत्यवस्थानं वैधर्म्यसमः। यथा, तस्मिन्नेव हेतौ आकाश-वैधर्म्यादनित्य इत्युक्ते यदि नित्याकाशवैधर्म्यादनित्यः, अनित्येनापि घटेनास्य वैधर्म्यममूर्तत्वम्। अतो नित्यः प्राप्तः। तस्मिन्नेव हेतौ घटसाधर्म्यादिति कृते यद्यनित्यघटसाधर्म्यादनित्यः, वैधर्म्यमप्यस्यानेनास्त्यमूर्तत्वम्, अतो नित्यः प्राप्तः। अथ मन्यसे सत्येतस्मिन् वैधर्म्ये न नित्यः, न तर्ह्ययमेकान्तोऽनित्यघटसाध-र्म्यात् नित्याकाशवैधर्म्याच्चानित्य इति। सोऽयं विशेषहेत्वभाव इति ॥२॥

**गोत्वाद् गोसिद्धिवत् तत्सिद्धिः ॥५।१।३॥**

अनयोरुत्तरम्, **गोत्वाद् गो....द्धिः**। गवाश्वसाधर्म्ये सत्त्वादौ समाने, वैधर्म्ये चैकशफत्वादौ, साधर्म्यात्, सत्त्वाद् गौरश्वो न भवति। न च वैधर्म्यादेकशफत्वादेर-गौर्गौर्भवति। किं कारणम्? एकस्यानन्वयादेकस्य चाव्यावृत्तेः। यदन्वयव्यतिरेकि साधर्म्यं तस्माद् धर्मव्यवस्था। गोत्वं च तथा। तस्माद् गोत्वादेव गौः सिध्यति। तथेहाप्यमूर्तत्वमुभयव्यतिरेकि उभयान्वयि च। तस्मात् नित्यत्वमनित्यत्वं च न शक्यं प्रतिपत्तुम्। अपि त्वन्वयव्यतिरेकसम्पन्नादुत्पत्तिधर्मकत्वादनित्य इति। अतो यद् ब्रवीषि विशेषहेत्वभावादिति, अयं [2]विशेषहेतुरिति॥३॥

॥सत्प्रतिपक्षदेशनाभासप्रकरणम्॥

---

१. तद्वैध० J २. विशेष इति J

## [ साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादि-जातिषट्कप्रकरणम् ]

**साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्ष-वर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥५।१।४॥**

अविद्यमानधर्माध्यारोप उत्कर्षः। विद्यमानधर्मापचयोऽपकर्षः[१]। वर्ण्यः साध्यः। अवर्ण्यः असाध्यः। विकल्पो विशेषः। एतेषां धर्माणामुद्भावनार्थाः प्रयोगा उत्कर्षसमाद्या जातय इति। साध्यसाधनधर्मयोस्तुल्यतया प्रत्यवस्थानं साध्यसमेत्युच्यते। यथा तस्मिन्नेव हेतौ घटसाधर्म्यादिति कृते[२] यदि यथा घटस्तथा शब्दः, तदा घटो रूपादिमान् शब्दोऽप्येवं प्रसक्त इत्युत्कर्षसमः। शब्दो वा अरूप इति घटोऽप्येवं प्रसक्त इत्यपकर्षसमः। घटोऽनित्य इत्यवर्ण्यः शब्दोऽप्येवम्, शब्दो वा वर्ण्य इति घटोऽप्येवमिति वर्ण्यावर्ण्यसमौ। सत्येतस्मिन् उत्पत्तिधर्मकत्वे विभागजः शब्दो न विभागजो घटः विभागजाविभागजविकल्पवच्च नित्यानित्य-विकल्प इति विकल्पसमः। घटो वा अनित्य इत्यत्र को हेतुः? अयमपि साध्यवत् प्रज्ञापयितव्य इति साध्यवत् प्रत्यवस्थानात् साध्यसमः॥४॥

**किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः॥५।१।५॥**

न, हेत्वर्थापरिज्ञानादिति सूत्रार्थः। न ब्रूमो यावन्तो घटधर्मास्ते सर्व एव शब्दे संभवन्तीति, अपि तु यो यस्य साधको धर्म उपपद्यते स तत्साधनं तत्रोपसंह्रियते। तथा च शब्देन। उत्पत्तिधर्मकत्वं शब्दे धर्म उपसंह्रियते। एवं च यथोक्तमसंबद्धम्। यथा गौस्तथा गवय इत्युक्ते न गोधर्माः सर्व एव गवये, न गवयधर्माः सर्व एव

---

१. °धर्मापनयोऽप° J २. °दित्युक्ते C

गवि प्राप्नुवन्ति। अपि तु यदितरस्येतरेण संबध्यते तावन्मात्रमेवोपसंह्रियते। अशेषधर्मोपसंहारे तु यथा तथेत्येवं न स्यात्। स एवासाविति स्यात्। तथेहापीत्ययमदोषः। यत् पुनरेतद्, विभागजाविभागजविकल्पवन्नित्यानित्यविकल्प इति। यथोत्पत्तिधर्मकत्वमन्वयव्यतिरेकि, नैवं विभागजत्वम्। न हि किञ्चिद् विभागाज्जायमानं यथोक्तविशेषणं नित्यमनित्यं वा दृष्टमित्येतदप्यनुत्तरम्॥५॥

## साध्यातिदेशाच्च दृष्टान्तोपपत्तेः॥५।१।६॥

दृष्टान्तः साध्य इति ब्रुवता भवता न दृष्टान्तलक्षणं व्यज्ञायि। दृष्टान्तो हि नामाविहतयोर्दर्शनयोर्विषयः। तथा च साध्यत्वमनुपपन्नम्। अथ दर्शनं विहन्यते, नासौ दृष्टान्तो लक्षणाभावादिति।

यत्तु अत्रोक्तं जातीनां पौनरुक्त्यं प्रसज्यत इति, न पौनरुक्त्यम्, अर्थभेदात्। यथा चोत्कर्षसमादीनां भिन्नोऽर्थः, तथोक्तम्। प्रयोगभेददर्शनाच्च। प्रयोगश्च भिन्न उत्कर्षसमादीनामिति। आनन्त्यमिति चेत्? अथ मन्यसे यदि प्रयोगभेदाद् भेदो न चतुर्विंशतिर्जातय इति प्राप्तम्। न, अनवधारणात्। नैवेदमवधार्यते चतुर्विंशतिर्जातय इति, अपि तूदाहरणानां भेदः। कथमवगम्यते? तथा हि प्रकरणसमैका चतुर्धा भिन्नेति। अथ सामान्यतोऽभिन्ना जातय इत्यभेदं ब्रूयात्, तस्याप्यभ्युपगतं चतुर्दशत्वं निवर्तते। अथ कुतश्चिद् भेदाद् भेदः, अदेश्यं तर्हि एतत् उत्कर्षसमाद्या न विकल्पसमातो भिद्यन्त इति। यथा केनचिद् भेदेन चतुर्दशत्वम्, तथा केनचिद् भेदेन चतुर्विंशतित्वम्। अविशेषसमा चेयं जातिः। उत्कर्षसमादीनामेकत्वं किञ्चित्साधर्म्यादिति। अस्याश्च जातेरुक्तमुत्तरम्॥६॥

॥साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिजातिषट्कप्रकरणम्॥

## [ प्राप्त्यप्राप्तियुगनद्धवाहिविकल्पोपक्रमजातिद्वयप्रकरणम् ]

**प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वादप्राप्त्यासाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥५।१।७॥**

तस्मिन्नेव हेतौ घटादिसाधर्म्यादिति कृते यदि तावदयं हेतुः साध्यं संप्राप्नोति प्राप्त्या अविशिष्टः। कोऽविशेषार्थः? उभयोर्विद्यमानता। नाविद्यमानः संप्राप्यत इति हेतोः साधनार्थो हीयते। अथ न प्राप्यते, अप्राप्तेरहेतुभिरविशिष्टत्वादहेतुर्भवति। न ह्यग्निरप्राप्तो दहति। प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः। अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः। अनयोर्भेदेनोपदेशो विवक्षातः। भेदविवक्षायां प्राप्त्यप्राप्तिसमाविति। अभेदविवक्षायां त्वेकमेवोत्तरम्, यथा वृक्षा वनमिति।

जातिलक्षणाभावात् नैवेयं जातिरिति चेत्? अथ मन्यसे यज्जातेर्लक्षणं तदस्या नास्ति। साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमिति हि तत्। न च लक्षणेनासंबद्धा जातिरिति शक्यं वक्तुम्। न हि गोलक्षणहीनोऽश्वो गौरिति। न, सूत्रार्थापरिज्ञानात् साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिरित्यस्य सूत्रस्यार्थो भवता न व्यज्ञायीत्यनुत्तरमेतत्। एतेन त्रैकाल्यसमाद्याः प्रत्युक्ताः, सूत्रार्थापरिज्ञानात् ॥७॥

**घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ॥५।१।८॥**

[1]मृत्पिण्डप्राप्तानां दण्डादीनां नाविशेषो न च साध्यसाधनभावनिवृत्तिः। न हि मृत्पिण्डप्राप्तो दण्डः [2]साधनं न भवति। नापीतरत् साध्यत्वं जहाति। अथ मन्यसे घटस्तत्र साध्यः, तस्य चाविद्यमानस्य किं साधनेन इति? नाविद्यमानस्य साधनम्, अपि तु मृत्पिण्डो घटीक्रियत इति। किमिदं घटीक्रियत इति? मृदवयवाः

१. मृत्प्राप्तानां J २. साधनत्वं जहाति C

पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यन्ते, व्यूहान्तराच्च घटोत्पत्तिरिति। पीडने चाभिचारादप्राप्यापि च[1] साधकत्वं दृष्टम्। कोऽप्राप्त्यर्थः? परस्परोपश्लेषणमन्तरेण साधकत्वम्। अन्यथा तूद्देशेनासौ प्राप्त एव नियमात्। इयं च जातिः सर्वहेत्वपवादद्वारिका, यदि ज्ञापकहेतुरपदिश्यते तथापि, अथापि[2] कारकस्तथापीति। सा चेयं कार्यकारणत्वापवादद्वारेण प्रवर्तमाना व्याहता भवति। को व्याघातः? उत्तरस्य अनुत्थानम्। कथमिति? यदीदमुत्तरं प्राप्यार्थं कारणत्वापवादद्वारेण साधयेदप्राप्य वेति, तस्यापि प्रतिषेध्यं प्राप्य वा अप्राप्य वेति समानो दोषः॥८॥

॥इति प्राप्त्यप्राप्तियुगनद्धवाहिविकल्पोपक्रमजातिद्वयप्रकरणम्॥

## [ प्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम् ]

**दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ॥५।१।९॥**

यथा अस्मिन्नेव हेतौ घटादिसाधर्म्येण कृते इत्थं घट एव तावदनित्य इत्यत्र को हेतुरिति प्रसङ्गसमः। प्रतिदृष्टान्तसमस्य तु यदेव भाष्य उदाहरणं तदेव द्रष्टव्यमिति। वाय्वाकाशसंयोगस्याकारणत्वादयुक्तमिति चेत्? अथ मन्यसे न वाय्वाकाशसंयोगः क्रियाकारणं त्रिष्वपि कालेष्वसंभवात्? न वाय्वाकाशसंयोगेनाकाशे क्रिया कृता, न करोति, न करिष्यतीति। यच्च त्रिष्वपि कालेष्वकारणं तदकारकम्, यथा घटो घटान्तरस्य। न, तत्समानधर्मोपपत्तेः। न ब्रूमो वाय्वाकाशसंयोग [3]एवैकः क्रियाकारणमपि तु तथाभूतो धर्मोऽन्यत्र दृष्टो यथा वायुवनस्पतिसंयोग इति। यस्त्वसौ तथाभूतः क्रियां न करोति, तत्राकारणत्वाद्, अपि तु

१. अप्राप्यापि C  २. यदि C  ३. एव कारण° C

प्रतिबन्धात्। केनास्य प्रतिबन्धः? महत्परिमाणेन। यथा मन्दवातवेगेन नुन्नानां लोष्टादीनामिति।

यदि च क्रियां दृष्ट्वा क्रियाकरणमिति मन्यसे, सर्वं कारकं क्रियानुमेयं भवतः प्राप्तम्। ततश्चोपादानं कारणस्य न प्राप्नोति, किमिदं करिष्यत्याहो न करिष्यतीति। यस्य पुनः साधर्म्यादुपादानम्, तस्य युक्तम्। यदि च तत्सदृशं न कारणमिति मन्यसे? अनैकान्तिको हेतुर्न प्राप्नोति। न हि यच्छब्देऽमूर्तत्वं तदाकाशादाविति। अनुमानं चान्यत्र दृष्टस्यान्यत्र सादृश्यादेव प्रवर्तते। न हि ये धूमधर्मा एकस्मिन् धूमे, त एव धूमान्तरेष्वपीति ॥९॥

**प्रदीपोपादानप्रसङ्गविनिवृत्तिवत् तद्विनिवृत्तिः ॥५।१।१०॥**

इदं तावदयं प्रष्टव्यः। के प्रदीपमुपाददते, किमर्थं चेति? दिदृक्षमाणाः, दृश्यदर्शनार्थमिति। अथ प्रदीपोपलब्ध्यर्थं कस्मान्न प्रदीपोपादानं कुर्वते? अन्तरेण प्रदीपं दृश्यते प्रदीपान्तरमिति? अथ दृष्टान्तः किमर्थमुपादीयते? अज्ञातस्य प्रज्ञापनार्थम्, अथ दृष्टान्तेऽपि दृष्टान्तः किमर्थं देश्यते[१]? यदि प्रज्ञापनार्थं नाप्रज्ञातो दृष्टान्त इति। यत् पुनराकाशदृष्टान्तवदिति ॥१०॥

**प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥५।१।११॥**

अभ्युपगमात्। प्रतिदृष्टान्तस्य च हेतुभावं प्रतिपद्यमानेन दृष्टान्तस्यापि हेतुभावोऽभ्युपगन्तव्यः। हेतुभावश्च साधकत्वम्। स च कथमहेतुर्न स्यात्? यद्यप्रतिषिद्धः साधकः स्यात्, अप्रतिषिद्धश्चायम्। साधकप्रयोगानुपपत्तेश्च। यदि तावदेवं प्रयुङ्क्ते, यथायं त्वदीयो दृष्टान्तः, तथा मदीय इति। अभ्युपगमान्न

१. कस्माच्चोद्यते J

प्रतिदृष्टान्तः[१]। अथैवं प्रयुङ्क्ते यथा मदीयो न दृष्टान्तः तथा त्वदीय इति, तथापि व्याघातान्न [२]प्रतिदृष्टान्त इति॥११॥

॥प्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम्॥

## [ अनुत्पत्तिसमप्रकरणम् ]

**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः॥५।१।१२॥**

यथा अनित्यः शब्द उत्पत्तिधर्मकत्वात् घटवदिति कृते यदि ब्रूयात्[३], प्रागुत्पत्तेरुत्पत्तिधर्मकत्वं नास्ति। तदभावादनुत्पत्तिधर्मकः। अनुत्पत्तिधर्मकत्वाच्च नित्य इत्यनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः॥१२॥

**तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः॥५।१।१३॥**

यथैव प्रागुत्पत्तेरुत्पत्तिधर्मकत्वं नास्ति, तथा शब्दोऽपीति। उत्पन्नः सन् शब्द इति भवति। उत्पन्नः सन्नुत्पत्तिधर्मक इति भवति। तथा अनित्य इति। उत्पन्नस्य च [४]उपत्तिधर्मकत्वमस्तीति न कारणप्रतिषेधः। अनुत्पन्नस्य चातथाभावात् । न चायमनुत्पन्नः शब्द इति वा उत्पत्तिधर्मक इति वा नित्य इति वा अनित्य इति वा व्यपदेष्टुं शक्यत इति। ज्ञापकश्चायं हेतुर्न कारकः। ज्ञापके च कारकवत् प्रत्यवस्थानमसंबद्धम्। न कारकज्ञापकयोर्भेदोऽस्ति कारकत्वादिति चेत्? न, कारकज्ञापकयोः क्रियाज्ञप्तिहेतुत्वात्। योऽयं ज्ञापकः सोऽपि किञ्चित् कुर्वन् ज्ञापक इत्युच्यते कारकोऽपीति। नैष दोषः, कारकस्य क्रियाहेतुत्वात् , ज्ञप्तिहेतुत्वाच्च ज्ञापकस्येति। तत्रैको वस्तु निष्पादयति। एकस्तु विद्यमाने वस्तुनि ज्ञप्तिं करोति।

---

१. ॰न्न दृष्टान्तः J २. ॰न्न दृष्टान्तः J ३. कुम्भवदित्युक्ते ब्रूयात् J ४. उत्पन्ने C

प्राक् चोत्पत्तेरुत्पत्तिधर्मकत्वस्याभावादनुत्पत्तिधर्मकः शब्द इति ब्रुवाणः शब्दमभ्युपैति। नासतोऽनुत्पत्तिधर्मकत्वं धर्म इति। ततश्च विशेषणमनर्थकम्, प्रागुत्पत्तेरिति।

**अपरे** तु प्रागुत्पत्तेः कारणाभावादित्युक्ते अर्थापत्तिसमैवेयमिति, प्रागुत्पत्तेः प्रयत्ननान्तरीयकत्वस्याभावादर्थादप्रयत्ननान्तरीयकोऽप्रयत्ननान्तरीयकत्वाच्च नित्य इति कृते उत्तरं ब्रुवते, नायं नियमोऽप्रयत्ननान्तरीयकं नित्यमिति। त्रयी हि तस्य गतिः, किञ्चिन्नित्यमाकाशादि। किञ्चिदनित्यं विद्युदादि। किञ्चिदसदेवाकाशकुसुमादि।

एतत्तु न युक्तमुत्पश्यामः। कथमिति? यत्तदसद् अप्रयत्ननान्तरीयकमिति न युक्तं प्रयत्नानन्तरीयकत्वस्य जन्मविशेषणत्वात् यस्य न प्रयत्नानन्तरीयकं जन्म तदप्रयत्नानन्तरीयकम्। न चाभावो विद्यते, अतो न तस्य जन्म। यच्चासत् किं तस्य विशेष्यमस्ति? एतेन नित्यं प्रत्युक्तम्, न हि नित्यमप्रयत्नानन्तरीयकमिति शक्यं वक्तुम्। जातिलक्षणाभावान्नेयं जातिरिति चेत्, न। अनुत्पन्नैरहेतुभिः सामान्यात्। योऽनुत्पन्नः, स न हेतुः। तद् यथा अनुत्पन्नास्तन्तवो न पटस्य कारणम्॥१३॥

॥अनुत्पत्तिसमप्रकरणम्॥

## [ संशयसमप्रकरणम् ]

**सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः॥५।१।१४॥**

उदाहरणं **भाष्ये**। संशयसमा साधर्म्यसमातो न भिद्यत इति चेत्? अथ मन्यसे, यथा साधर्म्यसमोदाहरणं साधर्म्यात् प्रवर्तते तथा संशयसमापीति।

अतोऽभेदान्न जात्यन्तरमिति? न, उभयैकसाधर्म्यभेदात्। उभयसाधर्म्यात् संशयसमा, एकसाधर्म्यात् साधर्म्यसमेत्ययं विशेषः॥१४॥

**साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥५।१।१५॥**

साधर्म्यात् सामान्यदर्शनात् संशयः। वैधर्म्याद् विशेषदर्शनान्न संशयः। उभयथा वा संशये सामान्यविशेषदर्शने सति संशयेऽत्यन्तसंशयप्रसङ्गः। नित्यं सामान्यं संशयं करोतीत्येतन्न प्रतिपद्यामहे। सति सामान्ये विशेषदर्शनाद् व्यावृत्तेरिति॥१५॥

॥संशयसमप्रकरणम्॥

## [प्रकरणसमप्रकरणम्]

**उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः॥५।१।१६॥**

उदाहरणं **भाष्ये**। संशयसमासाधर्म्यसमाभ्यां प्रकरणसमा न भिद्यते। कथमिति? तत्रापि साधर्म्यमिहापि साधर्म्यमिति? न, उभयपक्षसाधर्म्यात् तदद्भेदोपपत्तेः[१]। उभावत्र वादिप्रतिवादिनौ पक्षपरिग्रहेण नित्यानित्यत्वे साधयतः। न त्वेवं साधर्म्यसंशयसमयोरिति॥१६॥

---

१. ॰र्म्याद् भेदसिद्धेः C

**प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥५।१।१७॥**

विरुद्धाव्यभिचार्येष उक्तोत्तर इति। प्रकरणोत्थानं च न प्रतिपक्षादिति ब्रूमः। किं तु तत्त्वस्यादर्शनात्। तदुक्तं प्रकरणसमे हेत्वाभास इति॥१७॥

॥प्रकरणसमप्रकरणम्॥

## [ अहेतुसमप्रकरणम् ]

**त्रैकाल्यासिद्धेर्हेतोरहेतुसमः॥५।१।१८॥**

अहेतुसामान्यात् प्रत्यवस्थानमहेतुसम इति॥१८॥

**न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः॥५।१।१९॥**

विरोधः सूत्रार्थः। नोत्पद्यमानमहेतुत उपपद्यते। नापि ज्ञाप्यमानमहेतुतो ज्ञाप्यत इति॥१९॥

**प्रतिषेधानुपपत्तेश्च प्रतिषेध्यव्याप्रतिषेधः॥५।१।२०॥**

विरोध उत्तरदोषः। त्रिष्वपि कालेषु यो न साधयति स न हेतुरिति प्रतिषेधेऽपि समानो दोषः। उक्तोत्तरत्वाच्च। **प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः**[१] इत्यत्रोक्तोत्तरमेतत्॥२०॥

॥अहेतुसमप्रकरणम्॥

---

१. न्या. सू. २.१.८

## [ अर्थापत्तिसमप्रकरणम् ]

**अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥५।१।२१॥**

उदाहरणं **भाष्ये** ॥२१॥

**अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वाद् अनैकान्तिकत्वाच्चार्थापत्तेः ॥५।१।२२॥**

अनुपपाद्य सामर्थ्यमर्थादापद्यत इति ब्रुवाणः पक्षं हापयति। किं कारणम्? सामर्थ्यस्यानुक्तत्वादिति। एवं च पक्षहानेरुपपत्तिः। अनैकान्तिकत्वाच्चार्थापत्तेः। पूर्वसूत्रव्याघातः। यदुक्तम्, नानैकान्तिकत्वम्, **अनर्थापत्तावर्थापत्त्यभिमानात्**[१] इति तद् व्याहन्यते। नास्ति व्याघातः। सन्निधिविशिष्टाया अनैकान्तिकत्वेनाभ्युपगमात्। येयं सूत्रेणोपात्ता, सानैकान्तिकी, नार्थापत्तिमात्रम्। यथानुमानं व्यभिचारि यत् तदप्रमाणं नेतरदिति। तथेहापि ॥२२॥

॥अर्थापत्तिसमप्रकरणम्॥

## [ अविशेषसमप्रकरणम् ]

**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ॥५।१।२३॥**

उदाहरणं **भाष्ये**। साधर्म्यसमातो न भिद्यतेऽविशेषसमः। कस्मात्? साधर्म्य-

१. न्या. सू. २.२.४

मात्रात् प्रवृत्तेरविशेषादिति चेत्? न, एकसमस्तभेदाद् भेदः। एकसाधर्म्यात् साधर्म्यसमा। समस्तसाधर्म्यादविशेषसमेति ॥२३॥

**क्वचित् तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः ॥५।१।२४॥**

क्वचित् साधर्म्यमुपलभ्यते[१] क्वचिन्नेति सूत्रार्थः। अभ्युपगमाच्च विरोधः। सर्वभावानामनित्यत्वं प्रसञ्जयता अभ्यनुज्ञातं शब्दस्याप्यनित्यत्वम्। व्यर्थं वा सर्वभावग्रहणमिति। उक्तं च विशेषोऽन्वयव्यतिरेकसम्पन्नो हेतुर्नोत्तर इति ॥२८॥

॥अविशेषसमप्रकरणम्॥

## [ उपपत्तिसमप्रकरणम् ]

**उभयकारणोपपत्तेरुपपत्तिसमः ॥५।१।२५॥**

उदाहरणं **भाष्ये**। उपपत्तिसमः प्रकरणसमात् न भिद्यत इति, तत्रापि नित्यानित्यकारणोपपत्तिरिहापि इति। न, नित्यानित्यकारणस्यैकत्रोपपत्तेः। नित्यकारणं चानित्यकारणं चैकत्रोपपद्यत इत्युपपत्तिसमार्थः। नित्यानित्यपक्षाभ्यां तु प्रत्यवस्थानं प्रकरणसम इति भेदः ॥२५॥

**उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥५।१।२६॥**

**उप...धः** इति। विरोधः सूत्रार्थः। नित्यत्वकारणमप्यस्योपपद्यत इति ब्रुवता

---

१. ॰मुपपद्यते J

अभ्यनुज्ञातम् अनित्यत्वकारणमिति। तथा च विरोधादुत्तरपक्षोत्थानमयुक्तम् ॥२६॥

॥उपपत्तिसमप्रकरणम्॥

## [ उपलब्धिसमप्रकरणम् ]

### निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥५।१।२७॥

उदाहरणं **भाष्ये**। सर्वसाध्यारोपेणाव्यापकत्वं साधनस्येत्युपलब्धिसमार्थः। सर्वमनित्यं सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वेनाध्यारोप्याव्यापकत्वं हेतोः। न ह्ययं हेतुः सर्वस्मिन्ननित्ये द्व्यणुकादौ विद्यत इति। श्रूयमाणप्रतिज्ञार्थाव्यापकत्वं वा हेतोः। यथा अनित्यः शब्दः शब्दान्तरोत्पादकत्वादिति। न शब्दान्तरोत्पादकत्वेन सर्वः शब्दो व्याप्यते। न ह्यन्तः शब्दः शब्दान्तरं करोति ॥२७॥

### कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥५।१।२८॥

अनित्यः शब्द इति ब्रुवता न साध्यान्तराणां कारणान्तरं प्रतिषिध्यते। न साध्यस्य कारणान्तरमिति।

**अपरे** तु परिहारं ब्रुवते, यदेव प्रयत्नानन्तरीयकं तदेव तस्मादनित्यमिति। एतत्तु न, अविवादात्। यः प्रयत्नानन्तरीयकत्वं प्रतिपद्यते न तं प्रति किञ्चित् साध्यते। यदा तु प्रयत्नानन्तरीयकत्वं वस्तुविशेषणं तदान्यो हेतुर्वक्तव्यः। जातिलक्षणाभावात् नेयं जातिः? न, अहेतुसामान्याज्जातिः ॥२८॥

॥उपलब्धिसमप्रकरणम्॥

## [ अनुपलब्धिसमप्रकरणम् ]

**तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥५।१।२९॥**

उदाहरणं **भाष्ये**। न, उक्तोत्तरत्वात्। द्वितीयाध्याय[1] उक्तोत्तरमेतत् ॥२९॥

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥५।१।३०॥**

अनु........हेतुः ॥३०॥

**ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥५।१।३१॥**

आवरणाद्यसंभवे सत्त्वाभ्युपगमे च सत्यनुपलब्धेरिति प्रयोगः। एवं च सति न हेत्वन्तरं नानैकान्तिकं विपक्षावृत्तित्वात्। आवरणाद्यसंभवे सत्त्वाभ्युपगमे[2] विपर्ययस्याव्यभिचारात् नार्थापत्तिसमः॥३१॥

॥अनुपलब्धिसमप्रकरणम्॥

## [ अनित्यसमप्रकरणम् ]

**साधर्म्यात् तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥५।१।३२॥**

सर्वमनित्यं प्राप्नोतीत्युदाहरणं **भाष्ये**। अविशेषसमातोऽनित्यसमा न भिद्यते,

---

१. द्रः न्या. सू. २.२.१९ २. सत्त्वोपलब्धौ J

तत्रापि सर्वाविशेष इहापीति? भिद्यते, तत्र सर्वाविशेष इह सर्वानित्यत्वमिति ॥३२॥

**साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात्**
**॥५।१।३३॥**

साध....र्म्यात् ॥३३॥

**दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ॥५।१।३४॥**

प्रतिषेध्येन पक्षेण प्रतिषेधस्य प्रतिज्ञादियोगः सामान्यम्। तद् यदि प्रतिषेध्यस्यानित्यस्यासिद्धिर्घटादिसाधर्म्यात्, ननु प्रतिषेधस्याप्यसिद्धिः, प्रतिषेध्येन प्रतिज्ञादियोगसामान्यादिति। न चेयं साधर्म्यमात्रात् स्थापना। अपि तु दृष्टान्ते विशिष्टमन्वयव्यतिरेकिणं धर्ममुपलभ्य तत्सामर्थ्यात्। न च प्रतिपक्षस्यैवंभूतो धर्म उपपद्यते। तस्मात् प्रतिषेधो नोपपद्यत इति। उक्तं चात्र

क्वचित् तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः[1]।

इति। यच्चाविशेषसम उत्तरं तदिहापि द्रष्टव्यम्। नासाधनादिति चेत्? अथ मन्यसे न मया सर्वस्यानित्यत्वप्रसङ्गेन सर्वस्यानित्यत्वं साध्यते। अपि त्वेवं ब्रूवाणस्य सर्वस्यानित्यत्वं प्राप्नोतीति प्रसङ्गः क्रियते? न, विशेषहेतूपपत्तेः। न मया साध्यसाधर्म्यमात्रेण स्थापनोच्यते[2] इत्यतो न सर्वानित्यत्वप्रसङ्गः। सर्वानित्यत्वसाधकप्रमाणासंभवाच्च[3]। न सर्वानित्यत्वप्रसाधकं प्रमाणं संभवतीति[4]। अथ सर्वमनित्यं

---

१. द्रः न्या.सू. ५.१.२४   २. साधनमु॰ C   ३. साधने प्रमाणाभावाच्च C   ४. ॰णमस्तीति C

सत्त्वादिति साधयेत्? तस्यापि नान्वयो न व्यतिरेकः ॥३४॥

॥अनित्यसमप्रकरणम्॥

## [ नित्यसमप्रकरणम् ]

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥५।१।३५॥**

अनित्यः शब्द इत्येतस्यां प्रतिज्ञायां प्रतिज्ञादिदोषोद्भावनद्वारिका जातिः। अनित्यः शब्द इत्यभिदधान एव भवान् शब्दस्य नित्यत्वं प्रतिजानीते। कथमिति? यत् तदनित्यत्वं तत् किं शब्दे नित्यमस्ति उत कदाचिद् भवतीति? यदि नित्यं धर्मस्य नित्यत्वाद् धर्मिणोऽपि नित्यत्वम्। अथानित्यमनित्यत्वस्याभावान्नित्यः शब्द इति ॥३५॥

**प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः ॥५।१।३६॥**

प्रतिषेध्ये नित्यम् अनित्यत्वमिति ब्रुवता अभ्यनुज्ञातमनित्यत्वं भवति। अभ्यनुज्ञानाच्चानर्थकः[१] प्रतिषेध इति। अथ नाभ्यनुज्ञायते? नित्यमनित्यभावान्नित्यः शब्द इति हेतुर्नोपपद्यते। हेत्वनुपपत्तेरनर्थकः प्रतिषेध इति। परिप्रश्नानुपपत्तिश्च। पृथग्धर्मत्वेनानित्यत्वस्यानभ्युपगमात्। अपि चानात्यन्तिकसत्तायोगोऽनित्यत्वमित्युक्ते न युक्तः प्रश्नः, किमयमत्यन्तं भवति उत नात्यन्तमिति। आत्यन्तिकानात्यन्तिकाभावयोगश्चैकस्य न युक्तः। अनित्यता नित्येति ब्रुवता एकस्यात्यन्तिकसत्तायोगोऽनात्यन्तिकसत्तायोगश्चाभ्यनुज्ञायते। स चायं विरोधान्न युक्त इति।

१. °च्चासमर्थः C

प्रतिषेध्यदोषोद्भावनाद् युक्त इति चेत्? अथ मन्यसे न मयैकस्य नित्यत्वमनित्यत्वं वाभ्युपगम्यते। अपि त्वनित्यः शब्द इति ब्रुवाणस्य भवतः स एव[१] दोष इति? न, विकल्पानुपपत्तेः, नायं पक्षदोषो न साधनदोषः। पक्षदोषस्तावदयं न भवति, पक्षस्य तादवस्थ्यात्। न साधनस्य, प्रतिज्ञादिदोषाणां चानुद्भावनात्। विरोधस्य चोक्तोत्तरत्वात् ॥३६॥

॥नित्यसमप्रकरणम्॥

## [ कार्यसमप्रकरणम् ]

**प्रयत्नकार्यानेकत्वात् कार्यसमः ॥५।१।३७॥**

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते जातिः कार्यसमा प्रयुज्यते। प्रयत्नकार्यमनेकधा दृष्टमिति। किञ्चित् प्रयत्नानन्तरं व्यज्यते, किञ्चित् प्रयत्नानन्तरमुत्पद्यते। प्रयत्नानन्तरमुपलब्धेर्हेतुत्वाध्यारोपेणानैकान्तिकत्वदेशनात् कार्यसमः। कार्यः शब्दः प्रयत्नानन्तरमुपलब्धेरिति [२]हेत्वर्थमनैकान्तिकं चोदयति। प्रयत्नानन्तरमुपलभमानं कार्यमकार्यं च दृष्टमिति। अथ प्रयत्नानन्तरं जन्म हेत्वर्थः, तथाप्यसिद्धदेशनेति ॥३७॥

**कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥५।१।३८॥**

यत् खलु प्रयत्नेन व्यज्यते तत्रानुपलब्धिकारणमुपपद्यते[३]। न तु शब्दस्यानुपलब्धिकारणं किञ्चिदस्ति। तस्मान्न व्यज्यत इति। संशयसमाऽतो न भिद्यत इति चेत्? उभयसाधर्म्यात् संशयसमः। अयं तु न तथा। तस्माद् भिद्यत इति। साधर्म्य-

१. भवत एव J  २. हेतुमनै॰ C  ३. ॰मुपलभ्यते J

समातो न भिद्यत इति चेत्? न, हेत्वध्यारोपणात्। साधर्म्यसमा न हेत्वध्यारोपेण प्रवर्तते। इयं त्वन्यथाभिहिते हेतौ अन्यथाकारं प्रवर्तते ॥३८॥

॥कार्यसमप्रकरणम्॥

## [ षट्पक्षीरूपकथाभासप्रकरणम् ]

**प्रतिषेधेऽपि समानो दोषः ॥५।१।३९॥**

एवं तावत् जातयो व्यवस्थिताः। अथेदानीं षट्पक्षीमुपन्यसिष्यन्निदमाह, **प्रति....दोषः**। प्रथमपक्षवादी जातिवादिनं प्रति प्रत्युत्तरं ब्रवीति। यद्यनैकान्तिकत्वादहेतुः, प्रतिषेधोऽप्यनैकान्तिकः स्यात्, कस्यचिदप्रतिषेधात् कस्यचित् प्रतिषेधादिति। विशेषहेत्वभावो वा अविशेषः। शेषं **भाष्ये** ॥३९॥

**सर्वत्रैवम्॥५।१।४०॥**

सर्वासु जातिष्वेषा प्रयुक्तिरिति सूत्रार्थः ॥४०॥

**प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद् दोषः ॥५।१।४१॥**

तृतीयः पक्षो विप्रतिषेधः। एतस्मिन् विप्रतिषेधे समानमनैकान्तिकत्वं दोष इति चतुर्थः पक्षः ॥४१॥

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥५।१।४२॥**

प्रतिषेधं द्वितीयपक्षं सदोषमभ्युपेत्य [१]तृतीयपक्षेऽपि प्रतिषेधतुल्यदोषतामासञ्जयन् विप्रतिषेधेऽपि समानो दोष इति ब्रुवन् मतमनुजानाति। सेयं मतानुज्ञा भवतीति पञ्चमः पक्षः ॥४२॥

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः ॥५।१।४३॥**

स्वपक्षसमुत्थानं दोषमभ्युपेत्य परपक्षेऽपि प्रसञ्जयन् स्वपक्षदोषमनुजानातीति तुल्या मतानुज्ञा। शेषं **भाष्ये**। अत्र खलु स्थापनाहेतुवादिनः प्रथमतृतीयपञ्चमपक्षाः। प्रतिषेधहेतुवादिनो द्वितीयचतुर्थषष्ठपक्षाः। तेषां साध्वसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरविशेषात् न पुनरुक्तदोषप्रसङ्गः। समानः तृतीयपञ्चमयोः पुनरुक्तदोषः। तत्र पञ्चमषष्ठयोः पुनरुक्तदोषः। तृतीयचतुर्थयोर्मतानुज्ञादोषः। प्रथमद्वितीययोर्विशेषहेत्वभाव इति षट्पक्ष्यामुभयोरसिद्धिः, अयुक्तवादित्वात्। यदा त्वनुपलब्धिकारणाभावे सति प्रयत्नानन्तरमुपलब्धेरिति विशेषहेतुरुच्यते, तदा न षट्पक्षी प्रवर्तते। एतास्तु जातयो न तत्त्वविवेकमुपकुर्वन्तीति भेदमात्रमासामुक्तम् ॥४३॥

॥षट्पक्षीरूपकथाभासप्रकरणम्॥

॥इति औद्द्योतकरे न्यायवार्त्तिके पञ्चमाध्यायस्य प्रथमाह्निकम्॥

---

१. तृतीयपक्षविप्र० J

# पञ्चमाध्याये द्वितीयाह्निकम्

## [ प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चक-विशेषलक्षणप्रकरणम् ]

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥५।२।१॥**

विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति संक्षेपेणोक्तम्। तदिदानीं विभजनीयम्। निग्रहस्थानानि च पराजयवस्तूनि अपराधाधिकरणानि। सामान्यतो द्वे निग्रहस्थाने। कर्तृकर्मकरणानां कस्य निग्रहः? तत्रैके वर्णयन्ति पक्षस्येति। एवं चाहुः, दूषणानि न्यूनतावयवोत्तरदोषाक्षेपभावोद्भावनानि। एभिर्ह्यसौ परपक्षो दूष्यत इति। एतत्तु न सम्यक्, कर्मणस्तादवस्थ्यात्। न हि दूषणाभिधानेन कर्मणोऽन्यथात्वं भवति। यथाभूत एवार्थो दूष्यमाणस्तथाभूत एवादूष्यमाणोऽपि[1]। न, करणस्य विषयान्तरेऽसामर्थ्यात्। साधनमपि प्रतिज्ञादिकं न दूष्यते विषयान्तरेऽसामर्थ्यात्। न हि किञ्चित् साधनं यद्विषयान्तरे समर्थं स्यात् सर्वं साधनं स्वविषये समर्थमिति। तस्मादसमर्थयोः कर्मकरणयोरुपादानात् कर्तुर्निग्रह इति। यत् कर्म क्रियार्थमुपादीयमानमभीष्टक्रियां न निर्वर्त्तयति, तदिदमसमर्थम्। यथा सिकता घटादिकरणे इति। यच्च करणं क्रियार्थमुपादीयमानं क्रियां न निर्वर्तयति, तदसमर्थम्। यथा तुर्यादि घटे। स्वविषये तूभयं समर्थम्। तदन्यविषयस्य च कर्मणोऽन्यविषयस्य

---

१. ०माण इति J

च करणस्यान्यथोपादानात्[1] कर्तुरज्ञानम्। अज्ञानं पुनरप्रतिपत्तिविप्रतिपत्तिर्वेति कर्ता निगृह्यते। न कर्मकरणे, पारतन्त्र्यात्। तस्मात् स्वतन्त्रस्य कर्तुर्निग्रह इति। विप्रतिपत्त्यप्रतिपत्त्योश्च पुरुषधर्मत्वात् पुरुषस्येति। विप्रतिपत्त्यप्रतिपत्ती च पुरुषस्य वचनद्वारेण गम्येते। तस्मात् प्रतिज्ञादिदोषा इति भक्तिः। कानिचिन्निग्रहस्थानान्यज्ञानादीनि पुरुषधर्मा एव।

द्वैविध्यानुपपत्तिरनेकाभिधानादिति चेत्? अनेकं निग्रहस्थानं प्रतिज्ञाहान्यादिसूत्रे पठ्यते। तस्माद् द्वे निग्रहस्थाने इत्ययुक्तम्। न, सामान्यभेदविस्तरस्य विवक्षातः प्रवृत्तेः। सामान्यमधिकृत्य द्वे निग्रहस्थाने, भेदविवक्षायां तु द्वाविंशतिधा भेदः। उदाहरणमात्रत्वाच्च भेदस्यानन्त्यमिति।

प्रायेण प्रतिज्ञाद्यवयवाश्रयाणीति **भाष्यम्**। वक्तृविषयकत्वात् प्रतिज्ञाद्यवयवाश्रयत्वमनुपपन्नमिति चेत्? अथ मन्यसे विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थाने इत्यभिधाने प्रतिज्ञाद्याश्रयत्वे[2] कः प्रसङ्ग इति? न, क्रियावचनदोषद्वारेण कर्तृवक्तृणामज्ञत्वोपपत्तेः। क्रियाद्वारेण कर्ता दूष्यते वचनद्वारेण वक्तेति न प्रतिज्ञाद्याश्रयत्वमनुपपन्नम्। न चाधाराधेयभाव आश्रयाश्रयिभावो विवक्षितः[3]। किं तु प्रतिज्ञादिमुखेनोद्भावनमिति।

तत्त्ववादिनमतत्त्ववादिनं चाभिसंप्लवन्त इति **भाष्यम्**। तत्त्ववादिनो निग्रहस्थानानुपपत्तिः प्रतिपादकत्वात्। तत्त्वं ब्रवीतीति प्रतिपादयतीति, प्रतिपादयंश्च निगृह्यत इति न युक्तम्? न, परापदिष्टदूषणदोषानवबोधद्वारेण तदुपपत्तेः। तत्त्ववादी प्रथमपक्षे द्वितीयपक्षवादिना यो दूषणाभास उक्तस्तस्य तत्त्वानवबोधान्निगृह्यते तत्त्वमभिदधानोऽपीति। तत्र वस्तु निर्णीतम्। निर्णीतेऽपि च वस्तुनि दूषणाभासस्याप्रतिपत्त्या निगृह्यत इति। तत्रोदाहरणभेदप्रदर्शनार्थं प्रतिज्ञाहान्यादिसूत्रम्[4] ॥१॥

१. °थोपपादनात् C var २. °स्थानमित्यभिधाने प्रतिज्ञाद्यवयवाश्रितत्वे C ३. °श्रित-भावोऽभिप्रेतः J ४. C adds the whole sutra here.

## प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥५।२।२॥

लक्षणं तु **प्रति....हानिः**। प्रतिदृष्टान्तस्य यो धर्मस्तं यदा [१]स्वपक्षे दृष्टान्तेऽभ्यनुजानाति तदा निगृहीतो वेदितव्यः। यथा अनित्यः शब्द ऐन्द्रियकत्वात् घटवदिति कृते[२] सामान्यमैन्द्रियकं दृष्टं नित्यम्। कस्मान्न तथा शब्द इति द्वितीयः। यदि सामान्यमैन्द्रियकं नित्यं दृष्टमिति, घटोऽप्येवमस्त्विति तृतीयः। अनेन [३]किल हेतुदोषेण प्रतिदृष्टान्तधर्म स्वदृष्टान्तेऽभ्यनुज्ञातो भवति। अभ्यनुज्ञानाच्च दृष्टान्तं जहाति। दृष्टान्तं च जहन्निगमनान्तमेव पक्षं जहातीति प्रतिज्ञाहानिरित्युच्यते।

एतत् तु न बुद्ध्यामहे कथमत्र प्रतिज्ञा हीयत इति। हेतोरनैकान्तिकत्वं सामान्यदृष्टान्तेन परेण चोद्यते। एतस्यानैकान्तिकदोषोद्धारमनुक्त्वा स्वदृष्टान्ते नित्यतां प्रतिपद्यते। नित्यताप्रतिपत्तेश्चासिद्धता दृष्टान्तदोषो भवति। सोऽयं दृष्टान्तदोषेण [४]हेतुदोषेण वा निग्रहो न प्रतिज्ञाहानिः। दृष्टान्तं च जहत् प्रतिज्ञामपि जहातीत्युपचारेण निग्रहस्थानम्। न च प्रधानासंभवे उपचारो लभ्यत इति प्रतिज्ञाहानेर्मुख्यो विषयो वक्तव्यः।

कथं तर्हीदं सूत्रं

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः।**

इति? दृष्टश्चासावन्ते च व्यवस्थित इति दृष्टान्तः। स्वश्चासौ दृष्टान्तश्चेति स्वदृष्टान्तः। स्वदृष्टान्तशब्देन पक्ष एवाभिधीयते। प्रतिदृष्टान्तशब्देन च प्रतिपक्षः। प्रतिपक्षश्चासौ दृष्टान्तश्चेति। एतदुक्तं भवति [५]प्रतिपक्षस्य यो धर्मस्तं स्वपक्ष [६]अभ्यनुजानातीति। यथा अनित्यः शब्द ऐन्द्रियकत्वादिति। द्वितीयपक्षवादिनि सामान्येन प्रत्यवस्थिते इदमाह— यदि सामान्यमैन्द्रियकं नित्यं दृष्टमिति शब्दोऽप्येवं भवत्विति। एषा प्रतिज्ञाहानिः। प्रागनेन प्रतिज्ञातम् अनित्यः शब्द इति। सामान्येन

---

१. स्वदृष्टान्ते J २. °दित्येकः। C ३. किल प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानाति C
४. साधनदोषेण C ५. परपक्षस्य C ६. एवानु° C

अनैकान्तिकत्वेन प्रत्यवस्थित इदमाह नित्य इति, प्राक् प्रमाणावधारितार्थपरित्यागाद्विप्रतिपत्तितो निग्रहस्थानमिति। प्रसङ्गविधानादिति चेत्? अथ मन्यसे नासौ पश्चादपि शब्दस्य नित्यतां प्रतिपद्यते किं तु प्रसङ्गं करोति। यदि सामान्यमैन्द्रियकं नित्यं दृष्टं शब्दोऽप्येवं भवत्विति प्रसङ्गं विधत्ते। तच्च न, अत एव तत्प्राप्तेः। यत एवासौ हेतुदोषोद्धारे कर्तव्ये प्रसञ्जयत्यत एव निगृह्यत इति।

हेतुदोषेण चरितार्थत्वान्न प्रतिज्ञाहानिर्निग्रहस्थानमित्यन्ये। अन्ये तु वर्णयन्ति नैवेदं निग्रहस्थानं युक्तं हेतुदोषेण चरितार्थत्वात्। यस्मादैन्द्रियकत्वादित्यस्य हेतोरनैकान्तिकत्वं दोषः। तेनैवायं निगृहीत इति। न, अनैकान्तिकत्वदोषपरिहारद्वारेण विप्रतिपत्तितस्तदुपपत्तेः। तस्यैवानैकान्तिकत्वस्य परिहारं कुर्वाणोऽयं निगृह्यत इत्यतोऽनैकान्तिकत्वं न निग्रहस्थानम् ॥२॥

**प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥५।२।३॥**

उदाहरणं पूर्ववत्। सर्वगतासर्वगतविकल्पेन प्रतिज्ञान्तरं करोति। असर्वगतोऽनित्यः शब्द इति।

तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा सामान्येनैन्द्रियकेण प्रतिहता। असर्वगतोऽनित्यः शब्द इति प्रतिज्ञान्तरम्। तत् कथं निग्रहस्थानम्, साधनसामर्थ्यापरिज्ञानात्। अपरिज्ञाय साधनसामर्थ्यम्, [१]अनित्यः शब्द इति प्रतिज्ञा। न च प्रतिज्ञा प्रतिज्ञान्तरं[२] साधयति, साधनसामर्थ्यापरिज्ञानात्। तदेतत् प्रतिज्ञान्तरम्। तदिदमप्रतिपत्तितो विप्रतिपत्तितो वा निग्रहस्थानमिति ॥३॥

१. कुर्वतोऽसर्वगतोऽनित्यः C २. प्रतिज्ञां J

**प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥५।२।४॥**

यत्र प्रतिज्ञा हेतुना विरुध्यते हेतुश्च प्रतिज्ञया, स प्रतिज्ञाविरोधो नाम निग्रहस्थानम्। यथा गुणव्यतिरिक्तं द्रव्यं भेदेनाग्रहणादिति। एतेनैव प्रतिज्ञाविरोधोऽप्युक्तः। यत्र प्रतिज्ञा स्ववचनेन विरुध्यते। यथा श्रमणा गर्भिणीति। हेतुविरोधोऽपि, यत्र प्रतिज्ञा हेतुना विरुध्यते। यथा सर्वं पृथक् समूहे भावशब्दप्रयोगादिति। एतेन प्रतिज्ञया दृष्टान्तविरोधोऽपि वक्तव्यः। हेतोश्च दृष्टान्तादिभिर्विरोधः। प्रमाणविरोधश्च प्रतिज्ञाहेत्वोर्वक्तव्यः। परपक्षसिद्धेन गोत्वादिनानैकान्तिकत्वदेशनाद् विरुद्धः। यः परपक्षसिद्धेन गोत्वादिना व्यभिचारयति, तद् विरुद्धमुत्तरं वेदितव्यम्। स्वपक्षानपेक्षं च यथा यं स्वपक्षानपेक्षं हेतुं प्रयुङ्क्ते अनित्यः शब्द ऐन्द्रियकत्वादिति, स स्वसिद्धस्य गोत्वादेर्नित्यत्वविरोधाद् विरुद्धः। उभयपक्षसंप्रतिपन्नस्त्वनैकान्तिकः। यदुभयपक्षसंप्रतिपन्नं वस्तु, तथात्वेन तेनानैकान्तिकदेशनेति। दृष्टान्ताभासास्तु कस्मात् निग्रहस्थानेषु नोक्ताः? हेत्वाभासपूर्वकत्वाद् दृष्टान्ताभासानां तदभिधानेनैवोक्ता वेदितव्या इति ॥४॥

**पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः ॥५।२।५॥**

यः प्रतिज्ञातमर्थं प्रतिषेधे कृते परित्यजति स प्रतिज्ञासन्न्यासो वेदितव्यः। उदाहरणं पूर्ववत्। सामान्येनानैकान्तिकत्वे [१]हेतौ कृते ब्रूयात् कश्चैवमाहानित्यः शब्द इति? एतत्साधनस्य सामर्थ्यापरिज्ञानात्[२] विप्रतिपत्तितो निग्रहस्थानमिति ॥५॥

१. हेतोः C २. परिच्छेदात् C

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्**
**॥५।२।६॥**

उदाहरणं **भाष्ये**। साधनान्तरोपादाने पूर्वस्यासामर्थ्यख्यापनात् निग्रहस्थानम्। सामर्थ्ये वा पूर्वस्य हेत्वन्तरं व्यर्थमिति॥६॥

॥प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम्॥

## [ प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्य-निग्रहस्थानचतुष्कप्रकरणम् ]

**प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम्॥५।२।७॥**

उदाहरणं **भाष्ये**। अभ्युपगतार्थासङ्गतत्वान्निग्रहस्थानम्। यदभ्युपगतं तत्संबद्धमन्यदसंबद्धमुच्यत इति॥७॥

**वर्णक्रमनिर्देशवन्निरर्थकम्॥५।२।८॥**

उदाहरणं **भाष्ये**। साधनानुपादानादज्ञानम्। एवं ब्रुवन्न साधनं साध्यं जानीत इति न साध्यं न साधनं चोपादत्त इति निगृह्यते॥८॥

**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्**
**॥५।२।९॥**

उदाहरणं **भाष्ये**। असामर्थ्यख्यापनान्निग्रहस्थानम्। असामर्थ्यं चाज्ञानमिति॥९॥

## पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम्॥५।२।१०॥

यथा दशदाडिमादिवाक्यम्। निरर्थकापार्थकयोरभेद इति चेत्? अथ मन्यसे निरर्थकादपार्थकं न भिद्यते। तत्राप्यर्थो न गम्यत इहापीति? भिद्यत इति ब्रूमः। कथम्? तत्र हि वर्णमात्रमिह तु पदान्यसंबद्धानि। तत् कथं निग्रहस्थानम्? वाक्याद् ऋते न विशेषावगतिरिति साधनसामर्थ्यापरिज्ञानात् निग्रहस्थानम्॥१०॥

॥इति प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणम्॥

# [ स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणम् ]

## अवयवविपर्यासवचनमप्राप्तकालम्॥५।२।११॥

अवयवानां विपर्ययेणाभिधानं निग्रहस्थानम्। नैवमपि सिद्धेरित्येके। एके तु ब्रुवते नैतन्निग्रहस्थानमेवमपि सिद्धेरिति। समयानभ्युपगमाच्च। न च वयमेवं समयं प्रतीच्छाम इति। प्रयोगाच्च। प्रयुक्तश्चावयवव्यत्ययः सर्वशास्त्रेष्विति कस्यायं समय इति। यत्तावन्नैवमपि सिद्धेरिति, प्रयोगापेतशब्दवदेतत् स्यात्। यथा गौरित्यस्य पदस्यार्थे गावीति[१] प्रयुज्यमानं पदं ककुदादिमन्तमर्थं प्रतिपादयतीति। न च शब्दान्वाख्यानं व्यर्थम्। अनेन शब्देन गोशब्दमेवासौ प्रतिपद्यते, गोशब्दात् ककुदादिमन्तमर्थम्। तथा प्रतिज्ञाद्यवयवविपर्यासेनानुपूर्वी प्रतिपद्यते, आनुपूर्व्या चार्थमिति। एतत् कथमिति? पूर्वं तावत् कर्मोपादीयते ततः करणम्। मृत्पिण्डाद्युदाहरणम् अनेकधा लोक इति। यत्पुनरेतत् समयानभ्युपगमादिति? नायं समयोऽपि त्वर्थस्यानुपूर्वी। सोऽयमर्थस्यानुपूर्वीमन्वाचक्षाणो नाभ्याख्येय इति। यत् पुनरेतत् प्रयोगादिति? न, निग्रहस्थानविषयापरिज्ञानात्। शास्त्रे वाक्या-

१ गाणीति J

न्यर्थसंग्रहार्थमुपादीयन्ते। संगृहीतं त्वर्थं वाक्येन प्रतिपादयिता प्रयोगकाले प्रतिज्ञादिकयानुपूर्व्या प्रतिपादयतीति॥११॥

## हीनमन्यतमेनाप्यवयवेन न्यूनम्॥५।२।१२॥

यस्मिन् वाक्ये प्रतिज्ञादीनामन्यतमोऽवयवो न भवति तद्वाक्यं न्यूनं वेदितव्यम्। तत् कथं निग्रहस्थानम्? न साधनाभावे साध्यसिद्धिरिति।

**एके** तु प्रतिज्ञान्यूनं वाक्यं नास्तीत्याचक्षते। एतत्तु न युक्तम्। प्रतिज्ञामन्तरेण प्रयोगो विकल्पतः पर्यनुयोज्यः। यः प्रतिज्ञान्यूनं वाक्यं ब्रूते किमयं निगृह्यत अथ नेति? यदि निगृह्यते? कतमत् निग्रहस्थानमिति? न हि हेत्वाभासादयोऽत्र सन्तीति। न च हेत्वादिदोषाः सन्तीति, निग्रहं चाभ्युपैति। तस्मात् प्रतिज्ञान्यूनमेवेति। अथ न निग्रहः? न्यूनं वाक्यमर्थं साधयतीति साधनाभावे सिद्धिरभ्युपगता भवति। यत्तु ब्रवीषि सिद्धान्तपरिग्रह एव प्रतिज्ञा, एतदपि न बुद्ध्यामहे। कर्मण उपादानं प्रतिज्ञा। सामान्यविशेषवतोऽवधारितस्य वस्तुनः परिग्रहः सिद्धान्त इति॥१२॥

## हेतूदाहरणाधिकमधिकम्॥५।२।१३॥

यस्मिन् वाक्ये हेतू द्वौ दृष्टान्तौ द्वौ तद्वाक्यमधिकं निग्रहस्थानमाधिक्यात्। तच्च न दार्ढ्यादि**त्येके**। एके तु ब्रुवते नेदं निग्रहस्थानं दार्ढ्यात् दार्ढ्यं हि ज्ञाप्यस्य भूयोभिर्ज्ञापकैर्दृष्टं यथा धूमालोकाभ्यामग्नेरिति। न, दार्ढ्यानभिधानात्। भूयोभिर्ज्ञापकैर्दार्ढ्यं भवतीति न दार्ढ्यार्थोऽभिधीयते, किं ब्रवीषि दार्ढ्यादिति? सुतरां प्रतिपत्तिर्दार्ढ्यमिति? तदपि तादृगेव, किमुक्तं भवति सुतरामिति? अथ ब्रवीषि द्वे अपि ज्ञापके? सत्यं द्वे अपि ज्ञापके। एकेनैवाभिधानात् व्यर्थमभिधानं

द्वितीयस्य[१]। प्रकाशिते प्रदीपान्तरोपादानवदिति। अनवस्था वा, प्रकाशितेऽपि साधनान्तरोपादानादिति ॥१३॥

॥स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणम्॥

## [ पुनरुक्तनिग्रहस्थानप्रकरणम् ]

**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्॥५।२।१४॥**

शब्दपुनरुक्तम् अनित्यः शब्दोऽनित्यः शब्द इति। अर्थपुनरुक्तमनित्यः शब्दो निरोधधर्मको ध्वान इति। अनुवादे त्वपुनरुक्तमर्थविशेषोपपत्तेः।

नाबाधनादित्येके। एके तु ब्रुवते, नेदं निग्रहस्थानमबाधनात्। न हि परीक्षाविधेः पुनर्ब्रुवता किञ्चिद् बाध्यते। परप्रतिपादनार्थं च वाक्यप्रयोगः। पुनरभिधानेन सुतरामर्थं प्रतिपद्यत इति न निग्रहस्थानं प्रतिपादकत्वात्। सत्यं प्रतिपादयति। प्रतिपादितार्थप्रतिपादकत्वाद् वैयर्थ्यं स्यात्। वैयर्थ्यान्निग्रहस्थानं साधनविषयापरिज्ञानात्। न चायं शिष्यो न गुरुः तस्मात् नायं पुनः प्रतिपाद्यत इति ॥१४॥

**अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ॥५।२।१५॥**

**अर्था ....... पुनर्वचनं** पुनरुक्तम्। पूर्ववन्निग्रहस्थानमिति ॥१५॥

॥पुनरुक्तनिग्रहस्थानप्रकरणम्॥

---

१. °स्यापि J

## [ उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् ]

**विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्॥५।२।१६॥**

शेषं **भाष्ये**। न, उत्तरेणावस्थानात् नेदं निग्रहस्थानमिति **केचित्**। उत्तरेणावस्थानात्। उत्तरेण गुणदोषवता मूढत्वामूढत्वं गम्यत इति किं पुनरुच्चरितेनास्ति? अस्ति हि उत्तरे कश्चित् समर्थो दृश्यते न प्रत्युच्चारणे। नासौ तावता निग्रहस्थानमर्हति। यश्चारभ्य स्वपक्षं न निर्वाहयेत् तस्य स्यात् खलीकारमात्रमिति। नोत्तरविषयापरिज्ञानात्। यद्ययं न प्रत्युच्चारयति, निर्विषयमुत्तरं प्रसज्यते। अथोत्तरं ब्रवीति? कथं नोच्चारयति? तदिदं व्याहतमुच्यते, नोच्चारयति, उत्तरं च ब्रवीतीति। अप्रतिज्ञानाच्च। नेदं प्रतिज्ञायते पूर्वमुच्चारयितव्यम्, पश्चादुत्तरमभिधेयम्। अपि तु यथाकथञ्चिदुत्तरं वक्तव्यम्। उत्तरं चाश्रयाभावे न युक्तमिति युक्तमप्रत्युच्चारणं निग्रहस्थानमिति॥१६॥

**अविज्ञातं चाज्ञानम्॥५।२।१७॥**

स्फुटं **भाष्ये**। अप्रतिपत्तितो निग्रहस्थानम्॥१७॥

**उत्तरस्याप्रतिपत्तिरप्रतिभा॥५।२।१८॥**

श्लोकादिपाठादिभिरवज्ञां दर्शयन्नोत्तरं प्रतिपद्यत इति। तदप्रतिभा नाम निग्रहस्थानम्, मूढत्वादिति॥१८॥

**कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥५।२।१९॥**

यत्र कर्तव्यं कार्यं व्यासज्य कथां विच्छिनत्ति, स विक्षेपो विज्ञेयः। यथा रसालया मया भुक्तम्, प्रतिश्यायकणो मे कण्ठं क्षिणोतीत्येवमादि। तत् कथं निग्रहस्थानम्? अज्ञाननिगूहनार्थं तु प्रत्युक्तमज्ञानमेव परिहारेणाविष्करोति ॥१९॥

॥उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम्॥

## [ दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम् ]

**स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥५।२।२०॥**

यः परेण चोदितं दोषमनुद्धृत्य भवतोऽप्ययं समानो दोष इति ब्रवीति सा मतानुज्ञा परमतं स्वमतेऽनुजानाति। उदाहरणं भवांश्चौरः पुरुषत्वादिति, स तं प्रति ब्रूयात् भवानपीति। सोऽभ्युपगम्य दोषं परपक्षेऽभ्यनुजानातीति निगृहीतो वेदितव्यः। अनभ्युपगच्छता न पुरुषत्वं चौर्यहेतुरिति वक्तव्यम्। किं तु परस्वेनानतिसृष्टेन संबन्धः। एतदुत्तरापरिज्ञानात् निगृह्यत इति।

प्रसङ्गविधानात् न निग्रहस्थानमित्यन्ये। अपरे तु ब्रुवते नैतत् निग्रहस्थानं प्रसङ्गविधानात्। नैवासौ पश्चादपि तं दोषं प्रतिपद्यते। अपि तु प्रसङ्गं करोति। यदि पुरुषत्वाच्चौरो भवति, भवानपि पुरुषः, तस्मात् चौर इति। एतत् तु नात एव। यत एवायमुत्तरे वक्तव्ये प्रसङ्गं करोति, अत एवोत्तरापरिज्ञानान्निगृह्यत इति ॥२०॥

**निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्॥५।२।२१॥**

यो निग्रहस्थानप्राप्तं न निगृह्णाति स निगृहीतो वेदितव्यः, निग्रहस्थानप्राप्तस्यापरिज्ञानात्। नान्यवचनादित्य**न्ये**। अन्ये ब्रुवते नेदं निग्रहस्थानम् अन्यस्योत्तरस्याभिधानात्। यस्मादसौ निग्रहस्थानप्राप्तं न निगृह्णाति ब्रुवन्नन्यदुत्तरमभिधत्त इति। तच्च नात एव। यत एवासौ निग्रहस्थाने वक्तव्ये अन्यदभिधत्तेऽत एव निगृह्यते, जानानो ह्यसौ किमर्थमन्यद् ब्रवीति॥२१॥

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥५।२।२२॥**

अनिग्रहस्थान एवाभिधत्ते निगृहीतोऽसीति। एतन्निग्रहस्थानापरिज्ञानात् निग्रहस्थानमिति॥२२॥

॥दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम्॥

## [ कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ]

**सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥५।२।२३॥**

अस्योदाहरणं स्फुटं **भाष्ये**। प्रतिज्ञातार्थव्यतिरेकेणाभ्युपेतार्थपरित्यागात् निगृह्यत इति॥२३॥

**हेत्वाभासाश्च यथोक्ताः ॥५।२।२४॥**

यथैव विभक्ता लक्षणेन, तथैव तेषां निग्रहस्थानभाव इति।

त इमे प्रमाणादय उद्दिष्टाः प्रथमसूत्रे, लक्षिताः प्रथमेऽध्याये, परीक्षिताः शेषेष्विति त्रिविधा[1] तन्त्रस्य[2] परिसमाप्तिरुक्ता वेदितव्येति ॥२४॥

॥कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ॥

जातीनां सप्रपञ्चानां निग्रहस्थानलक्षणम्।
शास्त्रस्य चोपसंहारः पञ्चमे परिकीर्तितः॥
यदक्षपादप्रतिमो[3] भाष्यं वात्स्यायनो जगौ
अकारि महतस्तस्य भारद्वाजेन वार्त्तिकम्॥

॥इति न्यायवार्त्तिके पञ्चमाध्यायस्य द्वितीयाह्निकम्॥

॥पञ्चमाध्यायः समाप्तः॥

॥श्रीपरमर्षिभारद्वाजपाशुपताचार्यश्रीमदुद्द्योतकरकृतं
न्यायवार्त्तिकं समाप्तम्॥

१. शेषेण त्रिधा J २. तत्त्वस्य C ३. प्रतिभो C

# विशिष्टनामसूची

# अवतरणसूची